TRIVANDRUM SANSKRIT SERIES

No CXL.

Śrī Citrodayamañjarī

No. XXIX.




# सरस्वतीकण्ठाभरणम् ।

# SARASVATĪKAṆṬHĀBHARAṆA

## Part III.

EDITED BY

K. SĀMBAŚIVA ŚĀSTRĪ,

*Curator of the Department for the Publication of Oriental Manuscripts, Trivandrum.*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJA OF TRAVANCORE.

TRIVANDRUM: PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS, 1938.

## अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १४०.

श्रीचित्रोदयमञ्जरी

ग्रन्थाङ्कः २९.

---

श्रीभोजदेवप्रणीतं

# सरस्वतीकण्ठाभरणं

श्रीनारायणदण्डनाथविरचितया

हृदयहारिण्याख्यया वृत्त्या

समेतं

पौरस्त्यग्रन्थप्रकाशनकार्याध्यक्षेण

के. साम्बशिवशास्त्रिणा

संशोधितम् ।

---

**तृतीयचतुर्थाध्यायौ ।**


तच्च

अनन्तशयने

महोन्नतमहामहिमश्रीचित्रावतारमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशितम् ।

---

कोळम्बाब्दाः ११९३. क्रैस्ताब्दाः १९३८.

॥ श्रीः ॥

श्रीमूलावनिपालमौलिमणिना सङ्कल्पितश्रीरिव
श्रीमूलात्मजनिस्तथा सहजया लक्ष्म्या च सम्भावितः।
स्वातिज्योतिरिवादितः समुदितंश्चित्रावतारः स्वयं
मार्ताण्डाग्रसरो विराजति महाराजः स रामाभिधः॥

भास्वद्वर्णमणिः प्रवालमृदुला श्रुत्याद्यलङ्कारिणी
श्रीमद्वञ्चिवसुन्धरानवयशोराशिप्रकाशात्मिका।
उत्फुल्लत्सुकृतिप्रसाधनधृतामोदोन्नदड्डिण्डिमा
श्रीचित्रोदयमञ्जरी सुमनसां सर्वस्वमुज्जृम्भताम्॥

के. साम्बशिवशास्त्री.

# PREFACE.

This is the third part of Bhojadeva's Sarasvatīkaṇṭhābharaṇa with the Vṛtti of Daṇḍanātha. It comprises chapters 3 and 4 in their entirety embodying four *pādās* apiece. The third chapter deals with *Vibhakti*, *Samāsa* and *Strīpratyaya* respectively and the fourth with a portion of *Taddhita*. The commentary is of marked interest inasmuch as it furnishes a wholesome innovation aiming as it does at a compendious collection of all correct forms of expression. The commentator has successfully silenced the opposition put forward by many grammarians in the discussion on subtle points. To cite but one instance, he has ably established the correctness and propriety of using the word *Citran* in the same sense as *Caitran*, signifying a person born under the asterism of *Citra*, as is evident from the following passage :—

वत्सशालाभिजिदश्वयुङ्मृगशिरीश्वन्नारेवतीरोहिणीभ्यो वा ॥ १३० ॥ वत्सशालादिभ्यस्तत्र जात इत्येतस्मिन्नर्थे संज्ञायामुत्पन्नस्याण्प्रत्ययस्य लुग् वा भवति । वत्सशालः । वात्सशालः । चित्रः । चैत्रः । २३५, २३६.

The details demanding minute research and investigation shall be dwelt upon at length in my prefatorial note to the last volume of this work I deem myself fortunate in having been able to bring this work to light for the benefit of literary enthusiasts who are desirous of getting a comprehensive grasp of all correct forms of expression.

Trivandrum,<br>24-12-1113.

K. SĀMBAŚIVA ŚASTRĪ.

॥ श्रीः ॥

## निवेदना ।

---

तृतीयोऽयं भागः सरस्वतीकण्ठाभरणस्य श्रीभोजदेवरचितस्य दण्डनाथवृत्तिसनाथस्य । अत्र तृतीयतुरीयावध्यायौ प्रत्येकं पादचतुष्टय्या परिपुटितौ परिपूर्णौ । यथाक्रमं तृतीये विभक्ति-समास-स्त्रीप्रत्ययाः, तुरीये तद्धितैकदेशश्च अन्तर्भवन्ति । इयमसौ पद्धतिरभिनवा दण्डनाथवृत्तेर्भोजसूत्रानुगृहीतायाः, यत्र यावत्सम्भवं समे सुशब्दा निर्मत्सरं सङ्गृह्यन्ते । चित्रायां जात इत्यर्थे चैत्रमिव चित्रमनभ्युपगच्छन्तो बहवो वैयाकरणा अनेन साधितमौनाः प्रसाधिताः । तथाहि—

"वत्सशालाभिजिदश्वयुङ्मृगशिरश्चित्रारेवतीरोहिणीभ्यो वा ।"

(अध्या० ४. पा० ३. सू० १३०)

वत्सशालादिभ्यस्तत्र जात इत्येतस्मिन्नर्थे संज्ञायामुत्पन्नस्याण्प्रत्ययस्य लुग् वा भवति । वत्सशालः । वात्सशालः । .... .... .... .... चित्रः । चैत्रः .... .... ... ॥"

सुबहु विविच्य निरूपणीयमखिलमवशेषं परिसमाप्तौ भविता । सद्यस्तादिदमाभरणं साधुशब्दसमुच्चिकीर्षूणाम् अविलम्बं धारणायावतारयामि धन्यधन्यः ॥

अनन्तशयनम्,
२४-१२-११२.

के. साम्बशिवशास्त्री.

---

॥ श्रीः ॥

श्रीभोजदेवप्रणीतं

# सरस्वतीकण्ठाभरणं

श्रीनारायणदण्डनाथविरचितया

हृदयहारिण्याख्यया

वृत्त्या सनाथम् ॥

(तृतीयो भागः ।)

---

## अथ तृतीयोऽध्यायः ।

लस्तिप्तसूझिसिप्थसूथमिब्वस्मसूतातांझथासाथांध्वमिड्वहिमहिङ् ॥ १ ॥

ल इत्यनेनोत्सृष्टानुबन्धविशेषाणां लडादीनां दशानामपि सामान्यमुच्यते । तस्य स्थाने तिबित्यादयोऽष्टादशादेशा भवन्ति । तिप्सिप्मिपां पकारः पित्कार्यार्थः । 'कटप्य .......... टोऽदि'ति विशेषणार्थः । महिङो ङकारस्तिङिति प्रत्याहारग्रहणार्थः । पचति पचतः पचन्ति । पचसि पचथः पचथ । पचामि पचावः पचामः । पचते पचेते पचन्ते । पचसे पचेथे पचध्वे । पचे पचावहे पचामहे । एवमन्येष्वपि लकारेषूदाहार्यम् ॥

अत आत इत् ॥ २ ॥

तेषां तिबादीनामाकारस्य अकारात् परस्य इकार आदेशो भवति । पचेते पचेथे पचेताम् । अत इति किम् । ददाते । प्रकृतग्रहणादिह न भवति । पचानि ॥

झोऽन्तः ॥ ३ ॥

तिबादीनां झकारस्यान्त इत्ययमादेशो भवति । पचन्ति । पचन्ते । पचन्तु । पचन्ताम् ॥

G. P. T. 324. 500. 16-4-1112. B

अदभ्यस्तात् ॥ ४ ॥

'द्वयमभ्यस्तं' 'जक्षादयश्चाशास' इत्युक्तं, तस्मात् परस्य तिबादिसम्बन्धिनो झस्य अदित्ययमादेशो भवति । अ(न्त्य ? न्त)स्यापवादः । ददति । जक्षति । जाग्रति । दरिद्रति । चकासति ॥

आत्मनेपदेष्वनतः ॥ ५ ॥

आत्मनेपदेषु यो झकारस्तस्यानकारादुत्तरस्यादादेशो भवति । ददते दधते लुनते जानते । अनत इति किम् । पचन्ते ॥

शीङो रत् ॥ ६ ॥

शीङः परस्यात्मनेपदझकारस्य रदादेशो भवति । शेरते अशेरत ॥

वेत्तेर्वा ॥ ७ ॥

वेत्तेः परस्यात्मनेपदसम्बन्धिनो झकारस्य रदादेशो वा भवति । संविद्रते संविदते । आत्मनेपद इति किम् । विदन्ति ॥

लिट इरेच् ॥ ८ ॥

लिडादेशस्यात्मनेपदझकारस्येरेजादेशो भवति । पेचिरे । लेभिरे । 'लिट्यनादेशादेरेकहल्मध्येऽत' इत्येत्वम् । चकारः स्वरार्थः ॥

तस्यैश् ॥ ९ ॥

लिडादेशस्यात्मनेपदसम्बन्धिनस्तशब्दस्य एशादेशो भवति । पेचे । लेभे । शकारः सर्वादेशार्थः ॥

परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ॥ १० ॥

लिडादेशानां परस्मैपदानां तिबादीनां नवानां यथासङ्ख्यं णलादयो नवादेशा भवन्ति । पपाच पेचतुः पेचुः । पपक्थ पेचथुः पेच । पपाच पेचिव पेचिम । णकारो वृद्ध्यर्थः । लकारः स्वरार्थः ॥

वेत्तेर्लटो वा ॥ ११ ॥

वेत्तेः परेषां लडादेशानां परस्मैपदानां तिबादीनां नवानां यथासङ्ख्यं णलादयो नवादेशा भवन्ति । वेद विदतुः विदुः । वेत्थ विदथुः विद ।

वेद विद्व विद्म । नच भवन्ति । वेत्ति वित्तः विदन्ति । वेत्सि वित्थः वित्थ । वेद्मि विद्वः विद्मः । लट इति किम् । विवेद इत्यादि लिटो नित्यमेव ॥

ब्रुवः पञ्चानां पञ्चादितो ब्रुवश्चाहः ॥ १२ ॥

ब्रुवः परेषां लडादेशानां परस्मैपदानामाद्यानां पञ्चानां यथासङ्ख्यं णलादय आद्याः पञ्चादेशा(न्न ? वा) भवन्ति । तत्सन्नियोगेन ब्रुवः स्थाने आहेत्ययमादेशो भवति । आह आहतुः आहुः । आत्थ आहथुः । ब्रवीति ब्रूतः ब्रुवन्ति । ब्रवीषि ब्रूथः । पञ्चानामिति किम् । ब्रूथ । ब्रवीमि । आदित इति किम् । परेषां मा भूत् । सन्नियोगः किम् । णलाद्यभावे आहादेशोऽपि मा भूत् । ब्रुव इति पुनर्वचनं स्थानिनिर्देशार्थम् । अन्यथा परस्मैपदानामेव स्यात् ॥

आत औ णलः ॥ १३ ॥

आकारान्ताद् धातोरुत्तरस्य णल औकारादेशो भवति । पपौ । तस्थौ ॥

टिदात्मनेपदानां टेरेत्[1] ॥ १४ ॥

टिल्कारसम्बन्धिनामात्मनेपदानां टेरन्त्याजादेः स्थाने एकारादेशो भवति । पचते पचेते पचन्ते । पचसे पचेथे पचध्वे । पचे पचावहे पचा-महे । एवं लकारा(न्ते ? न्तरे)ष्वपि । टिद्ग्रहणं किम् । अपचत अपचेताम् अपचन्त । आत्मनेपदानामिति किम् । पचति पचतः । प्रकृतानामात्मने-पदानां ग्रहणादिह न भवति । पचमानः (पेच ? यज)मानः ॥

थासः से ॥ १५ ॥

टिदात्मनेपदस्य थासः से इत्ययमादेशो भवति । पचसे । पेचिषे । पक्तासे । पक्ष्यसे ॥

लुटः प्रथमयोर्डारौरसः ॥ १६ ॥

लुटः सम्बन्धिनोः प्रथमपुरुषयोः पृथक् पृथग् यथासङ्ख्यं डारौरस आदेशा भवन्ति । पक्ता पक्तारौ पक्तारः । अध्येता अध्येतारौ अध्येतारः । डित्करणं टिलोपार्थम् । तस्यै(श्) 'थासः से' इति कृतैत्त्वयोर्निर्देशादात्मने-पदडारौरसां टेरेत्वं न भवति ॥

---

१. 'रे ॥' ख. पाठः.

लोट एरुः ॥ १७ ॥

लोट्सम्बन्धिन इकारस्योकारादेशो भवति। पचतु पचन्तु। पुनीहि पचानीत्यत्रोच्चारणसामर्थ्यान्न भवति ॥

सेर्हिङ् ॥ १८ ॥

लोडादेशस्य सिपो हिङादेशो भवति। लुनीहि जुहुधि। ङकारो गुणनिषेधार्थो नान्त्यादेशार्थः। अन्यथा हि लोट एरित्यनुवृत्तेर्ङकारमेव न कुर्यात् ॥

आशिषि तुह्योस्तातङ् वा ॥ १९ ॥

आशिषि यो लोट् तत्सम्बन्धिनस्तोर्हेश्च तातङादेशो भवति* ॥

मेरानिः ॥ २० ॥

आमेतः ॥ २१ ॥

पचतां पचेतां पचन्ताम्। पचेथाम् ॥

सवाभ्यां वामौ ॥ २२ ॥

लोडादेशसम्बन्धि(नः एका)रस्य सवाभ्यां परस्य यथासङ्ख्यं व अम् इत्येतावादेशौ भवतः। पचस्व। पचध्वम् ॥

इडादीनामैप् ॥ २३ ॥

लोट्सम्बन्धिनामिडादीनामेत ऐप् भवति। करवै करवावहै करवामहै। पकारः पित्कार्यार्थः ॥

वमादीनां टाप् ॥ २४ ॥

लोट्सम्बन्धिनां वकारमकारा(दीना)मादेशानां टावागमो भवति। करवाव करवाम। करवावहै करवामहै। पकारः पित्कार्यार्थः। टाकारो देशविध्यर्थः ॥

तस्थस्थवमसां तांतं तवमाः ॥ २५ ॥

लोडादेशानां तसादीनां यथासङ्ख्यं तामादय आदेशा भवन्ति। पचताम्। पचतम्। पचत। पचाव। पचाम ॥

---

* अस्योदाहरणं, समनन्तरसूत्रयोर्यथायथं वृत्त्यादिकं च मातृकायां गलितम्।

ङितश्च ॥ २६ ॥

ङितश्च लस्सम्बन्धिनां तसादीनां तामादय आदेशा भवन्ति । अपचताम् । अपचतम् । अपचत । अपचाव । अपचाम* ॥

इतो लोपः परस्मैपदानाम् ॥ २७ ॥

मिपोऽम् ॥ २८ ॥

लिङो यासुट् ङिच्च ॥ २९ ॥

किदाशिषि ॥ ३० ॥

सीयुडात्मनेपदानाम् ॥ ३१ ॥

झस्य रन् ॥ ३२ ॥

इटोऽत् ॥ ३३ ॥

सुट्तथोः ॥ ३४ ॥

सो लोपोऽनन्त्यस्यानाशिषि ॥ ३५ ॥

अतो य इय् ॥ ३६ ॥

झेर्जुस् ॥ ३७ ॥

सिचः ॥ ३८ ॥

लुक्यभुवः ३९ ॥

विदभ्यस्ताभ्यां लिङः ॥ ४० ॥

द्विषाद्भ्यो वा ॥ ४१ ॥

आत्मनेपदानि भावकर्मणोः ॥ ४२ ॥

कर्मसम्बन्धरहितेभ्योऽस्तिभवत्यादिभ्यो भावे लादयः तदा कर्मणः कर्तृत्व नास्ति । यदाप्यविरुद्धकर्मसम्बन्धेभ्यः करोतिपचत्यादिभ्यस्ते भावे

* इत उपरि १६ सूत्राणां वृत्त्यादिकं मातृकायां गलितम् ।

क्रियन्ते तदापि शब्दशक्तिस्वाभाव्यादुत्पन्नक्रमसाध्यरूपा बहिर्मुखभाव ....
... ग्राभिधानपर्यवसितशक्तयो बहिःकर्मसम्बन्धा .......... योगे धातु-
स्तत्र शेषे प्रथमा भवति । क्रियते भवता । पच्यते भवता । कर्तव्यं
भवता । कृतं भवता । सुप्तं भवता । यदि वचनान्तरेणैषां कर्मसम्बन्धे भावे
विधानं निषिध्यते तदा आसमास्यते । गोदोहं स्थीयते । कर्मणा ... ...पि
सम्बन्धे भावे लादयो नोत्पद्येरन् । भावस्य च साध्यत्वेनासत्त्वाभावात्
ततः कर्तृकर्मणि सत्त्वस्वभावे व्यावर्तमाने स्वधर्मेण युष्मदस्मदौ मध्यमो-
त्तमहेतू गृहीत्वा व्यावर्तेते । तेन प्रथमपुरुष एव भवति । तत्राप्यसत्त्व-
स्वभावे भावे सङ्ख्यायोगो नास्तीत्यौत्सर्गिकमेकवचनमेव भवति । पाकं
पाकौ । पाकं करोतीत्यादौ पुन'रनव्ययकृदभिहितो भावो द्रव्यवत्
प्रकाशत' इति सङ्ख्यया लिङ्गेन शक्तिभिश्च युज्यते । तिङव्ययाभिहि-
तस्तु भावोऽसत्त्वभावान्न युज्यत इति । कथं तर्हि उष्ट्रासिका आस्यन्ते
हतशायिकाः शय्यन्त इति बहुवचनम् । कृदभिहितेन भावेनाभेदोपचारात् ।
तथाहि — अमूभ्यां वाक्याभ्यां सामान्यविशेषरूपो भावात्मैव प्रत्याय्यते ।
आख्याताभ्यां सामान्यरूपः ण्वुलन्ताभ्यां विशेषरूप इति । तत्र विशेषगतं
बहुत्वं सामान्ये समारोप्य कुत्सातिशयार्थं बहुवचनं प्रयुज्यते । तेनो-
ष्ट्रासिका इवासनानि । हतशायिका इव शयनानि क्रियन्ते भवन्तीति
वाक्यार्थः ॥

कर्मकर्तरि च ॥ ४३ ॥

कर्मकर्तरि चात्मनेपदानि भवन्ति । भिद्यते कुसूलः स्वयमेव । दुग्धे
गौः स्वयमेव । पच्यते उदुम्बरफलमिति ॥

कर्तर्यात्मनेभाषेभ्यः ॥ ४४ ॥

आत्मनेभाषेभ्य एव धातुभ्यः कर्तर्यात्मनेपदानि भवन्ति । एधते ।
स्पर्धते ॥

ङितः ॥ ४५ ॥

क्यङाद्यन्ता धातवो ङितः । तेभ्यः कर्तर्यात्मनेपदानि भवन्ति ।
श्येनायते । पापच्यते ॥

क्रियाव्यतिहारे ॥ ४६ ॥

क्रियाया विनिमयो व्यतिहारः । तद्विशिष्टेऽर्थे वर्तमानाद्धातोः कर्तर्यात्मनेपदानि भवन्ति । व्यतिलुनते । .... .... ... .... ....
व्यतिहार इति किम् । लुनन्ति । क्रियाग्रहणं किम् । देवदत्तस्य धान्यं व्यतिलु(न?ना)तीति द्रव्यव्यतिहारे न भवति ॥

न *गतिहिंसाशब्दार्थहसिभ्योऽहृवहिभ्यः ॥ ४७ ॥

हृवहिवर्जितेभ्यो हिंसार्थगत्यर्थशब्दार्थेभ्यो हसेश्च क्रियाव्यतीहारे आत्मनेपदानि न भवन्ति । व्यतिगच्छन्ति । व्यतिघ्नन्ति । व्यतिजल्पन्ति । व्यतिहसन्ति । अहृवहिभ्य इति किम् । व्यतिहरन्ते । व्यतिवहन्ते ॥

इतरेतरान्योन्यपरस्परोपपदाच्च ॥ ४८ ॥

इतरेतराद्युपपदाच्च धातोः क्रियाव्यतीहारे आत्मनेपदानि न भवन्ति । इतरेतरस्य व्यति(हर? लुन)न्ति । (अन्योन्यस्य), व्यतिलुनन्ति । परस्परस्य व्यतिलुनन्ति ॥

नेर्विशः ॥ ४९ ॥

नेरुपसर्गात् परस्माद् विशेः कर्तर्यात्मनेपदानि भवन्ति । निविशते । न्यविक्षतेत्यादावटो धातुभक्तत्वात् तद्व्यवधानेऽपि भवति । 'मधुनि विशन्ति भ्रमरा' इत्यादौ निविश्योरसम्बन्धान्न भवति ॥

परिव्यवेभ्यः क्रियः ॥ ५० ॥

(पर्यादिभ्य) उपसर्गेभ्यः (परस्य) क्रीणातेः कर्तर्यात्मनेपदानि भवन्ति । परिक्रीणीते । विक्रीणीते । अवक्रीणीते । फलवतोऽन्यत्रायं विधिः ॥

विपराभ्यां जेः ॥ ५१ ॥

विपराभ्यामुपसर्गाभ्यां परस्य जयतेः कर्तर्यात्मनेपदानि भवन्ति । विजयते । पराजयते ॥

---

*वृत्त्यनुसारेण तु 'गतिहिंसे'त्यंशस्य व्यत्ययेन पाठः स्यात् ।

आङो दः ॥ ५२ ॥

आङ्पूर्वाद् ददातेरात्मनेपदानि भवन्ति । विद्यामादत्ते । धनमादत्ते । फलवतोऽन्यत्रायं विधिः । दाञ एवाङ्योगादन्यस्य दारूपस्य ग्रहणं न भवति ॥

न विकासस्वास्यप्रसारणयोः ॥ ५३ ॥

विकासे स्वास्यप्रसारणे च वर्तमानादाङ्पूर्वाद् ददातेरात्मनेपदानि न भवन्ति । कूलं व्याददाति, विकासयतीत्यर्थः । उष्ट्रो मुखं व्याददाति । स्वग्रहणं किम् । व्याददते पिपीलिकाः पतङ्गस्य मुखम् ॥

गमेः कालहरणे ॥ ५४ ॥

गमेर्ण्यन्तादाङ्पूर्वात् कालहरणे वर्तमानात् कर्तर्यात्मनेपदानि भवन्ति । आगमयस्व तावत् । तावत् कञ्चित्कालमित्यर्थः । कालहरण इति किम् । ग्रामं गमय ॥

नुप्रच्छः ॥ ५५ ॥

आङ्पूर्वान्नौतेः प्रच्छेश्च कर्तर्यात्मनेपदानि भवन्ति । आनुते सृगालः । आपृच्छते ॥

क्रीडोऽनुपरिभ्यां च ॥ ५६ ॥

अनुपरिभ्यामाङश्च परात् क्रीडतेर्धातोः कर्तर्यात्मनेपदानि भवन्ति । अनुक्रीडते । परिक्रीडते । आक्रीडते । माणवकमनु क्रीडतीत्यादेः कर्मप्रवचनी(यस्यानोः) क्रीडतिना सम्बन्धाभावान्न भवति ॥

समोऽकूजने ॥ ५७ ॥

समः परात् क्रीडतेरकूजनेऽर्थे वर्तमानात् कर्तर्यात्मनेपदानि भवन्ति । सङ्क्रीडते । सङ्क्रीडमानः । अकूजन इति किम् । सङ्क्रीडन्ति शकटानि ॥

शकेः सनो जिज्ञासायाम् ॥ ५८ ॥

शकेर्ज्ञानसहितार्थात् सन्नन्तात् कर्तर्यात्मनेपदानि भवन्ति । शकिः स्वभावादन्य(था ? धात्व)र्थ(विषय)त्वेन शक्तितः प्रवर्तते, शक्नोति भोक्तुम-

(द्वे ? द्ये)ति । विद्यां शिक्षते । ज्ञातुं शक्नुयामितीच्छतीत्यर्थः । जिज्ञासायामिति किम् । शक्तुमिच्छति । 'शिक्ष(तेर्वि ? वि)द्योपादान' इत्यनेनैव सिद्धे आमनुप्रयोगार्थं वचनम् । तेन शिक्षाञ्चक्र इति भवति, न तु शिक्षाञ्चकारेति ॥

अप[1]स्किरः ॥ ५९ ॥

अपपूर्वात् किरतेः ससुट्कात् कर्तर्यात्मनेपदानि भवन्ति । अपस्किरते वृषभो हृष्टः । अपस्किरते कुक्कुटो भक्षार्थी । अपस्किरते श्वा निवासार्थी । अपपूर्वस्य किरतेर्हर्षजीविकाकुलायकरणविषयस्य सुट् स्मर्यते । ससुट्कनिर्देशः किम् । अ(पा ? प)किरति ॥

हृञो गत[2]ताच्छील्ये ॥ ६० ॥

गतं प्रकारः सादृश्यमनुकरणमित्येकोऽर्थः । तच्छीलमस्य तच्छीलः, तस्य भावस्ताच्छील्यम् । उत्पत्तेः प्रभृत्याविनाशान् तत्स्वभावता । हरतेरनुकरणेऽर्थे वर्तमानात् तच्छीले कर्तर्यात्मेनेपदानि भवन्ति । कदा पुनर्हरतिरनुकरणे वर्तते । यदानुपूर्वी भवति । पैतृकमश्वा अनुहरन्ते । मातृकं गावोऽनुहरन्ते । पितुरागतं मातुरागतं सादृश्यमविच्छेदेन शीलयन्तीत्यर्थः । एवं पितुरनुहरन्ते मातुरनुहरन्ते । पितरमनुहरन्ते मातरमनुहरन्ते । गतग्रहणं किम् । पितुर्हरति मातुर्हरति । ताच्छील्य इति किम् । नटो राममनुहरति, नियुक्तो राजानमनुहरति, इन्द्रो गौतममनुहरति इत्यादावसातत्ये न भवति । नटः कञ्चिदेव कालं राममनुकरोतीति न ताच्छील्यम् । अन्ये तु गतशब्देन गतिमाचक्षते । गतौ ताच्छील्यं गतताच्छील्यमिति । तत्र पैतृकमश्वा अनुहरन्ते । पितुरागतं गमनमविच्छेदेन शीलयन्तीत्यर्थः । गतताच्छील्य इति किम् । धर्मान्तरेण पितरमनुहरति ॥

आशिषि नाथः ॥ ६१ ॥

नाथतेरात्मनेभाषादाशिष्येव गम्यमानायां कर्तर्यात्मनेपदानि भवन्ति । .... .... .... ....

शपः शपथे ॥ ६२ ॥

---

१. 'व', २. 'ति' ख. पाठः.

... .... .... देवदत्ताय शपते । शपथ इति किम् । देवदत्तं शपति ॥

स्थः प्रतिज्ञानिर्णयप्रकाशनेषु ॥ ६३ ॥

तिष्ठतेर्धातोः प्रतिज्ञायां निर्णये प्रकाशने च वर्तमानात् कर्तर्यात्मनेपदानि भवन्ति । नित्यं शब्दमातिष्ठते । अस्तिसकारमातिष्ठते । प्रतिजानीत इत्यर्थः । त्वयि तिष्ठते मयि तिष्ठते । 'संशय्य कर्णादिषु तिष्ठते यः' । संशयानः कर्णादीन् न्यायायोपतिष्ठन् निर्णयतीत्यर्थः । तिष्ठते कन्या छात्रेभ्यः, आत्मानं प्रकाशयतीत्यर्थः ॥

समवप्रविभ्यश्च ॥ ६४ ॥

समाद्युपसर्गेभ्यश्च परात् तिष्ठतेः कर्तर्यात्मनेपदानि भवन्ति । संतिष्ठते । अवतिष्ठते । प्रतिष्ठते । वितिष्ठते ॥

उदोऽनूर्ध्वचेष्टायाम् ॥ ६५ ॥

उदः परात् तिष्ठतेरनूर्ध्वचेष्टायां गम्यमानायां कर्तर्यात्मनेपदानि भवन्ति । मुक्तावुत्तिष्ठते । अनूर्ध्व इति किम् । आसनादुत्तिष्ठति । चेष्टायामिति किम् । अस्माच्छतमुत्तिष्ठति । उत्पद्यत इत्यर्थः ॥

उपाद् देवपूजासङ्गतिकरणमित्रकरणेषु[1] ॥ ६६ ॥

उपात् परस्मात् तिष्ठतेर्देवपूजादिष्वर्थेषु वर्तमानात् कर्तर्यात्मनेपदानि भवन्ति । आदित्यमुपतिष्ठते । पूजयतीत्यर्थः । रथिकानुपतिष्ठते । उपश्लिष्यतीत्यर्थः । (महामात्रानुपतिष्ठते । मित्रीकरोतीत्यर्थः ।)

पथिकर्तृकात् ॥ ६७ ॥

उपपूर्वात् तिष्ठतेः पथिकर्तृकेऽर्थे वर्तमानात् कर्तर्यात्मनेपदानि भवन्ति । अयं पन्थाः स्रुघ्नमुपतिष्ठते ॥

मन्त्रकरणात् ॥ ६८ ॥

उपपूर्वात् तिष्ठतेर्मन्त्रकरणार्थात् कर्तर्यात्मनेपदानि भवन्ति । ऐन्द्र्या गार्हपत्यमुपतिष्ठते । सावित्र्या सूर्यमुपतिष्ठते । मन्त्रकरणादिति किम् ।

---

१. 'षु च ।' ख. पाठः.

अश्वेनोपतिष्ठति राजानम् । करणग्रहणादिह न भवति—सावित्रीमुपतिष्ठति ॥

वा लिप्सायाम् ॥ ६९ ॥

उपपूर्वात् तिष्ठतेर्लिप्साविषयेऽर्थे वर्तमानात् कर्तर्यात्मनेपदानि वा भवन्ति । भिक्षुको ब्राह्मणकुलमुपतिष्ठते उपतिष्ठति वा । भिक्षां लभत इति ॥

अकर्मकात् ॥ ७० ॥

उपपूर्वात् तिष्ठतेरकर्मकात् कर्तर्यात्मनेपदानि भवन्ति । भोजनकाल उपतिष्ठते ॥

समो गम्यृच्छिप्रच्छिस्वृश्रुवेत्त्यर्त्तिदृशिभ्यः ॥ ७१ ॥

समः परेभ्यो गमादिभ्योऽकर्मके(भ्यः) कर्तर्यात्मनेपदानि भवन्ति । सङ्गच्छते । समृच्छते । सम्पृच्छते । संस्वरते । संशृणुते संवित्ते । समरन्त । सम्पश्यते । अकर्मकादिति किम् । सङ्गच्छति ह्रदम् ॥

उपसर्गादस्यत्यूहिभ्यां वा ॥ ७२ ॥

उपसर्गात् पराभ्यामस्यत्यूहिभ्यां कर्तर्यात्मनेपदानि वा भवन्ति । विपर्यस्यते विपर्यस्यति । (समूहते समूहति ।) अकर्मकादिति किम् । निरस्यति शत्रून् । समूहते पदार्थान् । केचिदिहाकर्मकादिति न सम्बन्धयन्ति । तेन 'संहरत....तिमिरं निरासे' । 'यशः समूहन्निव दिक्षु कीर्णम्' इत्याद्यपि सिद्धं भवति ॥

आङो यमहनः स्वाङ्गकर्मकाच्च ॥ ७३ ॥

आङः पराभ्यां यमिहनिभ्यामकर्मकाभ्यां स्वाङ्गकर्मकाभ्यां च कर्तर्यात्मनेपदानि भवन्ति । आयच्छते । आहते उरः । अकर्मकादिति किम् । आयच्छति कूपाद् रज्जुम् । आहन्ति पादेन वृषलम् । स्वमङ्गं स्वाङ्गं, तेनेह न भवति — देवदत्तो यज्ञदत्तस्य पाणिमाहन्ति ॥

उद्विभ्यां तपः ॥ ७४ ॥

उद्विभ्यां परात् तपेरकर्मकात् स्वाङ्गकर्मकाच्च कर्तर्यात्मनेपदानि भवन्ति। (उत्तपते। वितपते)॥

तपःकर्मकाच्च ॥ ७५ ॥

तप्यते तपस्तापसः। आजर्यतीत्यर्थः। एवमतप्त तपस्तापसः। तेपे तपस्तापसः। अर्जितवानित्यर्थः॥

निसमुपविभ्यो ह्वः ॥ ७६ ॥

न्यादिभ्य उपसर्गेभ्यः परात् ह्वयतेः कर्तर्यात्मनेपदानि भवन्ति। निह्वयते। संह्वयते। उपह्वयते। विह्वयते॥

स्पर्धायामाङः ॥ ७७ ॥

स्पर्धा सङ्घर्षः पराभिभवेच्छा। तद्विषये वर्तमानादाङ्पूर्वात् ह्वयतेः कर्तर्यात्मनेपदानि भवन्ति। मल्लो मल्लमाह्वयते। स्पर्धमानस्तमाकारयतीत्यर्थः। स्पर्धायामिति किम्। गामाह्वयति॥

सूचनावक्षेपणसेवासाहसप्रतियत्नप्रकथनोपयोगेषु कृञः ॥ ७८ ॥

सूचनादिष्वर्थेषु करोतेः कर्तर्यात्मनेपदानि भवन्ति। सूचनमपकारबुद्ध्या परदोषोद्घाटनम्। अयमिममुदाकुरुत जिघांसुः। अपकर्तेति कथयतीत्यर्थः। अवक्षेपणमभिभवः। श्येनो वर्तिकामवकुरुते। अभिभवतीत्यर्थः। सेवा अनुवृत्तिः। महामात्रान् प्रकुरुते। सेवत इत्यर्थः। साहसमविषयप्रतिपत्तिः। परदारान् प्रकुरुते। विनिपातमभिभाव्य गच्छतीत्यर्थः। सतो गुणान्तराधानं प्रतियत्नः। एधो दकस्योपस्कुरुते। गुणान्तरमादधातीत्यर्थः। प्रकर्षेण कथनं प्रकथनम्। इतिहासान् प्रकुरुते। उपयोगो धर्मादौ विनियोगः। शतं प्रकुरुते। अफलवत्कर्तर्यारम्भः। सूचनादिष्विति किम्। कटं करोति॥

अधेः प्रसहने ॥ ७९ ॥

अधिशब्दात् कृञः प्रसहनेऽर्थे कर्तर्यात्मनेपदानि भवन्ति। प्रसहनं पराभिभवः परेणाभिभवो (वा)। तमधिचक्रे। तमभिभूतवान्। तं वा सोढवान्। प्रसहन इति किम्। तमधिकरोति॥

वेः शब्दकर्मणः ॥ ८० ॥

वेः परात् कृञः शब्दकर्मण्यर्थे वर्तमानात् कर्तर्यात्मनेपदानि भवन्ति । क्रोष्टा विकुरुते स्वरान् । शब्द इति किम् । विकरोति मृदम् । कर्मण इति (किम् ।) शब्देन* ॥

अकर्मकात् ॥ ८१ ॥

(विपूर्वादकर्मकात्) करोतेः कर्तर्यात्मनेपदानि भवन्ति । विकुर्वते सैन्धवाः । साधु दान्ताः शोभनं वल्गन्तीत्यर्थः । ओदनपूर्णाश्छात्रा विकुर्वते । निष्फलं चेष्टन्त इत्यर्थः ॥

पूजोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः ॥ ८२ ॥

पूजादिष्वर्थेषु गम्यमानेषु नयतेः कर्तर्यात्मनेपदानि भवन्ति । नयते पतञ्जलिर्व्याकरणे । पूजितं व्याचक्षाणः सम्यक् शब्दनिर्णयं करोतीत्यर्थः । माणवकमुदानयते । उत्क्षिपतीत्यर्थः । माणवकमुपनयते । आत्मानमाचार्यीकुर्वन् माणवकमध्ययनाय समीपं नयतीत्यर्थः । नयते कात्यायनो व्याकरणे । व्याख्यानेनार्थं निर्णयान्तं प्रापयतीत्यर्थः । कर्मकरानुपनयते । वेतनेन समीपं प्रापयतीत्यर्थः । मद्राः कारं विनयन्ते । विगणय्य निपातयन्तीत्यर्थः । शतं विनयन्ते । धर्माद्यर्थं पात्रादिषु प्रापयन्तीत्यर्थः । एतेष्विति किम् । अजां ग्रामं नयति । अयमफलवदर्थ आरम्भः ॥

कर्तृस्थामूर्त्तकर्मकाच्च ॥ ८३ ॥

कर्तृस्थममूर्त्तं कर्म यस्य तदर्थाच्च नयतेः कर्तर्यात्मनेपदानि भवन्ति । श्रमं विनयते । कर्तृस्थ इति किम् । देवदत्तो यज्ञदत्तस्य मन्युं विनयति । अमूर्त इति किम् । गड्डुं विनयति । कर्मेति किम् । बुद्ध्या विनयति ॥

अप्रतिबन्धोत्साहतायनेषु क्रमः ॥ ८४ ॥

---

* इत उपरि कियांश्चिद् ग्रन्थो गलितः स्यात् ।

अप्रतिबन्धादिषु यथासम्भवमर्थेषु अर्थविशेषणेषु वा सत्सु क्रमेः कर्तर्यात्मनेपदानि भवन्ति । सम्यक् तस्य क्रमते बुद्धिः । क्रामन्ती न प्रतिबध्यत इत्यर्थः । क्रमते व्याकरणाध्ययनाय, उत्सहत इत्यर्थः । प्राज्ञे शास्त्राणि क्रमन्ते । प्रतायन्त इत्यर्थः ॥

## उपपराभ्याम् ॥ ८५ ॥

उपपराभ्यामवोपसर्गाभ्यां परात् क्रमेरप्रतिबन्धादिषु सत्सु कर्तर्यात्मनेपदानि भवन्ति । उपक्रमते । पराक्रमते । उपपराभ्यामिति किम् । संक्रामति । अप्रतिबन्धादिष्वित्येव । उपक्रामति । पराक्रामति ॥

## आङो ज्योतिरुद्गमने ॥ ८६ ॥

ज्योतिरुद्गमने वर्तमानात् (आङ्पूर्वात् क्रमेः) कर्तर्यात्मनेपदानि भवन्ति । आक्रमते आदित्यः । आक्रमन्ते ज्योतींषि । ज्योतिरिति किम् । आक्रामति धूमो हर्म्यतलम् । उद्गमन इति किम् । अग्निरिन्धनमाक्रामति ॥

## वेः पादविहरणे ॥ ८७ ॥

वेः परात् क्रमतेः पादविहरणे वर्तमानात् कर्तर्यात्मनेपदानि भवन्ति । साधु विक्रमते । पादविहरण इति किम् । अश्वेन विक्रामति । विक्रामत्यजिनसन्धिः । विस्फुटतीत्यर्थः ॥

## प्रोपाभ्यामारम्भे ॥ ८८ ॥

आदिकर्माङ्गीकरणं चारम्भः । तस्मिन् वर्तमानात् प्रपूर्वादुपपूर्वाच्च क्रमेः कर्तर्यात्मनेपदानि भवन्ति । प्रक्रमते भोक्तुम् । उपक्रमते भोक्तुम् । प्रारभते अङ्गीकरोति चेत्यर्थः । आरम्भ इति किम् । (पूर्वेद्युरपरे)द्युः प्रक्रामति । गच्छत्यागच्छतीत्यर्थः ॥

## अनुपसर्गाद्वा ॥ ८९ ॥

अविद्यमानोपसर्गात् क्रमेः कर्तर्यात्मनेपदानि भवन्ति वा । क्रमते । क्रामति । अनुपसर्गादिति किम् । संक्रामति । अप्रतिबन्धादेरन्यत्रायमारम्भः ॥

## अपह्नवे ज्ञः ॥ ९० ॥

यो जानातिरपह्नवे वर्तते ततः कर्तर्यात्मनेपदानि भवन्ति। शतमपजानीते। अपह्नुत इत्यर्थः। अपह्नव इति किम्। शास्त्रं जानाति॥

अकर्मकाच्च॥ ९१॥

अकर्मकाज्जानातेः कर्तर्यात्मनेपदानि भवन्ति। सर्पिषो जानीते। प्रवृत्तिवचनोऽत्र जानातिः। सर्पिषा मधुना वा करणभूतेन ज्ञानपूर्वं प्रवर्तत इत्यर्थः। 'ज्ञोऽविदर्थस्य करणे' इति करणस्य शेषत्वविवक्षायां षष्ठी। अकर्मकादिति किम्। स्वरेण पुत्रं जानाति। अफलवदर्थोऽयमारम्भः। फलवति हि 'अनुपसर्गात् ज्ञः' इति वक्ष्यति॥

संप्रतिभ्यामनाध्याने॥ ९२॥

आध्यानं स्मृतिः। ततोऽन्यत्र वर्तमानात् संप्रतिभ्यां परात् जानातेः कर्तर्यात्मनेपदानि भवन्ति। सकर्मकार्थं वचनम्। शतं सञ्जानीते। अपेक्षत इत्यर्थः। शतं प्रतिजानीते। अभ्युपगच्छतीत्यर्थः। अनाध्यान इति किम्। मातुः सञ्जानाति। स्मरतीत्यर्थः॥

भासनोपसान्त्वनज्ञानयत्नोपमन्त्रणेषु वदः॥ ९३॥

भासनादिविशिष्टेऽर्थे वर्तमानाद् वदेः कर्तर्यात्मनेपदानि भवन्ति। भासनं दीप्तिः। वदते चार्वो लोकायते। दीप्यमानो ब्रूत इत्यर्थः। उपसान्त्वनमुपच्छन्दनम्। कर्मकरानुपवदते। मधुरालापैः उपच्छन्दयतीत्यर्थः। ज्ञानमवबोधः। वदते पाणिनिर्व्याकरणे। जानन् व्याचष्टे इत्यर्थः। यत्न उत्साहः। गेहे वदन्ते। प्रोत्साहं भाषन्त इत्यर्थः। उपमन्त्रणं रहस्युपभाषा। परदारानुपवदते। रहस्युपसम्भाषत इत्यर्थः। एतेष्विति किम्। यत्किञ्चिद् वदति॥

अनुसंभ्यामकर्मकात्॥ ९४॥

अनुसंभ्यां पराद् वदेरकर्मकात् कर्तर्यात्मनेपदानि भवन्ति। अनुवदते कठः कालापस्य। यथा विधीयमानः (?) कठो वदति त(दा ? था) कालापोऽपीति। वा(चिः ? र्षि)कषाष्टिकौ संवदेते। मिथो न विरुध्येते इत्यर्थः। अकर्मकादिति किम्। पूर्वं यजुरुदितमनुवदति॥

विमतौ ॥ ९५ ॥

विमतिर्नानामतिः । तस्यां विषयेऽकर्मकाद् वदेः कर्तर्यात्मनेपदानि भवन्ति । क्षेत्रे विवदन्ते । भिन्नमतयः क्षेत्रे विवादं कुर्वन्तीत्यर्थः ॥

व्यक्तवाचां सहोक्तौ ॥ ९६ ॥

व्यक्तवाचो मनुष्यादयः । तेषां सहोक्तौ वर्तमानाद् वदतेः कर्तर्यात्मनेपदानि भवन्ति । सम्प्रवदन्ते ग्राम्याः शकुनयः । व्यक्तवाचामिति किम् । 'वरतनु! सम्प्रवदन्ति कुक्कुटाः' । सहोक्ताविति किम् । एवं वदन्ति ब्राह्मणाः ॥

तयोर्वा ॥ ९७ ॥

तयोर्विमतिसहोक्त्योर्युगपद्विवक्षायां वदेः कर्तर्यात्मनेपदानि वा भवन्ति । विप्रवदन्ते मौहूर्त्तिकाः । विप्रवदन्ति मौहूर्त्तिकाः । युगपत् परस्परप्रतिषेधेन विरुद्धं वदन्तीत्यर्थः । व्यक्तवाचामित्येव । प्रतिवदन्ति श्वानः । सहोक्ताविति किम् । एकैकशो विप्रवदन्ति मौहूर्ताः ॥

अवाद् गि(रः? रतेः) ॥ ९८ ॥

अवपूर्वाद् गिरतेः कर्तर्यात्मनेपदानि भवन्ति । अवगिरते । अवादिति किम् । गिरति । 'गिरतेः' इति निर्देशाद् गृणातेर्न भवति । अवगृणाति ॥

समः प्रतिज्ञायाम् ॥ ९९ ॥

सम्पूर्वाद् गिरतेः प्रतिज्ञायामर्थे कर्तर्यात्मनेपदानि भवन्ति । नित्यं शब्दं संगिरते । प्रतिजानीत इत्यर्थः । प्रतिज्ञायामिति किम् । सङ्गिरति ग्रासम् ॥

सृजः श्रद्धावति ॥ १०० ॥

सृजतेर्धातोः श्रद्धावति कर्तर्यात्मनेपदानि भवन्ति । सृज्यते मालां धार्मिकः । असर्जि मालां धार्मिकः । श्रद्धावतीति किम् । सृजति मालां मालिकः ॥

उदश्चरः सकर्मकात् ॥ १०१ ॥

उत्पूर्वाच्चरतेः सकर्मकात् कर्तर्यात्मनेपदानि भवन्ति । गुरुवचनमुच्चरते । व्युत्क्रम्य गच्छतीत्यर्थः । सकर्मकादिति किम् । भूय उच्चरति ॥

समस्तृतीयायुक्तात् ॥ १०२ ॥

समस्तृतीयान्तेन युक्तात् कर्तर्यात्मनेपदानि भवन्ति। अश्वेन सञ्चरते। तृतीयायुक्तादिति किम्। "उभौ लोकौ सञ्चरसि इमं चामुं च देवल!"। यद्यप्यत्र करणार्थयोगः (सम्भवति), तथापि तृतीया न श्रूयत इति भवति प्रत्युदाहरणम् ॥

दाणश्च सा चेच्चतुर्थ्यर्थे ॥ १०३ ॥

समः पराद् दाणस्तृतीयायुक्तात् कर्तर्यात्मनेपदानि भवन्ति। सा चेत् तृतीया चतुर्थ्यर्थे वर्तते। दास्या सम्प्रयच्छते। दास्यै ददातीत्यर्थः। सा चेच्चतुर्थ्यर्थ इति किम्। दास्याः सम्प्रयच्छति। तृतीयायुक्तादिति किम्। दास्यै सम्प्रयच्छति। अशिष्टव्यवहारे सम्प्रयच्छतेरेव सम्प्रदाने तृतीयाविधानात् प्रशब्दव्यवधानेऽपि भवति ॥

उपाद् यमः स्वीकारे ॥ १०४ ॥

उपपूर्वाद्यमः स्वीकारेऽर्थे वर्तमानात् कर्तर्यात्मनेपदानि भवन्ति। कन्यामुपयच्छते। च्विनिर्देशः किम्। स्वमुपयच्छति। नात्रास्वं स्वं क्रियते, स्वत्वेन तु निर्ज्ञातस्य ग्रहणम् ॥

आमः कृञः प्राग्वत् ॥ १०५ ॥

आमः परात् करोतेरामः पूर्व एव यो धातुस्तद्वत्कर्तर्यात्मनेपदानि भवन्ति न भवन्ति च इति भावाभावावतिदिश्येते। ईहाञ्चक्रे ऊहाञ्चक्रे इत्यफलवत्यपि भवति। जागरांचकारेति फलवत्यपि न भवति। यत् पूर्वस्मादुभयं तत्र फलवत्यफलवति चोभयं भवति। बिभराञ्चक्रे बिभराञ्चकार। वाचयाञ्चकार वाचयाञ्चक्रे। कृञ इति किम्। ईहामास। ईक्षाम्बभूव ॥

सनः ॥ १०६ ॥

सन्नन्ताद् धातोः सनः प्राग् यो धातुस्तद्वत्कर्तर्यात्मनेपदानि भवन्ति। यत् पूर्वस्य पाठेनानुबन्धेनोपपदेनार्थविशेषेण वात्मनेपदं दृष्टं तत् सन्नन्ताद-

१. 'णः सा' क. पाठः.

तिदिक्ष्यते । आशिशिषते । शिशयिषते । दास्या सम्प्रदित्सते । यत् पुनः सन्प्रत्ययधातुनिमित्तं (तत्) नातिदिश्यते । शिशत्सति । मुमूर्षति । अत्र हि न शदिम्रियती एव निमित्ते, किं तर्हि, शिल्लुङ्लिङोऽपि । अनुबन्धादिनिमित्तमपि यद्विशेषविधानबाधाय प्राङ् न दृष्टं तन्नातिदिश्यते । अनुचिकीर्षति । पराचिकीर्षति । तितिक्षते जुगुप्सते इत्यादौ तु प्रागदृष्टमप्यात्मनेपदमुपदेशलिङ्गसामर्थ्याद् भविष्यति । तिजादीनां हि केवलानामप्रयोगात् (न ?) स(न्न)न्तसमुदायार्थमेवात्मनेपदिषूपदेशः कृतः । अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति । यद्येवं तितिक्षयति मीमांसयतीत्यत्रापि प्राप्नोति । नैष दोषः । अवयवे कृतं चर गन्ती(?)त्यस्यैव समुदायस्य विशेषकं भवति यं समुदायं योऽवयवो न व्यभिचरति । सन्नन्तं च समुदायं तिजादयो न व्यभिचरन्ति, णिजन्तः पुनर्व्यभिचरतीति ॥

स्मृदृशिभ्याम् ॥ १०७ ॥

स्मृदृशिभ्यां परो यः सन् तदन्तात् कर्तर्यात्मनेपदानि भवन्ति । सुस्मूर्षते दिदृक्षते ॥

अननोर्ज्ञः ॥ १०८ ॥

अविद्यमानानोर्जानातेर्यः सन् तदन्तात् कर्तर्यात्मनेपदानि भवन्ति । जिज्ञासते धनम् । अननोरिति किम् । (पुत्रमनुजिज्ञासति) ॥

श्रुवोऽनाङ्प्रतेः ॥ १०९ ॥

आशुश्रूषति । प्रतिशुश्रूषति । अतिशुश्रूषति ॥

शदेः शिति ॥ ११० ॥

शदेः शिद्विषयात् कर्तर्यात्मनेपदानि भवन्ति । शीयते । शितीति किम् । शत्स्यति ॥

मृङो लुङ्लिङोश्च ॥ १११ ॥

म्रियतेर्लुङ्लिङोः शिद्विषये च कर्तर्यात्मनेपदानि भवन्ति नान्यत्र । अमृत । मृषीष्ट । म्रियते । नियमः किम् । ममार ॥

उपसर्गादजाद्यन्ताद् युजेरयज्ञपात्रेषु ॥ ११२ ॥

अजादेरजन्ताच्चोपसर्गात् परात् युजेरयज्ञपात्रविषये प्रयोगे कर्तर्यात्मनेपदानि भवन्ति । उद्युङ्क्ते । प्रयुङ्क्ते । अजाद्यन्तादिति किम् । संयुनक्ति । अयज्ञपात्रेष्विति किम् । यज्ञपात्राणि प्रयुनक्ति ॥

समः क्ष्णुवः ॥ ११३ ॥

समः परात् क्ष्णोतेः कर्तर्यात्मनेपदानि भवन्ति । संक्ष्णुते शस्त्रम् । सम इति किम् । क्ष्णोति ॥

भुनक्तेरनवने ॥ ११४ ॥

भुनक्तेरपालने वर्तमानात् कर्तर्यात्मनेपदानि भवन्ति । ओदनं भुङ्क्ते । भुनक्तेरनवन इति किम् । भुनक्ति पृथिवीं राजा । विकरणनिर्देशादिह न भवति । ऊरू निर्भुजति ॥

णेरणौ यत् कर्म णौ चेत् स कर्तानाध्याने ॥ ११५ ॥

ण्यन्ताद्धातोरण्यन्तावस्थायां यत् कर्म ण्यन्तावस्थायां यदि स कर्ता स्यात् तदा आध्यानात् स्मरणविशेषादन्यत्रात्मनेपदानि भवन्ति । आरोहन्ति हस्तिनं हस्तिपकाः । आरोहयते हस्ती हस्तिपकान् । पश्यन्ति राजानं भृत्याः । दर्शयते राजा भृत्यान् भृत्यैरिति वा । णेरिति किम् । अणौ कर्म यस्मिन् णौ कर्तृ तस्मादेव णेर्यथा स्यात् । इह मा भूत् । आरोहतो मनुष्यान् हस्ती स्थल(मा ? मव)रोहयति । अणाविति किम् । हस्तिपकम् आरोहयमाणं हस्तिनं प्रयुङ्क्ते आरोहयति महामात्र इति द्वितीयण्यन्तान्मा भूत् । इहापि तर्हि न प्राप्नोति । गणयति गणं गोपालकः । गणयते गणो गोपालकमिति । णेरणाविति हेतुमत एवेह ग्रहणं यतः प्राक् कर्म कर्ता व्यागविद्यते यः तस्य नित्यत्वात् (?) । यत् कर्मेति किम् । करणादौ कर्तृत्वे मा भूत् । पश्यन्ति भृत्याः प्रदीपेन । दर्शयति प्रदीपो भृत्यान् । णौ चेदिति किम् । यत्राणौ कर्मत्वं तण्णावेव कर्तृत्वं ततोऽन्यत्र (मा भूत्) । लुनाति केदारं देवदत्तः । लूयते केदारः स्वयमेव । तं प्रयुङ्क्ते लावयति केदारं देवदत्त इति । स कर्तेति किम् । अन्यस्य कर्तृत्वे मा भूत् । आरोहन्ति हस्तिनं हस्तिपकाः तानारोहयति महामात्र इति । अनाध्यान इति किम् ।

१. 'णौ स' क. पाठः.

इह मा भूत्, स्मरति वनगुल्मस्य कोकिलः। स्मरयत्येनं वनगुल्म इति। यण्णौ कर्मणः कर्तृत्वे ण्यन्तादात्मनेपदमुच्यते शुष्यन्त्यातपे व्रीहयः शोषयते व्रीहीनातप इत्यादावधिकरणादेः कर्तृतायामात्मनेपदं न प्राप्नोति इति फलवतीति भविष्यति। फलवतश्चान्यत्रायं विधिः। तथा भूषयते कन्या, कारयते कटः, लावयते केदारः स्वयमेवेत्यादौ कर्मकर्तरीत्यात्मनेपदम्। अथारोहयते हस्ती स्वयमेवेत्यादौ कथं रुहेः कर्तृस्थक्रियात्। नायं कर्तृस्थक्रियः। तथाहि—आरोहन्ति हस्तिनं हस्तिपकाः इति न्यग्भवनोपसर्जने न्यग्भावने रुहिर्वर्तते। स यदा न्यग्भवनमात्रवृत्तिस्तदा आरुह्यते हस्ती स्वयमेवेति तृतीयस्यामवस्थायां कर्मकर्तृविषयो भूत्वा पुनर्हस्तिपकव्यापारविवक्षायामारुह्यमाणं प्रयुञ्जन्त्विति चतुर्थ्यामवस्थायां णिजन्तो भवति आरोहन्ति हस्तिनं हस्तिपकाः इति। तदाप्यारोहयतिर्न्यग्भवनोपसर्जने न्यग्भावने वर्तते। पुनर्यदास्यैव प्रयोजकव्यापाराविवक्षा तदा स्यात् पञ्चम्यामवस्थायां युज्यते न वृत्तिः कर्मस्थक्रियात्वमस्तीति कर्मकर्तर्यात्मनेपदमिष्यते। तदुक्तं .... .... .... न्यग्भवनं न्यग्भावनं रुहनशब्दे प्रतीयते। न्याग्भावनान्यग्भवनण्यन्तोऽपि(?) प्रतिपद्यते।

"अवस्थां पञ्चमीमाहुर्ण्यन्तानां कर्मकर्तरि।
*निवृत्तः प्रेरणाद्धातोः प्राकृतेऽर्थे नियुज्यते॥"

## भीस्मिभ्यां हेतुभययोस्तदर्थे ॥ ११६ ॥

भीस्मिभ्यां ण्यन्ताभ्यां हेतोस्तदर्थे भये विस्मये च सति कर्तर्यात्मनेपदानि भवन्ति। फलवतोऽन्यत्रायं विधिः। मुण्डो भीषयते। जटिलो विस्मापयते। हेतोस्तदर्थ इति किम्। कुञ्चिकया भापयति। रूपेण विस्मापयति। करणादत्र भयविस्मयौ, न हेतु(क? तः)।

## गृधिवञ्च्योः प्रलम्भने ॥ ११७ ॥

गृधिवञ्चिभ्यां ण्यन्ताभ्यां प्रलम्भने वञ्चनेऽर्थे वर्तमानाभ्यां कर्तर्यात्मनेपदानि भवन्ति। फलवतोऽन्यत्रायं विधिः। माणवकं गर्धयते। माणवकं वञ्चयते। प्रलम्भन इति किम्। श्वानं गर्धयति। प्रलोभयतीत्यर्थः। अहिं वञ्चयति। परिहरतीत्यर्थः॥

---

* 'निवृत्तप्रेषणाद्धातोः प्रकृतेऽर्थे णिजुच्यते' इति न्यासकारपाठः.

लियः पूजाभिभवयोश्च ॥ ११८ ॥

लियः पूजाभिभवयोरर्थयोः प्रलम्भने च वर्तमानात् कर्तर्यात्मनेपदानि भवन्ति । जटाभिरालापयते । पूजामधिगच्छतीत्यर्थः । श्येनो वर्त्तिकामुल्लापयते । अभिभूय भूमौ लीनां करोतीत्यर्थः । कस्त्वामुल्लापयते । विसंवादयतीत्यर्थः । पूजादिष्विति किम् । बालमुल्लापयति । उत्क्षिपतीत्यर्थः । घृतं विलीनयति । द्रवीकरोतीत्यर्थः ॥

मिथ्योपपदात् कृञोऽभ्यासे ॥ ११९ ॥

मिथ्याशब्दोपपदात् करोतेर्ण्यन्तादभ्यासे पौनःपुन्ये सति कर्तर्यात्मनेपदानि भवन्ति । पदं मिथ्याकारयते । मिथ्यादोषदुष्टमसकृदुच्चारयतीत्यर्थः । आत्मनेपदेनैव पौनःपुन्यस्य द्योतितत्वात् आभीक्ष्ण्ये द्विर्वचनं न भवति । मिथ्योपपदादिति किम् । पदं स्वाकारयति । कृञ इति किम् । पदं मिथ्या वाचयति । अभ्यास इति किम् । सकृत् पदं मिथ्याकारयति ॥

फलवति ॥ १२० ॥

फलवतीति भूम्न्यतिशायने मतुप् । प्रधानं यत् क्रियायाः फलं यदर्थमसावारभ्यते तत्सम्बन्धितया कर्तरि विवक्षिते ण्यन्ताद्धातोरात्मनेपदं भवति । कारयते पाचयते । फलवतीति किम् । कारय.................... प्रेष भाषितां (?) ॥

पाठे विभाषितात् ॥ १२१ ॥

धातूपदेशे य उभयपदिनो धातवस्तेभ्यः फलवति कर्तर्यात्मनेपदानि भवन्ति । कुरुते पचते । पाठ इति किम् । क्रमते क्रामति । विभाषितादिति किम् । याति वाति द्राति प्साति । फलवतीति किम् । पचन्ति पाचकाः । अत्रौदनं प्रधानक्रियाफलं कर्त्रा न सम्बध्यते ॥

ञितः ॥ १२२ ॥

ञितः फलवति कर्तर्यात्मनेपदानि भवन्ति । कण्डूयते । फलवतीत्येव । कण्डूयति ॥

अपवदः ॥ १२३ ॥

अपपूर्वाद्वदतेः फलवति कर्तर्यात्मनेपदानि भवन्ति । धनकामोऽस्फुटमपवदते । फलवतीति किम् । स्वभावतोऽपवदति ॥

समुदाङ्भ्यो यमेरग्रन्थे ॥ १२४ ॥

समुदाङ्पूर्वाद् यमेरग्रन्थे विषये फलवति कर्तर्यात्मनेपदानि भवन्ति। व्रीहीन् संयच्छते । (भारमुद्यच्छते) । राज्यमायच्छते । आङ्पूर्वादकर्मकात् स्वाङ्ग कर्मकाच्च 'आङो यमहनः' इति सिद्धे सकर्मकार्थं वचनम् । अग्रन्थ इति किम् । वैद्यश्चिकित्सामुद्यच्छति ॥

अनुपसर्गाज्ज्ञः ॥ १२५ ॥

जानातेरविद्यमानोपसर्गात् फलवति कर्तर्यात्मनेपदानि भवन्ति । गां जानीते । अश्वं जानीते । अनुपसर्गादिति किम् । स्वर्गं लोकं प्रजानाति । फलवतीति किम् । देवदत्तस्य गां जानाति । अकर्मकात् पूर्वेण सिद्धे सकर्मकार्थं वचनम् ॥

शब्दान्तरगतौ वा ॥ १२६ ॥

फलवतीत्यादिभिर्योगैर्यदुक्तमात्मनेपदं तत् शब्दान्तरेण कर्तुः फलवत्तावगतौ वा भवति । स्वं कटं कारयते कारयतीति वा । स्वं (यज्ञं) यजते यजतीति वा । स्वं शिरः कण्डूयते कण्डूयतीति वा । स्वशत्रूनपवदते अपवदतीति वा ॥

णिजर्थे च ॥ १२७॥

णिजर्थवृत्तेर्धातोर्णिचो वार्थे फलवति प्रतिविधा(ना)ऽलक्षणे द्योत्ये वर्तमानात् कर्तर्यात्मनेपदानि भवन्ति । पचते पाचयतीति वा । वहते वाहयतीति वा । णिजर्थ इत्युक्तेऽपि णिजर्थविशेषप्रतिविधानं फलवतोऽभिसम्बन्धाल्लभ्यते । तथाहि प्रतिविधानं प्रयोजकविशेषः प्रेषणाध्येषणादिकर्तृव्यापारपूर्विकाणां प्रयोज्यकर्तृक्रियाणां यदर्था प्रवृत्तिस्तेन प्रधानफलेन सम्बध्यते । तदिच्छानुविधायिविधानं फलमिति ॥

यजेर्नित्यम् ॥ १२८ ॥

यजेर्धातोर्णिजर्थविषये प्रतिविधाने नित्यमात्मनेपदानि भवन्ति। यजते यजमानः। पुष्यमित्रो यजत इति। प्रतिविधानादन्यत्र याजयति॥

न धातूपपदसंसर्गसामान्योक्तौ ॥ १२९ ॥

धातुनोपपदेन संसर्गेण सामान्येन च प्रतिविधानलक्षणस्य ण्यर्थस्योक्तौ सत्यां कर्तर्यात्मनेपदानि न भवन्ति। धातुना, अजां नयति ग्रामम्। अत्राजाकर्तृकग्रामकर्मकव्रज्यायामजादिकर्मकदेवदत्तकर्तृके प्रेषणे धातुरेव वर्तते। तत्रोक्तार्थत्वाण्णिच् न भवति। आत्मनेपदं तु यथा शब्दान्तरगतौ भवति एवमिहापि स्यादिति निषिध्यते। उपपदेन, पञ्चभिर्हलैः कृषति मेरौ दोग्धरि स्थिते सर्वशैला धरित्रीं दुदुहुरिति। अत्र पञ्चभिर्हलैर्मेरौ स्थित इत्याद्युपपदे सन्निधानाद्धातुः स्वार्थमुत्सृज्य तत्प्रतिविधानमाचक्षाणो णिजात्मनेपदयोर्निमित्तं भवतीति निषिध्यते। संसर्गेण, स्वामिदासौ पचतः। अत्र पचतिना पक्षसंसर्गात् पाचयिता च प्रतीयमानो णिजात्मनेपदयोर्हेतुभावं न भजते। सामान्येन, तस्माद् दीक्षितो न ददाति न पचति न हरति न वहत्यावहतिवसत्यादिभ्यो भावेभ्य इति। अत्र दानदापनयोः पचनपाचनयोर्हरणहारणादीनां च सामान्येन प्रतिषेधे तत्सम्प्रतिविधानप्राप्तणिजात्मनेपदं च (न) भवति॥

अनुपराभ्यां कृञः ॥ १३० ॥

अनुपराभ्यां परात् करोतेः सूचनादावर्थे फलवति कर्तरि 'पाठे विभाषितादि'ति प्राप्तान्यात्मनेपदानि न भवन्ति। (अनुकरोति। पराकरोति॥

अभिप्रत्यतिभ्यः क्षिपः ॥ १३१ ॥

अभिक्षिपति (प्रीतीक्षपति अ(धि? ति)क्षिपति माणवकम्। प्रति क्षिपते भक्ष्यमिति। नात्र क्षिपिः प्रतिना सम्बध्यते॥

प्राद्वहः ॥ १३२ ॥

प्रपूर्वाद्वहेः फलवति कर्तरि प्राप्तान्यात्मनेपदानि न भवन्ति। प्रवहति॥

परेर्मृषश्च ॥ १३३ ॥

परेः परान्मृषः चकाराद्वहेश्च फलवति कर्तर्यात्मनेपदानि न भवन्ति। परिमृषति। परिवहति। माणवकं परि मृषते। वनं परिवहत इति। नात्र परिर्मृषिवहिभ्यां सम्बध्यते॥

रमेर्व्याङ्भ्यां च ॥ १३४ ॥

(व्याङ्भ्यां) परेश्च पराद्रमेः 'कर्तर्यात्मनेभाषेभ्य' इति प्राप्तान्यात्मनेपदानि न भवन्ति। विरमति। आरमति। परिरमति॥

उपात् ॥ १३५ ॥

उपात् पराद् रमेरात्मनेपदानि न भवन्ति। देवदत्त उपरमति। अन्तर्भावितण्यर्थोऽत्र रमिः। पृथग्योगकरणमुत्तरार्थम्॥

अकर्मकाद्वा ॥ १३६ ॥

उपात् परादकर्मकक्रियावचनाद् रमेरात्मनेपदानि वा भवन्ति। उपरमति उपरमते॥

अणौ चित्तवत्कर्तृकाण्णेः ॥ १३७ ॥

यश्चित्तवत्कर्तृको धातुरण्यन्तोऽकर्मकस्ततो ण्यन्तात् फलवति कर्तरि प्राप्तान्यात्मनेपदानि न भवन्ति। आस्ते देवदत्तः। आसयति देवदत्तम्। शेते माणवकः। शाययति माणवकम्। अणाविति किम्। स्वयमारोहयमाणो हस्तिनं प्रयुङ्क्ते आरोहयते। यस्माण्णेः प्राक् कर्त्रा कर्मणा वा योगो दृष्टस्तस्य हेतुमण्णिचो णेरिति विधाग्रहणमिति प्रतिषेधेऽपि प्रत्यासत्तेस्तस्यैव ग्रहणं, न चुरादिणिचः। तेन चेतयमानं प्रयुङ्क्ते चेतयतीति प्रतिषेध एव। चित्तवत्कर्तृकादिति किम्। शोषयते व्रीहीनातपः। अकर्मकादिति किम्। कटं कुर्वाणं प्रयोजयति कटं कारयते॥

चलनाहारार्थात् ॥ १३८ ॥

चलनार्थादाहारार्थाच्च धातोर्ण्यन्तात् फलवति कर्तर्यात्मनेपदानि न भवन्ति। चलयति कम्पयति निगारयति भोजयति। सकर्मकार्थश्चित्तवत्कर्तृकार्थश्चायमारम्भः॥

प्रुद्रुस्रुबुधयुधेङ्नशजनः॥ १३९ ॥

प्रवत्यादिभ्यो ण्यन्तेभ्यः फलवति कर्तर्यात्मनेपदानि न भवन्ति। प्रुद्रुस्रूणामच(ल)नार्थं, बुधेः सकर्मकार्थमचित्तवत्कर्तृकार्थं च, युधनशजनामचित्तवत्कर्तृकार्थम्, इङस्तु सकर्मकार्थं वचनम्। प्रावयति प्लावयतीत्यर्थः। द्रावयति विलापयतीत्यर्थः। स्रावयति स्यन्दयतीत्यर्थः। बोधयति माणवकं धर्मम्। बोधयति प्रदीपम्। योधयति काष्ठम्। अध्यापयति माणवकं वेदम्। नाशयति दुःखम्। जनयति दुःखम्॥

न पादम्याङ्यमाङ्यसपरिमुहारुचिनृतिधेड्वदवसः [॥ १४० ॥

पिबत्यादिभ्यो ण्यन्तेभ्यः फलवति कर्तर्यात्मनेपदानि भवन्ति। पिबत्यत्तिधेटामाहारार्थत्वान्नृतेश्चलनार्थकत्वादकर्मकत्वाच्च शेषाणामकर्मकत्वाच्च प्रतिषिद्धान्यनेन पुनर्विधीयन्ते। पाययते। दमयते। आयामयते। आयासयते। परिमोहयते। आदयते। रोचयते। नर्तयते। धापयते। वादयते। वासयते॥

वा क्यषः॥ १४१ ॥

क्यषन्ताद्धातोः कर्तरि आत्मनेपदानि वा भवन्ति। पटपटायते पटपटायति। लोहितायते लोहितायति॥

द्युद्भ्यो लुङि॥ १४२ ॥

द्युद्भ्य इति बहुवचननिर्देशात् तत्सहचरिताः श्वितादयः कृपूपर्यन्ता गृह्यन्ते। तेभ्यो लुङ्विषये कर्तर्यात्मनेपदानि वा भवन्ति। व्यद्योतिष्ट व्यद्युतत्। अश्वेतिष्ट अश्वितत्। प्राप्तविभाषेयम्। लुङीति किम्। द्योतते॥

वृद्भ्यः स्यसनोः ॥ १४३ ॥

वृद्भ्य इति बहुवचननिर्देशात् पूर्ववदार्थो लभ्यते । वृतादयो द्युताद्यन्तर्गणः । तेभ्यः स्यसनोर्विषये कर्तर्यात्मनेपदानि (वा) भवन्ति । वर्त्स्यति अवर्त्स्यत् । वर्तिष्यते अवर्तिष्यत । विवृत्सति विवर्ति(ष्यति? षते) । *विवृत्स(ते? ति) (विवर्तिषते विवार्धिषति?) विवर्धिषते । स्यसनो-रिति किम् । वर्धते वर्तते ॥

लुटि च क्लृपः ॥ १४४ ॥

लुड्विषये चकारात् स्यसनोश्च कृपेः कर्तर्यात्मनेपदानि वा भवन्ति । कृपेर्वृताद्यन्तर्भावात् स्यसनोः पूर्वेण सिद्धान्यपि विशेषविधानादनेन बाध्ये-रन्निति समुच्चीयन्ते । कल्प्ता कल्पिता । कल्प्स्यति कल्पिष्यते । अकल्प्स्यत् अकल्पिष्यत । चिक्लृप्सति चिकल्पिषते ॥

शेषात् परस्मैपदानि ॥ १४५ ॥

उक्ताद्योऽन्यः स शेषः । येभ्यो धातुभ्यो येन विशेषणेनात्मनेपदानि उक्तानि ततोऽन्यस्मात् कर्तरि परस्मैपदानि भवन्ति । पाठशेषोऽनुबन्धशेष उपसर्गशेषोऽर्थशेष उपपदशेषः प्रत्ययशेष इति शेषविभागाः । पाठशेषः— भवति अत्ति जुहोति दीव्यति । अनुबन्धशेषः—त्रसति पुत्रीयति मन्त्र-यति गोपायति । उपसर्गशेषः— प्रविशति अधितिष्ठति आयच्छति वि-पश्यति । अर्थशेषः— करोति तपः । नयति वदति व्यतिहसन्ति । उपपदशेषः— गृहे सञ्चरति । ब्राह्मणाय सम्प्रयच्छति । साधु पदा कारयति । स्वयं यज्ञं यजति । प्रत्ययशेषः— शत्स्यति मुमूर्षति अद्युतत् भत्स्यति । भावकर्तापि कर्तैव । चोरस्य रुजति चोरस्यामयति ॥

यङ्लुकः शब्लुक् च ॥ १४६ ॥

यङ्लुगन्ताच्च धातोः कर्तरि परस्मैपदानि शब्लुक् च भवति । रोरवीति बोभवीति । अदादौ 'चर्करीतं चे'ति पाठमनङ्गीकृत्योच्यते ॥

समानाधिकरणे युष्मद्यप्रयुज्यमानेऽपि मध्यमः

[॥ १४७ ॥

---

* वृधेः स्ये रूपचतुष्कं मातृकायां लुप्तं स्यात् ।

समानाधिकरण एकार्थे तुल्यकारके युष्मद्युपपदे प्रयुज्यमाने चाप्रयुज्यमाने च मध्यमः पुरुषो भवति। अस्तीत्यादिना सामान्येन तिबादयो विहितास्तेषामयं पुरुषनियमः क्रियते। त्वं पचसि युवां पचथः यूयं पचथ। त्वं पचसे युवां पचेथे यूयं पचध्वे। अप्रयुज्यमानेऽपि। पचसि पचथः पचथ। पचसे पचेथे पचध्वे॥

प्रहासे च मन्योपपदान्मन्यतेरुत्तम एकवच्च [॥ १४८॥

प्रहासो नर्मालापः। तस्मिन् गम्यमाने मन्यत्युपपदाद्धातोर्मध्यमः पुरुषो भवति। मन्यतेः पुनरुत्तमः स चैकवद् भवति। एहि मन्ये रथेन यास्यसि। नहि यास्यसि, यातस्ते पिता। एहि मन्ये ओदनं भोक्ष्यसे। साधु मन्यसे, नहि भोक्ष्यसे, भुक्तः सोऽतिथिभिः। एहि मन्यसे रथेन यास्यामीति मध्यमोत्तमयोः प्राप्तयोरुत्तममध्यमौ विधीयेते। एहि मन्ये रथेन यास्यथः। एहि मन्ये रथेन यास्यथ। द्वित्वबहुत्वयोरपि मन्यतेरुत्तमैकवचनमेव। प्रहास इति किम्। एहि मन्यसे ओदनं भोक्ष्ये, साधु मन्यसे, क्रियतामेवमिति॥

अस्मद्युत्तमः॥ १४९॥

अस्मदि समानाधिकरण उपपदे प्रयुज्यमाने चाप्रयुज्यमाने चोत्तमः पुरुषो भवति। अहं पचामि। आवां पचावः। वयं पचामः। अहं पचे। आवां पचावहे। (वयं पचामहे)। पचामि पचावः पचामः। पचे पचावहे पचामहे॥

शेषे प्रथमः॥ १५०॥

यत्र युष्मदस्मदी समानाधिकरणे न स्तः स शेषः। तत्र प्रथमः पुरुषो भवति। स पचति। तौ पचतः। ते पचन्ति। पचति पचतः पचन्ति। स पचते। तौ पचेते। ते पचन्ते। पचते पचेते पचन्ते। भवता पच्यते। मया पच्यते। अत्वं त्वं सम्पद्यते त्वद्भवति। अनहमहं सम्पद्यते मद्भवति। असः सः सम्पद्यते तद्भवति। अनहमहं सम्पद्यसे मद्भवसि। अतत् तत् सम्पद्ये तद्भवामि। अत्वं त्वं सम्पद्ये त्वद्भवामि। युष्मदादीनामुपपदत्वेऽपि सव्यापारतया प्रकृतेः कर्तृत्वेनानिष्पन्नत्वेन विकृतेरिति प्रकृत्याश्रय

एव पुरुषो भवति न विकृत्याश्रयः । *यथा च सङ्घीभवति ब्राह्मणाः महद्भूतश्चन्द्रमा इति प्रकृत्याश्रयं बहुवचनमात्वं च न भवति ॥

एकद्विबहुष्वेकवचनद्विवचनबहुवचनानि ॥ १५१ ॥

सुपां तिङां च विभक्तीनां त्रीणि त्रीणि वचनानि 'एकवचनद्विवचनबहुवचनान्येकैकश' इति संज्ञितानि । एषामर्थनियमः क्रियते । एकद्विबहुष्वर्थेषु यथासङ्ख्यं सुपां तिङां च एकवचनद्विवचनबहुवचनानि भवन्ति । कर्मादयश्चापरे विभक्तीनामर्थाः । तत्र कर्मादावेकस्मिन् एकवचनमेव द्वयोर्द्विवचनमेव बहुषु बहुवचनमेव । यत्र सङ्ख्या भवति तत्रायमुपदेशः । अव्ययेभ्यस्तु निस्संङ्ख्येभ्यः सामान्यविहिताः स्वादयो विद्यन्ते । एवं पचति पचतः पचन्ति । वृक्षः वृक्षौ वृक्षाः ॥

जात्याख्यायामेकस्मिन् बहुवचनमसंख्याप्रयोगे वा
[॥ १५२ ॥

जातेरेकत्वादेकवचने प्राप्ते विकल्पेन बहुवचनं विधीयते । जातेराख्या जात्याख्या। तस्यामेकस्मिन्नर्थे वा बहुवचनं भवति, न चेत् तद्विषयैका सङ्ख्या प्रयुज्यते । सम्पन्नो यवः। सम्पन्ना यवाः। सम्पन्नो व्रीहिः। सम्पन्ना व्रीहयः । अपूर्ववया ब्राह्मणः प्रत्युत्थेयः । अपूर्ववयसो ब्राह्मणाः प्रत्युत्थेयाः । जातिग्रहणं किम् । देवदत्तः यज्ञदत्तः । आख्याग्रहणं किम् । काश्यपप्रकृतिः काश्यपः । भवत्ययं जातिशब्दो, नत्वनेन जातिराख्यायते । किं तर्हि । (पचति ? प्र)कृतिः । एकस्मिन्निति किम् । सम्पन्नौ व्रीहियवौ । असंङ्ख्याप्रयोगे इति किम् । एको व्रीहिः सम्पन्नः सुभिक्षं करोति ॥

कचिद् द्विवचनं च ॥ १५३ ॥

---

* 'आन्महतः समानाधिकरणजातीययोः' (६-३-४६) इति सूत्रस्य वृत्तौ पदमञ्जरीकारस्त्वेवमाह — "अभूततद्भावे च्विर्विधीयते । अभूततद्भावश्च कः । कारणस्य विकारात्मना अभूतस्य तदात्मना भावः । तत्र प्रकृतिः कर्त्री, न विकृतिः । तथाच 'सङ्घीभवन्ति ब्राह्मणाः' 'पटीभवन्ति तन्तवः' 'अत्वं त्वं सम्पद्यते त्वद्भवती'ति प्रकृत्याश्रयेण बहुवचनप्रथमपुरुषौ दृश्येते, न विकृत्याश्रयेण एकवचनमध्यमपुरुषौ" इति ।

क्वचिदवान्तरजातिद्वयोपाधि(योगे) जात्याख्यायामेकस्मिन्नर्थे द्विवचनं बहुवचनं च वा भवति । मगधेषु स्तनौ पीनौ । स्तनाः पीनाः । स्तनः पीनः । कलिङ्गेषु अक्षिणी शुभे । अक्षीणि शुभानि । अक्षि शुभम् । इति ॥

अस्मदो द्वयोश्चाविशेषणे ॥ १५४ ॥

अस्मद एकस्मिन्नर्थे द्वयोश्चार्थयोर्वर्तमानात् बहुवचनं वा भवति न चेद्विशेषणं प्रयुज्यते । अहं ब्रवीमि । वयं ब्रूमः । आवां ब्रूवः । अविशेषण इति किम् । अहं देवदत्तो ब्रवीमि । आवां गार्ग्यौ ब्रूवः ॥

युष्मदः पूजायाम् ॥ १५५ ॥

युष्मद एकस्मिन्नर्थे द्वयोश्च पूजायां विषये बहुवचनं वा भवति । त्वं मे गुरुः । यूयं मे गुरवः । पूजायामिति किम् । त्वं गच्छ । युवां गच्छथः ॥

अन्येभ्योऽपि दृश्यते ॥ १५६ ॥

अन्येभ्योऽपि च प्रातिपदिकेभ्य एकस्मिन्नर्थे पूजायामपूजायां च बहुवचनं दृश्यते । आर्यमिश्राः । तातपादाः । गुरवो जानन्ति । आपः दाराः वर्षा इति ॥

फल्गुनीप्रोष्ठपदाविशाखाभ्यो नक्षत्रे ॥ १५७ ॥

फल्गुन्यादिभ्य एकस्मिन्नर्थे द्वयोश्चार्थयोर्बहुवचनं वा भवति नक्षत्रविषयश्चेत् प्रयोगः । कदा पूर्वा वा उत्तरा वा फल्गुनी । कदा फल्गुन्यौ । कदा फल्गुन्यः । कदा पूर्वा उत्तरा वा प्रोष्ठपदा । कदा प्रोष्ठपदे । कदा प्रोष्ठपदाः । कदा विशाखा । कदा विशाखे । कदा विशाखाः । पर्यायाणामपि भवति । कदा पूर्वे भाद्रपदे । कदा पूर्वा भाद्रपदाः । नक्षत्र इति किम् । फल्गुन्यौ माणविके ॥

तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् ॥ १५८ ॥

तिष्य एकः । पुनर्वसू द्वौ । तेषां बहुत्वात् बह्वर्थः । बहुवचने प्राप्ते द्विवचनं विधीयते । तिष्यपुनर्वस्वोर्नक्षत्रविषये द्वन्द्वे बहुवचनस्य प्रसङ्गे नित्यं द्विवचनं भवति । उदितौ तिष्यपुनर्वसू । पर्यायाणामपि । सिध्यपुनर्वसू । नक्षत्र इति किम् । तिष्यपुनर्वसवो माणवकाः । द्वन्द्व इति किम् । यस्तिष्यस्तौ पुनर्वसू येषां ते तिष्यपुनर्वसवः । तिष्यादय एवोत्पातादेर्निमित्ताद् विपर्ययेण दृश्यमाना बहुव्रीहिणोच्यन्त इति नक्षत्रसमास एवायं, नतु द्वन्द्वः । बहुवचनस्येति किम् । तिष्यश्च पुनर्वसू च तदिदं तिष्यपुनर्वसु । अस्मादेव ज्ञापकात् सर्वो द्वन्द्वो विभाषैकवद्भवति ॥

प्रातिपदिकात् स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुपः ॥ १५९ ॥

प्रातिपदिकात् परे स्वादयः प्रत्यया भवन्ति । दृषत् दृषदौ दृषदः । दृषदं दृषदौ दृषदः । दृषदा दृषद्भ्यां दृषद्भिः । दृषदे दृषद्भ्यां दृषद्भ्यः । दृषदः दृषद्भ्यां दृषद्भ्यः । दृषदः दृषदोः दृषदाम् । दृषदि दृषदोः दृषत्सु । एवं कुमारीखट्वादयः । सोरुकारः सोरिति विशेषणार्थः । जसो जकारो 'जसि च'ति । औटष्टकारः सुडिति प्रत्याहारार्थः । शसः शकारः 'ततः शसो नः पुंसी'ति चिह्नार्थः । टकारष्टाङसोरिति । ङेङसिङस्ङीनां ङकारो 'ङित्यसख्युरि'ति । ङसेरिकारो 'ङसेश्चादि'ति । सुपः पकारः सुपेति प्रत्याहारार्थः ॥

अतो भिस ऐस् ॥ १६० ॥

अकारान्तात् प्रातिपदिकात् परस्य भिस ऐसादेशो भवति । वृक्षैः । अतिजरैः । सन्निपातलक्षणपरिभाषाया अनित्यत्वादतिजरसैरिति केचित् । अत इति किम् । अग्निभिः । तपरः किम् । श्रद्धाभिः । अ(न)न्तरविहितस्य भिसो ग्रहणादिह न भवति । ब्राह्मणभिस्सा ॥

नेदमदसोरकात् ॥ १६१ ॥

इदमोऽदसश्चाकात् परस्य भिस ऐसादेशो न भवति । एभिः । अमीभिः । अकादिति किम् । इमकैः अमुकैः ॥

टाङसोरिनस्यौ ॥ १६२ ॥

अकारान्तात् प्रातिपदिकात् परयोष्टाङसोर्यथासङ्ख्यम् इन स्य इत्येतावादेशौ भवतः। वृक्षेण। अतिजरेण। अतिजरसिनेति केचित्। वृक्षस्य अतिखट्वस्य! अत इति किम्। दृषदा दृषदः॥

ङेङस्योर्यातौ ॥ १६३ ॥

ङे ङसि इत्येतयोरकारान्तात् प्रातिपदिकादुत्तरयोर्यथासङ्ख्यं य आदित्येतावादेशौ भवतः। वृक्षाय वृक्षात्। 'भौरिक्यैषुकार्यादी'ति निर्देशेन सन्निपातलक्षणपरिभाषायाः क्वचिदनित्यत्वात् ज्ञापकात् 'सुपि चे'ति दीर्घो भवति। अत एवातिजरसादिति केचित्॥

सर्वनाम्नः स्मैस्मातौ ॥ १६४ ॥

अकारान्तात् सर्वनाम्नः परयोः ङेङस्योर्यथासङ्ख्यं स्मैस्मादित्येतावादेशौ भवतः। सर्वस्मै विश्वस्मै। सर्वस्मात् विश्वस्मात्। अत इत्येव। भवते भवतः॥

ङेः स्मिन् ॥ १६५ ॥

अकारान्तात् सर्वनाम्नः परस्य ङेः स्मिन्नित्ययमादेशो भवति। सर्वस्मिन् विश्वस्मिन्। अत इत्येव। भवति॥

जसः शी ॥ १६६ ॥

अकारान्तात् सर्वनाम्नः परस्य जसः शी इत्ययमादेशो भवति। सर्वे विश्वे। अत इत्येव। भवन्तः। तपरकरणादिह न भवति। सर्वाः। दीर्घोच्चारणं किम्। 'शावयम' इति नुंविधौ ग्रहणं मा भूत्। शकारः सर्वादेशार्थः॥

आदामः साम् ॥ १६७ ॥

अकारान्तात् सर्वनाम्नः परस्य षष्ठीबहुवचनस्यामः सामित्ययमादेशो भवति। सर्वेषां विश्वेषाम्। सन्निपातपरिभाषाया अनित्यत्वात् एत्वम्। अत इत्यनुवर्तमाने आद्वचनं दीर्घादपि यथा स्यात्। सर्वासाम्॥

नान्यच्च संज्ञोपसर्जनात् ॥ १६८ ॥

संज्ञाया उपसर्जनाच्च स्मैप्रभृतिकमन्यच्च सार्वनामिकं त्यदाद्यत्वादि-कार्यं न भवति। यत्तु प्रतिपदोक्तं 'युष्मदस्मद्भ्यां ङसोऽश्' इत्यादि तद् भवत्येव। सर्वो नाम कश्चित् सर्वाय। विश्वं जगत् विश्वाय। अतिक्रान्तः सर्वान् अतिसर्वाय। प्रियविश्वाय। एवम् अतितत् अतितदौ। अनुपसर्जनात् तदन्तादपि। परमसर्वस्मै। त्वकत्पितृकः मकत्पितृकः। त्वकत्पुत्रः मकत्पुत्र इत्यन्तरङ्गत्वात्। अत्पूर्वमेव त्वत्कपितृको मत्कपितृक इति तमेवान्ये मन्यन्ते॥

तृतीयासमासवाक्ययोः॥ १६९॥

'पूर्वावरे'त्यादिना प्रतिपदं तृतीयासमासं वक्ष्यति। तस्मिंस्तद्वाक्ये च सर्वनाम्नो यदुक्तमन्यच्च सार्वनामिकं कार्यं तद् न भवति। मासेन पूर्वाय मासपूर्वाय। मासेनावराय मासावराय॥

द्वन्द्वे च॥ १७०॥

द्वन्द्वे समासे सर्वनाम्नो यदुक्तं यच्चान्यत् सार्वनामिकं कार्यं तन्न भवति। अधरोत्तरात्॥

शी वा॥ १७१॥

सर्वनाम्नो जसः शीभावो य उक्तः स द्वन्द्वे वा भवति। पूर्वोत्तरे पूर्वोत्तराः। कतरकतमे कतरकतमाः॥

प्रथमचरमतयायाल्पार्धनेमकतिपयेभ्यः॥ १७२॥

प्रथमादयः प्रातिपदिकानि। तयायौ प्रत्ययौ। तेभ्यः पूर्वानुवृत्तः शी वा भवति। प्रथमादिभ्योऽप्राप्ते विभाषेयम्। नेमात् प्राप्ते। प्रथमे प्रथमाः। चरमे चरमाः। द्वितये द्वितयाः। द्वये द्वयाः। उभयाच्च पूर्वविप्रतिषेधेन नित्यमेव शी भवति। उभये देवमनुष्याः। अल्पे अल्पाः। अर्धे अर्धाः। नेमे नेमाः। कतिपये कतिपयाः॥

पूर्वादिभ्यो नवभ्यः स्मात्स्मिनौ च॥ १७३॥

पूर्वादिभ्यो नवभ्यः स्मात्स्मिनौ शी च यथास्थानं वा भवन्ति। पूर्वस्मात् पूर्वात्। पूर्वस्मिन् पूर्वे। पूर्वे पूर्वाः। परस्मात् परात्। परस्मिन् परे। परे पराः। नवभ्य इति किम्। त्यस्मात्। त्यस्मिन्। त्ये॥

स्मै च तीयात् ॥ १७४ ॥

तीयान्तात् प्रातिपदिकात् स्मै स्मात्स्मिनौ च यथास्थानं वा भवन्ति। द्वितीयस्मै द्वितीयाय। द्वितीयस्मात् द्वितीयात्। द्वितीयस्मिन् द्वितीये। एवं तृतीयस्मै इत्यादि॥

आप औतः शी॥ १७५॥

आबन्तात् प्रातिपदिकात् परस्य प्रथमाद्वितीयाद्विवचनस्यौकारस्य शी इत्ययमादेशो भवति। माले तिष्ठतः माले पश्य। बहुराजे तिष्ठतः। बहुराजे पश्य। शकार 'आच्छीनद्योरि'ति विशेषणार्थः। दीर्घग्रहणमुत्तरार्थम्। त्रपुणी॥

नपुंसकात्॥ १७६॥

नपुंसकात् परस्यौतः शी इत्ययमादेशो भवति। कुण्डे तिष्ठतः। कुण्डे पश्य। पयसी॥

जश्शसोः शिः॥ १७७॥

नपुंसकात् परयोर्जश्शसोः शिरित्ययमादेशो भवति। कुण्डानि तिष्ठन्ति। कुण्डानि पश्य। जसो सहचरितस्य शसो ग्रहणादिह न भवति। कुण्डशो ददाति। शकारः सर्वादेशार्थः॥

अष्टाभ्य औश्॥ १७८॥

अष्टनः कृतात्वात् परयोर्जश्शसोरौशित्ययमादेशो भवति। अष्टौ तिष्ठन्ति। अष्टौ पश्य। परमाष्टौ। कृतात्वनिर्देशः किम्। अष्ट। अत्यष्टानः। शकारः सर्वादेशार्थः॥

ष्णः संख्याया लुक्॥ १७९॥

षकारान्तायाः नकारान्तायाश्च सङ्ख्यायाः परयोः जश्शसोर्लुक् भवति। षट् तिष्ठन्ति। षट् पश्य। पञ्च तिष्ठन्ति। पञ्च पश्य। सङ्ख्यासम्बन्धिनोर्जश्शसोर्ग्रहणात् अप्रधानान्न भवति। प्रियषषः प्रियपञ्चानः॥

कतेः॥ १८०॥

कतेः परयोर्जश्शसोर्लुक् भवति । कति तिष्ठन्ति । कति पश्य । अप्रधानान्न भवति । प्रियकतयः ॥

स्वमोर्नपुंसकात् ॥ १८१ ॥

सु अम् इत्येतयोर्नपुंसकलिङ्गात् परयोर्लुक् भवति । दधि तिष्ठति । दधि पश्य । पयः पयो जरयति ॥

अतोऽम् ॥ १८२ ॥

अकारान्तात् नपुंसकलिङ्गात् परयोः स्वमोरमादेशो भवति । कुण्डं तिष्ठति । कुण्डं पश्य ॥

डतरादिभ्यः पञ्चभ्योऽनेकतरात् तः ॥ १८३ ॥

डतरादिभ्यः पञ्चभ्य एकतरवर्जितेभ्यो नपुंसकलिङ्गेभ्यः परयोः स्वमोस्तकारादेशो भवति । कतरत् तिष्ठति । कतरत् पश्य । कतमत् तिष्ठति । कतमत् पश्य । अन्यत् तिष्ठति । अन्यत् पश्य । अन्यतरत् तिष्ठति । अन्यतरत् पश्य । इतरत् तिष्ठति । इतरत् पश्य । अमोऽकारस्य तकारे कृते मकारस्य संयोगान्तलोपः । पञ्चभ्य इति किम् । पूर्वं तिष्ठति । पूर्वं पश्य । अनेकतरादिति किम् । एकतरं तिष्ठति । एकतरं पश्य ॥

युष्मदस्मद्भ्यां ङसोऽश् ॥ १८४ ॥

युष्मदस्मद्भ्यां परस्य ङसोऽशित्ययमादेशो भवति । तव स्वम् । मम स्वम् । शकारः सर्वादेशार्थः ॥

ङेसुटोऽम् ॥ १८५ ॥

युष्मदस्मद्भ्यां परस्य ङे इत्येतस्य सुटां चामित्ययमादेशो भवति । तुभ्यं दीयते । मह्यं दीयते । त्वम् अहम् । युवाम् आवाम् । यूयं वयम् । त्वां माम् । युवाम् आवाम् ॥

शसो नः ॥ १८६ ॥

युष्मदस्मद्भ्यां परस्य शसो नकारादेशो भवति । सकारस्य संयोगान्तलोपः । युष्मान् अस्मान् । युष्मदस्मदोरलिङ्गत्वात् स्त्रीसामानाधिकरण्येऽप्यनेनैव भवति ॥

भ्यसोऽभ्यम् ॥ १८७ ॥

युष्मदस्मद्भ्यां परस्य भ्यसोऽभ्यमादेशो भवति । युष्मभ्यं दीयते । अस्मभ्यं दीयते । अकारादिकरणं किम् । बहुषु झल्येत्वं मा भूत् इति ॥

पञ्चम्या अत् ॥ १८८ ॥

पञ्चम्या भ्यसो युष्मदस्मद्भ्यां परस्यादित्ययमादेशो भवति। युष्मद् गच्छति । अस्मद् गच्छति ॥

ङसेश्च ॥ १८९ ॥

ङसेश्च युष्मदस्मद्भ्यां परस्यादादेशो भवति । त्वद् गच्छति । मद् गच्छति ॥

आम आकम् ॥ १९० ॥

युष्मदस्मद्भ्यां परस्याम आकमादेशो भवति। युष्माकम् अस्माकम् ॥

ह्रस्वापो नुट् ॥ १९१ ॥

ह्रस्वान्तादाबन्ताच्च परस्यामो नुडागमो भवति । वृक्षाणां खट्वानाम् । ह्रस्वाप इति किम् । वर्षाभ्वां दृषदाम् ॥

स्त्रीयूभ्याम् ॥ १९२ ॥

स्त्रीलिङ्गसम्बन्धी य ईकार ऊकारश्च ताभ्यां परस्यामो नुट् भवति । लक्ष्मीणाम् । अलाबूनाम् । स्त्रीग्रहणं किम् । ग्रामण्याम् । खलप्वाम् । (आ ? यू)भ्यामिति किम् । शरदाम् ॥

इयुवस्थानिभ्यां वा ॥ १९३ ॥

इयुवोः स्थानिनौ यौ स्त्रीसम्बन्धिनावीकारोकारौ ताभ्यां परस्यामो वा नुडागमो भवति । (स्त्री ? श्री)णां (स्त्रि ? श्रि)याम् भ्रूणां भ्रुवाम् । स्त्रिया इति किम् । सुधियाम् । कटप्रुवाम् । (स्त्री ? श्री)शब्दसम्बन्धिनोस्तु पुंस्यपि । अति(स्त्री ? श्री)णाम् अतिश्रियाम् । अतिभ्रूणाम् अतिभ्रुवां (अति ?)स्त्रीणां पुरुषाणां वा । नपुंसके तु ह्रस्वत्वेन भाव्यमिति तल्लक्षण एव नित्यो नुट् भवति (अतिश्रीणां) कुलानामिति । इयुवस्थानिभ्यामिति किम् । नदीनां वधूनाम् ॥

१. 'भ्यां नित्यम्' क. पाठः.

नित्यं स्त्रियाः ॥ १९४ ॥

स्त्रियाः परस्यामो नित्यं नुडागमो भवति । स्त्रीणाम् ॥

सङ्ख्याया अनतः ॥ १९५ ॥

थच्छन्दवर्जितायाः सङ्ख्यायाः सम्बन्धिन आमो नुडागमो भवति । चतुर्णां षण्णां पञ्चानाम् । सङ्ख्याप्रधाने समासेऽपि तत्सम्बन्धित्वाद् भवति । परमचतुर्णाम् । परमषण्णाम् । अप्रधानात् न तु भवति । प्रियचतुरां प्रियपञ्चानां प्रियषामिति । अनत इति किम् । त्रिंशतां पञ्चाशताम् ॥

त्रेस्त्रयश्च ॥ १९६ ॥

त्रेः परस्यामो नुडागमः त्रेस्त्रयादेशश्च भवति । त्रयाणां परमत्रयाणाम् । इह तु न भवति । अतित्रीणां प्रियत्रीणाम् । स्त्रियां तु परत्वात् तिसृभावो भवति । तिसृणाम् ॥

सुपो लुगैकार्थ्ये ॥ १९७ ॥

पूर्वोत्पन्नस्य सुप एकार्थीभावे लुग् भवति । पुत्रीयति । कुम्भकारः । औपगवः । राजपुरुषः । ऐकार्थ्यं इति किम् । पुत्रमिच्छति कुम्भकार इति ।

अनुपसर्जनाव्ययात् ॥ १९८ ॥

अनुपसर्जनादव्ययात् परस्य सुपो लुग् भवति । उच्चैः परमोच्चैः । अनुपसर्जनादिति किम् । अत्युच्चैसौ ॥

नाव्ययीभावादतोऽपञ्चम्यास्त्वम् ॥ १९९ ॥

अव्ययीभावादतोऽकारान्तादुत्तरस्य सुपो लुक् न भवति, पञ्चमीवर्जितस्य पुनः अमादेशो भवति । उपकुम्भं तिष्ठतीत्यादि । अत इति किम् । अधिस्त्रि । अपञ्चम्या इति किम् । उपकुम्भात् ॥

तृतीयासप्तम्योर्वा ॥ २०० ॥

अकारान्तादव्ययीभावसमासादुत्तरयोस्तृतीयासप्तम्योर्वा अमादेशो भवति । उपकुम्भम् । उपकुम्भेन । उपकुम्भम् उपकुम्भे ॥

**नित्यमृद्ध्यर्थनदीसङ्ख्यावयवात् सप्तम्याः ॥ २०१ ॥**

ऋद्ध्यर्थान्नद्यवयवाच्च सङ्ख्यावयवाच्चाकारान्तादव्ययीभावात् परस्याः सप्तम्या (नित्यममादे)शो भवति । सुमद्रम् । उन्मत्तगङ्गम् । विंशतिभारद्वाजम् । प्रतिपदोक्तस्य नव्यव्ययीभावस्य ग्रहणादिह न भवति । उपगङ्गम् उपगङ्गे ॥

**कर्मणि द्वितीया ॥ २०२ ॥**

कर्मणि कारके द्वितीयाविभक्तिर्भवति । कटं करोति । ओदनं पचति । आदित्यं पश्यति । अथ कथं क्रियते घटः, कृतः कटः, शक्यः पटः, आरूढवानरो वृक्षः इत्यादि । तिङ्कृत्तद्धितसमासैः कर्मणोऽभिहितत्वात् । वक्तव्यं तर्ह्यनभिहित इति । न वक्तव्यम् । लौकिक एवायं न्यायः शब्दान्तरेणाभिहितेऽर्थे शब्दो न प्रयुज्यत इति । यथा अश्वो गच्छतीत्युक्ते वाजी व्रजतीति । शास्त्रीयोऽपि । यथा शस्त्रीश्यामा, पुरुषव्याघ्रः, दध्योदनः, गुडधानाः, अश्वरथः, घृतगुडः, निष्कौशाम्बिरित्यादिषु तत्पुरुषेणोक्तार्थत्वात् सामान्योपसिक्तमिश्रयुक्तपूर्णनिष्क्रान्तादयो न प्रयुज्यन्ते, तथा तिङादिभिरभिहितत्वात् द्वितीयादयो न भवन्ति । यद्येवं द्वावपूपौ, अहं पचामीति सुप्तिङन्ताभ्यामुक्तार्थयोर्द्विशब्दाहंशब्दयोः कथं प्रयोगः । उच्यते । सामान्योपक्रमे विशेषोऽनुप्रयोगमर्हति । द्वावित्युक्ते न ज्ञायते कौ द्वाविति । अहमित्युक्ते न ज्ञायते पचाम्युत पठामीति । अपूपौ पचामीति तु विशेषोपक्रमे द्व्यहंशब्दयोः प्रयोगो न भवति । प्रसङ्गाद्यर्थान्तराभिधि(त्सिता ? त्सा)यां च भवति । यथा 'अहं रुद्रेभिर्वसुभिश्चरामि मार्गयोरुभयोरपी'ति । यत्रैकद्रव्याधारप्रधानाप्रधानक्रियाविषयानेकशक्तिर्भवति तत्र प्रधानक्रियाविषयायां शक्तौ लादिभिरभिहितायामप्रधानक्रियाविषया शक्तिरनभिहितापि प्रधानशक्त्यनुरोधादभिहितवत् प्रकाशमाना विभक्त्युत्पत्तौ निमित्तं न भवति । यथा पक्त्वौदनो भुज्यते देवदत्तेनेति भावाभिधायिना क्त्वाप्रत्ययेन ओदनाधिकर(णा ? ण)विषया कर्मशक्तिरनभिहितापि प्रधानभुजिक्रियाविषयशक्त्यनुरोधेनाभिहितवत् प्रकाशमाना विभक्त्युत्पत्तौ निमित्तं न भवति । यथा च ग्रामो गन्तुमिष्यते

देवदत्तेनेति प्रधानाक्रियाविषयां कर्मशक्तिमभिदधता लकारेण गमिक्रिया-विषयापि कर्मशक्तिरभिहितेति तदभिधानाय द्वितीयाचतुर्थ्यौ न भवतः ॥

समयानिकषाहाधिगन्तरान्तरेणयेनतेनयुक्तात् ॥ २०३ ॥

समयादिभिर्निपातैर्युक्तात् प्रातिपदिकात् षष्ठ्यपवादो द्वितीया-विभक्तिर्भवति । समया ग्रामं निकषा ग्रामं प्राकारः । हा देवदत्तम् । धिक् देवदत्तम् । अन्तरा त्वां च मां च कमण्डलुः । अन्तरेण गार्हपत्यमाह-वनीयं च वेदिः । नदीं येन गतः । पश्चिमां तेन नीतः । अन्तरान्तरेण शब्दौ निपातौ साहचर्यात् गृह्येते । तेनेह न भवति — किं ते केशवा-र्जुनयोरन्तरेण गतेनेति । हा नाथ !, धिक् जाल्मेत्यादावन्तरङ्गत्वात् सम्बोधनविभक्तिरेव । युक्तादिति किम् । अन्तरा तक्षशिलां पाटलीपुत्रं च स्रुघ्नस्य प्रकारः । स्रुघ्नशब्दान्न भवति । प्राकारकमण्डलुवेदिभ्यस्तु 'उपपद-विभक्तेः कारकविभक्तिर्बलीयसी'ति न भवति ॥

द्वित्वेऽध्यादिभिः ॥ २०४ ॥

'अध्युपर्यधसः समीप' इति वक्ष्यति । द्विरुक्ते अध्यादिभिर्युक्तात् प्रातिपदिकात् षष्ठ्यपवादो द्वितीयाविभक्तिर्भवति । अध्यधि ग्रामम् । उपर्युपरि ग्रामम् । अधोधो वसतिम् । द्वित्व इति किम् । अधो ग्रामस्य । असामीप्यान्न भवति । (उपरि चन्द्रमाः ।) ॥

सर्वाभिपर्युभयेभ्यस्तसा ॥ २०५ ॥

सर्वाभिपर्युभयेभ्यः परो यस्तस् तदन्तेन युक्ताद् द्वितीयाविभक्तिर्भ-वति । सर्वतो ग्रामम् । अभितो ग्रामम् । परितो ग्रामम् । उभयतो ग्रामम् ॥

ऐनपा[1] ॥ २०६ ॥

एनबन्तेन युक्तात् प्रातिपदिकात् द्वितीयाविभक्तिर्भवति । 'षष्ठ्य-तसर्थैरि'त्यस्यापवादः । दक्षिणेन हिमवन्तम् । उत्तरेण पारियात्रम् ॥

---

१. 'अएनपा' ख. ग. पाठः.

कर्मप्रवचनीयैः ॥ २०७ ॥

'अनुर्हेतुलक्षण' इत्यादयः कर्मप्रवचनीयाः । कर्मप्रवचनीयैर्युक्ताद् द्वितीयाविभक्तिर्भवति । शाकल्यसंहितामनु प्रावर्षत् । वृक्षं प्रति विद्योतते विद्युत् । युक्तादिति किम् । कुतोऽध्यागच्छति । कुतः पर्यागच्छति । 'दन्तैरपि नखैरपी'त्यादौ 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'ति तृतीयैव भवति ॥

सप्तम्याधिक्यस्वाम्ययोः ॥ २०८ ॥

आधिक्ये स्वाम्ये चार्थे कर्मप्रवचनीययुक्तात् सप्तमीविभक्तिर्भवति । उपोऽधिके कर्मप्रवचनीयः । उपखार्यां द्रोणः । उपनिष्के कार्षापणम् । अधिरीश्वरे । अधि ब्रह्मदत्ते पञ्चालाः । अधि पञ्चालेषु ब्रह्मदत्तः । उपपदविभक्तीनां षष्ठ्यपवादत्वात् प्रधानत्वाद् द्रोणादेर्न भवति । स्वस्वामिनोः पर्यायेण प्राधान्येन विवक्षा । द्रोणादेस्त्वधिकाः खार्यादयो न सम्भवन्ति ॥

पञ्चम्यपाङ्भ्याम् ॥ २०९ ॥

अपाङ्भ्यां कर्मप्रवचनीयाभ्यां युक्तात् पञ्चमीविभक्तिर्भवति । अप पाटलीपुत्राद् वृष्टो देवः । आ स्रुघ्नाद् वृष्टो देवः ॥

परिणा वर्जने ॥ २१० ॥

वर्जनार्थेन परिणा कर्मप्रवचनीयेन युक्तात् पञ्चमीविभक्तिर्भवति । परि त्रिगर्तेभ्यो वृष्टो देवः । वर्जन इति किम् । वृक्षं परि विद्योतते ॥

प्रतिनिधिप्रतिदानयोः[1] ॥ २११ ॥

प्रतिनिधिप्रतिदानयोर्द्योत्ययोः कर्मप्रवचनीययुक्तात् पञ्चमीविभक्तिर्भवति । अभिमन्युरर्जुनात् प्रति । माषानस्मै तिलेभ्यः प्रतिप्रयच्छति । अर्जुनस्याभिमन्युः प्रतिनिधिः तिलानां माषाः प्रतिदानमिति षष्ठीविषये विधानादभिमन्योर्माषेभ्यश्च कर्मप्रवचनीययोगेऽपि न भवति ॥

---

1. 'तिः प्रतिनि' ख. ग. पाठः.

## कालाध्वभ्यां कारकमध्ये सप्तमी च ॥ २१२ ॥

कारकयोर्मध्ये यौ कालाध्वानौ ताभ्यां सप्तमीविभक्तिश्चकारात् पञ्चमीविभक्तिश्च भवति । अद्य भुक्त्वा देवदत्तो द्व्यहे भोक्ता द्व्यहाद् भोक्ता । कर्तृशक्त्योर्मध्ये कालः । इहस्थोऽयमिष्वासः क्रोशे लक्ष्यं विध्यति क्रोशाल्लक्ष्यं विध्यति । कर्तृकर्मणोः, कर्मापादानयोः, कर्माधिकरणयोर्वा मध्येऽध्वा । ननु च द्व्यहे पूर्णे भुङ्क्ते, क्रोशे स्थितं लक्ष्यं विध्यतीत्यधिकरणसप्तमी । (द्व्यहात्) द्व्यहमतिक्रम्य भुङ्क्ते, क्रोशान्निस्सृत्य स्थितं लक्ष्यं विध्यतीत्यपादान एव पञ्चमी सिद्धेति नार्थः सूत्रारम्भेण । सत्यम् । यदा त्वस्यैव क्रियावाचकसम्बन्धस्य फलभूताशेषसम्बन्धलक्षणान्तरावस्था ............ सौ भुङ्क्ते योजनस्य गृह्णातीति तदापि कारकमध्ये षष्ठी मा भूदिति सूत्रमारभ्यते ॥

## द्वितीयात्यन्तसंयोगे ॥ २१३ ॥

क्रियागुणद्रव्यैः कालाध्वनोः कार्त्स्न्येन सम्बन्धोऽत्यन्तसंयोगः । तत्र क्रियासम्बन्धेन कर्मणीत्येव सिद्धा । गुणद्रव्याभ्यां त्वत्यन्तसंयोगे कालादध्वनश्चानेन द्वितीयाविभक्तिर्भवति । मासमधीते । मासं कल्याणी । मासं गुडधानाः । (क्रोशमधीते ।) क्रोशं कुटिला नदी । योजनं पर्वतः । अत्यन्तसंयोग इति किम् । (मासस्य द्विरधीते ।) मासस्यैकरात्रं कल्याणी । मासस्य गुडधानाः । (क्रोशस्य द्विरधीते ।) क्रोशस्यैकदेशे कुटिला । योजनस्यैकदेशे पर्वतः ॥

## अपवर्गे तृतीया ॥ २१४ ॥

फलप्राप्तौ सत्यां क्रियायाः परिसमाप्तिरपवर्गः । तस्मिन् गम्यमाने कालादध्वनश्चात्यन्तसंयोगे तृतीयाविभक्तिर्भवति । मासेनानुवाकोऽधीतः । क्रोशेनानुवाकोऽधीतः । अपवर्ग इति किम् । मासमधीतोऽनुवाको, न चानेन गृहीतः । मासादेर्व्याप्यमानतैव न साधकतमत्वमिति करणत्वं न भवति ॥

कर्तृकरणयोश्च ॥ २१५ ॥

कर्तरि करणे च कारके प्रातिपदिकात् तृतीया विभक्तिर्भवति । देवदत्तेन कृतम् । दात्रेण लुनाति । रामेणास्त्रेण जितः ॥

प्रकृतिप्रायगोत्रनामजातिजनुःपुमात्मादिभ्यो गम्यमानक्रियायाम् ॥ २१६ ॥

प्रकृत्यादिभ्यः प्रातिपदिकेभ्यो गम्यमानक्रियायां यथासम्भवं कर्तरि करणे वा तृतीया विभक्तिर्भवति । प्रकृत्याभिरूपः । प्रायेण याज्ञिकः । गोत्रेण गार्ग्यः । नाम्ना सत्यव्रतः । जात्या सुशीलः । जनुषान्धः । पुंसानुजः । आत्मना तृतीयः । आदिग्रहणात् स्वभावेनोदारः, निसर्गेण प्राज्ञः, शङ्कुलया खण्डः, किरिणा काणः, इत्यादावपि भवति । सर्वत्र चेह कृतभवत्यादिगम्यमानक्रियापेक्षं कर्तृत्वं करणत्वं च भवति ॥

न्यक्षकार्त्स्न्यादिभ्यः क्रियाविशेषणे ॥ २१७ ॥

न्यक्षकार्त्स्न्यादिभ्यः क्रियाविशेषणे गम्यमाने तृतीया विभक्तिर्भवति । न्यक्षेण करोति । कार्त्स्न्येन । साकल्येन । अनवयवेन ॥

सुखदुःखादिभ्यो वा ॥ २१८ ॥

सुखदुःखादिभ्यः क्रियाविशेषणे गम्यमाने तृतीया विभक्तिर्वा भवति । सुखेनास्ते सुखमास्ते । दुःखेन जीवति दुःखं जीवति । कष्टेन क्रामति कष्टं क्रामति । अनायासेन करोति अनायासं करोति ॥

समविषमादिभ्योऽधिकरणे ॥ २१९ ।

तृतीया विभक्तिर्वा भवति । समेन धावति (समे धावति) । विषमेण धावति विषमे धावति । आकाशेन याति आकाशे याति ॥

द्विद्रोणपञ्चकादिभ्यः कर्मणि वीप्सायाम् ॥ २२० ॥

द्विद्रोणादिभ्यः कर्मभ्यो वीप्सायां गम्यमानायां तृतीया विभक्तिर्वा भवति । द्विद्रोणेन क्रीणाति । (द्विद्रोणं द्विद्रोणं क्रीणाति) । पञ्चकेन पशून् क्रीणाति । पञ्चकं पञ्चकं क्रीणाति । साहस्रेणाश्वान् क्रीणाति । साहस्रं साहस्रं क्रीणाति ॥

संज्ञश्च ॥ २२१ ॥

सम्पूर्वाज्जानातेश्च कर्मणि तृतीया विभक्तिर्वा भवति । मात्रा सञ्जानीते । मातरं सञ्जानीते ॥

अशिष्टव्यवहारे सम्प्रयच्छतेः सम्प्रदाने ॥ २२२ ॥

अशिष्टव्यवहारविषये सम्प्रयच्छतेः सम्प्रदाने कारके तृतीया विभक्तिर्भवति । दास्या सम्प्रयच्छते ॥

सहार्थयोगे ॥ २२३ ॥

अर्थार्थिपूर्वापरकलहनिपुणमिश्रश्लक्ष्णोनार्थैः ॥ २२४ ॥

इत्थम्भूतलक्षणात् ॥ २२५ ॥

अङ्गाद् विकृतात् तद्विकारेणाङ्गिवचने ॥ २२६ ॥

हेतौ ॥ २२७ ॥

ऋणे पञ्चमी ॥ २२८ ॥

गुणे वा ॥ २२९ ॥

न स्त्रियाम् ॥ २३० ॥

अनुपलब्ध्यादिभ्यः ॥ २३१ ॥

षष्ठी हेतोः प्रयोगे ॥ २३२ ॥

पर्यायाणां द्वितीया सर्वनामभ्यः ॥ २३३ ॥

चतुर्थी सम्प्रदाने ॥ २३४ ॥

परिक्रियः करणे वा ॥ २३५ ॥

क्लृप्त्यर्थकर्त्तरि विकारे ॥ २३६ ॥

उत्पातेन ज्ञाप्यमाने ॥ २३७ ॥

तादर्थ्ये ॥ २३८ ॥

तुमर्थाच्च भाववचनात् ॥ २३९ ॥

तुमुनोऽप्रयुज्यमानस्य कर्मणि ॥ २४० ॥

गत्यर्थानां चेष्टायामनास्थिताध्वनि वा ॥ २४१ ॥

मन्यतेः प्रतिकृष्यकुत्सायामुपमानेभ्यः ॥ २४२ ॥

न नावन्नकाकशुकसृगालेभ्यः ॥ २४३ ॥

नमस्स्वस्तिस्वाहास्वधालंवषट्पर्याप्त्यर्थे ॥ २४४ ॥

अपादाने पञ्चमी ॥ २४५ ॥

ल्यब्लोपे कर्माधिकरणयोः ॥ २४६ ॥

प्रश्नाख्यानयोश्च ॥ २४७ ॥

प्रभृत्यन्यार्थारादितरदिक्शब्दाञ्चूत्तरपदाजाहियोगे [॥ २४८ ॥

ऋते द्वितीया च ॥ २४९ ॥

विना तृतीया च ॥ २५० ॥

पृथङ्नानाभ्याम् ॥ २५१ ॥

स्तोकाल्पकृच्छ्रकतिपयेभ्योऽसत्त्वार्थेभ्यः करणे ॥ २५२ ॥

कालाध्वपरिच्छेदमूलात् पञ्चमी ॥ २५३ ॥

तेन योगे कालात् सप्तमी ॥ २५४ ॥

अध्वनः प्रथमा च ॥ २५५ ॥

षष्ठ्यतसर्थैः ॥ २५६ ॥

दूरान्तिकार्थबहिर्भिः पञ्चमी च ॥ २५७ ॥

दूरान्तिकार्थेभ्योऽसत्त्ववचनेभ्यो द्वितीयातृतीयासप्त- [म्यश्च ॥ २५८ ॥

अधिकरणे सप्तमी ॥ २५९ ॥

क्तस्येन्विषयस्य कर्मणि ॥ २६० ॥

निमित्तात् कर्मसंयोगे ॥ २६१ ॥

अप्रत्यादिष्वसाधुना ॥ २६२ ॥

साधुना च ॥ २६३ ॥

निपुणेन चार्चायाम् ॥ २६४ ॥

क्रियार्हेभ्यः कारकत्वे ॥ २६५ ॥

क्रियानर्हेभ्यश्चाकारकत्वे ॥ २६६ ॥

तद्विपर्यासे च ॥ २६७ ॥

यस्य च भावेन भावलक्षणम् ॥ २६८ ॥

षष्ठी चानादरे ॥ २६९ ॥

स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च ॥ २७० ॥

आयुक्तकुशलाभ्यामासेवायाम् ॥ २७१ ॥

यतो निर्धारणम् ॥ २७२ ॥

पञ्चमी विभक्तात् ॥ २७३ ॥

सप्तमी चाधिकेन भूयसः ॥ २७४ ॥

तृतीयाल्पीयसः ॥ २७५ ॥

प्रसितोत्सुकाभ्यामधिकरणे वा ॥ २७६ ॥

नक्षत्राच्च लुपि ॥ २७७ ॥

अर्थमात्रे प्रथमा ॥ २७८ ॥

सम्बोधने च ॥ २७९ ॥

षष्ठी शेषे ॥ २८० ॥

.... .... ....

.... .... ....

"(अन्येन व्यपदिष्टस्य यस्यान्यत्रोपजायते ।
व्यतिरेकः स) धर्मौ द्वौ लभते विषयान्तरे ॥
प्राधान्यं स्वगुणे लब्ध्वा विधाने याति शेषताम् ।
सहयोगे स्वयोगे च प्रधानत्वं न हीयते ॥"

स्मृत्यर्थदयेशां कर्मणि ॥ २८१ ॥

स्मरणार्थानां दयतेरीशेश्च कर्मणि शेषत्वेन विवक्षिते षष्ठी विभक्ति-र्भवति। मातुः स्मरति। मातुरध्येति। मातुरुत्कण्ठते। मातुः प्रध्यायति। सर्पिषो दयते। मधुन ईष्टे। कर्म(ण ? णि) इति किम्। यथा (मातुर्गुणैः) स्मरति। शेष इत्येव। मातरं स्मरति। कर्मणः शेषत्वविवक्षायां न माषाणा-मश्नीयादित्यादिवत् पूर्वेणैव षष्ठी भविष्यति। सत्यम्। किन्तु 'प्रतिपदविधाना षष्ठी (न) समस्यत' इति वक्ष्यति। तस्मात् तेन प्रकरणेन विषयं प्रदर्शयन् प्रदर्शयति मातुः स्मृतमित्यादौ समासो मा भूदिति। तदाह —

"साधनैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः।
प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये॥"

कृञः प्रतियत्ने ॥ २८२ ॥

सतो गुणान्तराधानं प्रतियत्नः। तस्मिन् गम्यमाने करोतेः कर्मणि शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति। एधो दकस्योपस्कुरुते। शस्त्रपत्र-स्योपस्कुरुते। प्रतियत्न इति किम्। कटं करोति। कर्मणीत्येव। एधो दक-स्योपस्कुरुते प्रज्ञया। शेष इत्येव। एधो दकमुपस्कुरुते॥

रुजार्थानां भावकर्तृकाणाम् ॥ २८३ ॥

रुजा पीडा, तदर्थानां धात्वर्थकर्तृकाणां कर्मणि शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति। चोरस्य रुजति। चोरस्यामयति॥

न ज्वरिसन्ताप्योः ॥ २८४ ॥

चोरं सन्तापयति॥

आशिषि नाथः ॥ २८५ ॥

नाथतेराशीरर्थस्य कर्मणि शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति। सर्पिषो नाथते। मधुनो नाथते। सर्पिर्मे भूयादिति, तत् मधु मे भूयादि-त्याशास्त इत्यर्थः। आशिषीति किम्। सर्पिर्नाथति। माणवकमुपनाथति॥

जासिनाटिक्राथिपिषां हिंसायाम् ॥ २८६ ॥

हिंसा प्राण्युपघातस्तदर्थानां जासि इत्यादीनां कर्मणि शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति। चोरस्योज्जासयति। चोरस्योन्नाटयति। चोरस्योत्क्राथयति। चोरस्य पिनष्टि। हिंसायामिति किम्। धानाः पिनष्टि। शेष इत्येव। चोरमुज्जासयति॥

हनः प्रनिभ्याम्॥ २८७॥

प्रनिभ्यां परस्य हनः कर्मणि शेषत्वेन विवक्षिते हिंसायां गम्यमानायां षष्ठी विभक्तिर्भवति। चोरस्य प्रणिहन्ति। प्रणिहन इति वक्तव्ये प्रनिभ्यामिति पृथङ्निर्देशाद् व्यस्तविपर्यस्ताभ्यामपि भवति। चोरस्य प्रहन्ति। चोरस्य निहन्ति। चोरस्य निप्रहन्ति। शेष इत्येव। (शेषं ? चोरं) प्रणिहन्ति। चोरं निप्रहन्ति। चोरं निहन्ति॥

व्यवहृपणोर्विनिमये॥ २८८॥

विनिमयः क्रयविक्रयः। तदर्थयोर्व्यवहृपणोः कर्मणि शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति। शतस्य व्यवहरति। सहस्रस्य व्यवहरति। शतस्य पणते। सहस्रस्य पणते। अक्षादिभिर्दीव्यन् शतादिग्लहं करोतीत्यर्थः॥

द्यूते च॥ २८९॥

योगविभागो यथासङ्ख्यनिरासार्थः॥

दिवस्तदर्थस्य॥ २९०॥

दीव्यतेर्व्यवहृपणिसमानार्थस्य विनिमये द्यूतवृत्तेः कर्मणि शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति। शतस्य दीव्यति। सहस्रस्य दीव्यति। तदर्थस्येति किम्। ब्राह्मणान् दीव्यति स्तौतीत्यर्थः। योगविभाग उत्तरार्थः॥

वोपसर्गात्॥ २९१॥

उपसर्गात् परस्य दीव्यतेः कर्मणि शेषत्वेन विवक्षिते षष्ठी विभक्तिर्वा भवति। शतस्य प्रतिदीव्यति। शतं प्रतिदीव्यति॥

ज्ञोऽविदर्थस्य करणे॥ २९२॥

जानातेरवि(दर्थस्या)ज्ञानार्थस्य यत् करणं तस्मिन् शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति। सर्पिषो जानीते। ज्ञानपूर्विकायां प्रवृत्तावत्र जा-

नातिवर्तते । यदि वा सर्पिःष्वारक्तो विरक्तो वा चित्तभ्रान्त्या सर्वमेवोदकादि सर्परूपेण प्रतिपद्यत इति मिथ्याज्ञानवचनोऽत्र जानातिः । मिथ्याज्ञानं चा(त्म ? ज्ञा)नमेव भवति । अविदर्थस्येति किम् । स्वरेण पुत्रं जानाति ॥

कृत्वोर्थप्रयोगे कालेभ्योऽधिकरणे ॥ २९३ ॥

सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुचं (तदर्थप्रत्ययो ?) वक्ष्यति । तदर्थप्रत्ययप्रयोगे कालवाचिभ्यः प्रातिपदिकेभ्योऽधिकरणे शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति । पञ्चकृत्वोऽह्नो भुङ्क्ते । द्विरह्नो भुङ्क्ते । कृत्वोर्थप्रयोग इति किम् । अह्नि भुङ्क्ते । रात्रौ शेते । कालेभ्य इति किम् । द्विः कांस्यपात्र्यां भुङ्क्ते । शेष इत्येव । द्विरह्नि अधीते । प्रतिपदषष्ठ्या पूर्वं बाधः ॥

कर्तृकर्मणोः कृति ॥ २९४ ॥

शेष इति निवृत्तं पुनः कर्मग्रहणात् । कृदन्तस्य प्रयोगे कर्तरि कर्मणि च कारके तृतीयाद्वितीययोरपवादः षष्ठी विभक्तिर्भवति । भवत आसिका । भवतः शायिका । अपां स्रष्टा । पुरां भेत्ता । यवानां लावकः । कर्तृकर्मणोरिति किम् । गृहे शायिका । शस्त्रेण भेत्ता । कृतीति किम् । तद्धितप्रयोगे मा भूत् । कृतपूर्वी कटम् । भुक्तपूर्वी ओदनम् । ननु च वाक्ये तेन वानेन न भवितव्यम् । कृतः पूर्वं कटोऽनेनेति कृत्प्रत्ययेनाभिहितं कर्मेति कटादेर्द्वितीयया तावन्नोत्पत्तव्यम् । तद्धितेनापि नोत्पत्तव्यम् । किं कारणम् । असामर्थ्यात् । कथमसामर्थ्यम् । सापेक्षमसमर्थं भवतीति । नैतदेवम् । योऽसौ कृतकटयोरपि सम्बन्धः स समुत्पन्ने प्रत्यये निवर्त्तते । अस्ति च करोतेः कटेन सामर्थ्यमिति द्वितीया भवति । अथवा कृतः कटः पूर्वमनेनेति वाक्ये कृतकटयोस्सामानाधिकरण्यं, तस्मिन्नर्थविशेषे वृत्तिरेव न भवति । तस्याः सामान्यविषयत्वात् । तस्मात् कर्मसामान्याभावे वा वृत्तिविषयः क्तप्रत्ययोऽवतिष्ठते । तत्र कृतः पूर्वमनेनेत्यर्थे कृतपूर्वशब्दो वर्तते । तेन पूर्वं कृतवानित्यर्थः सम्पद्यते । तत्र करोतिवाच्यक्रियापेक्षमस्ति कटस्य कर्मत्वमिति द्वितीया भवति ॥

उभयहेतावस्त्र्यकाकारे कर्तरि वा ॥ २९५ ॥

उभययोः कर्तृकर्मषष्ठ्योः प्राप्तिहेतौ स्त्र्यधिकारविहिताकाकारयोरन्यत्र एकस्मिन् कृतिपूर्वे नित्यं प्राप्ता षष्ठी कर्तरि वा भवति। विचित्रा सूत्रस्य कृतिः पाणिनेः । पाणिनिनेति वा । शब्दानामनुशासनमाचार्यस्य आचार्येणेति वा । आश्चर्यो गवां दोहः अगोपालकेन अगोपालकस्येति वा । साधु खलु पयसः पानं यज्ञदत्तस्य यज्ञदत्तेनेति वा । उभयहेताविस्येकवचननिर्देशः किम् । आश्चर्यमिदमोदनस्य च पाको ब्राह्मणानां च प्रादुर्भावः। अस्त्र्यकाकार इति किम्। भेदिका देवदत्तस्य काष्ठानाम्। चिकीर्षा विष्णुमित्रस्य कटस्य ॥

द्विषः श[2]तरि ॥ २९६ ॥

शतरि प्रयुज्यमाने कर्मणि नित्यं प्राप्ता (ज? उत्त)रसूत्रेण प्रतिषिद्धा षष्ठी (वा) भवति । चोरस्य द्विषन् चोरं द्विषन् ॥

न लादेशतृन्नुदन्ताव्ययकिकिन्खलर्थेषु ॥ २९७ ॥

लादेशादिषु कृत्सु प्रयुज्यमानेषु कर्तृकर्मणोः कृतीति प्राप्ता षष्ठी विभक्तिर्न भवति। ओदनं पचन् । ओदनं पचमानः। देवदत्तेन पच्यमानः । कटं करिष्यन् कटं करिष्यमाणः । कटं कारयामास । ओदनं पेचिवान्। वेदमनूचानः। सोमं पवमानः। कती(यतेर्व ? ह व) पुर्भूषयमाणाः। कतीह कवचमुद्व(य ? ह)मानाः । (कतीह कवचमुज्वयमानः ?) कतीह शत्रून्घ्नि(हन्तारः ? घ्नानाः) । अ(तीह ? धीयन्) पारायणम् । कर्ता कटम् । (वि ? व)दिता जनापवादान् । कटं चिकीर्षुः । स्त्रियमाशंसुः । कन्यामलङ्करिष्णुः । अरीन् जिष्णुः । शरान् क्षिप्नुः । (वेदान् ?) सन्धारुः । गुणान् ग्रहयालुः । पयो धातुम् । कटं कृत्वा । पयः पायंपायं व्रजति । ओदनं भोक्तुं व्रजति । भरं सासहिः । ईषत्करः कटो भवता । ईषत्पानः सोमो भवता ॥

---

१. 'क' ख. पु. पाठः. २. 'त्रा' क. पाठः.

अकमेरुकञि ॥ २९८ ॥

कमेरन्यस्माद्धातोः परस्मिन्नुकञि प्रयुज्यमाने कर्मणि षष्ठी विभक्तिर्न भवति । आ(का? गा)मुकं वाराणसीं रक्ष आहुः । भोगानभिलाषुकः । अकमेरिति किम् । दास्याः कामुकः ॥

अमत्यांद्यर्थाधिकरणे निष्ठायाम्[1] ॥ २९९ ॥

मतिबुद्धिपूजार्थेभ्योऽधिकरणे च या निष्ठा ततोऽन्यस्यां प्रयुज्यमानायां कर्मणि षष्ठी विभक्तिर्न भवति । भुक्त ओदनो देवदत्तेन । गतो ग्रामं देवदत्तः । ओदनं भुक्तवान् । ग्रामं गतवान् । अमत्याद्यर्थाधिकरणेति किम् । राज्ञां मतः । राज्ञा बुद्धः । राज्ञां पूजितः । इदमहेरभुतम् । इदं नटकपेर्यातमिति ॥

भावे वा ॥ ३०० ॥

भावे या निष्ठा तस्यां प्रयुज्यमानायां कर्तरि षष्ठी वा न भवति छात्रस्य हसितम् । छात्रेण हसितम् । मयूरस्य नृत्तं मयूरेण नृत्तम् । कोकिलस्य व्याहृतं कोकिलेन व्याहृतम् । अहेस्सुतम् । इहाहिना सुप्तम् ॥

अके भविष्यति ॥ ३०१ ॥

भविष्यति काले अकप्रत्ययो विहितः, तस्मिन् प्रयुज्यमाने कर्मणि षष्ठी विभक्तिर्न भवति । कटं कारको व्रजति । ओदनं कारको व्रजति । (भविष्यतीति किम् ) । कटस्य कारकः । यवानां लावकः । इह कथं न भवति — वर्षशतस्य पूरकः, पुत्रपौत्राणां दर्शकः । नायं भविष्यति काले- विहितः । पदान्तरसम्बन्धाद् भविष्यत्तावगम्यते ॥

इन्याधमर्ण्ये च ॥ ३०२ ॥

भविष्यत्याधमर्ण्ये च य इनिप्रत्ययो विहितस्तत्प्रत्यययोगे षष्ठी विभक्तिर्न भवति । ग्रामं गामी ग्राममागामी । शतं दायी । सहस्रं दायी । आधमर्ण्य इति किम् । अवश्यंकारी कटस्य । साधुदायी (वृ? वि)त्तस्य ॥

---

१. 'त्यार्थाद्यधि' ख. ग. पाठः.

कृत्येषु कर्तरि वा ॥ ३०३ ॥

तव्यादयः प्राङ् ण्वुलः कृत्याः । एतेषु प्रयुज्यमानेषु कर्तरि षष्ठी विभक्तिर्वा भवति । भवता खलु कटः कर्तव्यः करणीयः कृत्यः कार्यः । भवतः खलु कटः कर्तव्यः करणीयः कृत्यः कार्यः । कर्तरीति किम् । गेयो माणवकः साम्नाम् । उप(स्ना ? स्था)नीयो माणवकः पितुः ॥

नोभयप्राप्तौ ॥ ३०४ ॥

उभयोः कर्मणोः प्राप्तिर्यस्मिन् कृत्ये स उभयप्राप्तिस्तत्प्रयोगे कर्तृकर्मणोः षष्ठी विभक्तिर्न भवति । क्रष्टव्या ग्रामं शाखा देवदत्तेन । नेतव्या नगरमजा विष्णुमित्रेण । दातव्यः शतं देवदत्तो यज्ञदत्तेन । उभयप्राप्ताविति बहुव्रीह्याश्रयणाद् यत्र कृत्ये कर्तृकर्मणोः षष्ठीप्रसङ्गस्तत्रैव निषिद्धः । तेनेह न भवति — गेयो माणवकः साम्नाम् । गेयानि माणवकस्य सामानीति ॥

तुल्यार्थैरतुलोपमाभ्यां तृतीया च ॥ ३०५ ॥

तुलोपमाशब्दाभ्यामन्यैस्तुल्यार्थैः शब्दैर्योगे तृतीया यथाप्राप्ता च षष्ठी विभक्तिर्भवति । तुल्यो देवदत्तेन तुल्यो देवदत्तस्य । सदृशो देवदत्तेन सदृशो देवदत्तस्य । अतुलोपमाभ्यामिति किम् ।

"अर्जुनस्य तुला नास्ति केशवस्योपमा च न ॥"

हितसुखाभ्यां चतुर्थी च ॥ ३०६ ॥

हितसुखाभ्यां योगे चतुर्थी यथाप्राप्ता च षष्ठी भवति । देवदत्ताय हितं, देवदत्तस्य हितम् । देवदत्ताय सुखं, देवदत्तस्य सुखम् ॥

आशिष्यायुष्यभद्रार्थकुशलार्थैश्च ॥ ३०७ ॥

(भद्रार्थकुशलार्थैश्च ?) आशिषि गम्यमानायाम् आयुष्यार्थे (भद्रार्थे अर्थार्थे) कुशलार्थे हितसुखाभ्यां त(द)र्थैश्च (योगे) चतुर्थी षष्ठी च विभक्तिर्भवति । आयुष्यं देवदत्ताय आयुष्यं देवदत्तस्य । चिरं जीवितं

देवदत्ताय चिरं जीवितं देवदत्तस्य। एवं भद्रं मद्रम् अर्थः प्रयोजनं कुशलमनामयं हितं पथ्यं सुखं शर्म भूयादिति ॥

इति श्रीदण्डनाथनारायणभट्टसमुद्धृतायां सरस्वतीकण्ठाभरणस्य
व्याकरणस्य लघुवृत्तौ हृदयहारिण्यां
तृतीयस्याध्यायस्य प्रथमः पादः ॥

---

## अथ द्वितीयः पादः।

### सुप् सुपा सहैकार्थीभावे समासः ॥ १ ॥

अधिकारोऽयम्। 'उपसर्जनं पूर्वमि'त्यतः प्राग् यदित ऊर्ध्वमनुक्रमिष्यामस्तत्र सुबन्तं सुबन्तेन सहैकार्थीभावे सति समाससंज्ञं भवति। एकार्थीभावश्च सकृदर्थानां पदानां क्वचित् परस्परव्यपेक्षालक्षणं सामर्थ्यमनुभूय भवति। यथा राज्ञः पुरुषो राजपुरुषः। नीलं च तदुत्पलं च नीलोत्पलमिति। क्वचिद(न)नुभूयैव भवति। यथा उपकुम्भं कुम्भकार इति। तत्र वाक्यान्तरेणार्थं प्रदर्श्य ततः कुम्भस्य समी(पं ? पे) कुम्भं करोतीति। क्वचिन्नैव भवति। यथा छात्राणां पञ्चमः रामो जामदग्न्य इति। लक्षणं चेदमाधिकारश्च। तेनाव्ययीभावादिविशेषसंज्ञाभावे यः समासो दृश्यते सोऽनेनैव साधुर्भवति। 'सुप्सुपे'ति च गुणे सङ्ख्याया विवक्षितत्वाद् 'अनेकमन्यपदार्थे' इति द्वयोरेव पदयोः समाससंज्ञा भवति। तेन राज्ञो गोः क्षीरमिति द्वयोर्द्वयोः समासे राज्ञो गौः राजगवी तस्याः क्षीरं राजगवक्षीरमिति भवति। यदा तु गोक्षीरं राज्ञो विराजति (इति) विग्रहस्तदा राज(विग्रहो ? गो)क्षीरमित्यपि। किन्तु राज्ञो या गौस्तस्यास्तन्नियोगतो न भवति। कथं तर्हि द्वे अहनी जातस्य द्व्यहजात इति बहूनां समासः। 'कालाः परिमाणिना' इति बहुवचननिर्देशाद् बहुलाधिकाराद्वा भविष्यति॥

### विस्पष्टादीनि गुणविशेषणतायाम् ॥ २ ॥

विस्पष्टादीन्यष्टमेऽध्याये वक्ष्यन्ते। तानि सुबन्तानि (बहु ? गुण)-विशेषणतायां सुबन्तेन सहैकार्थीभावे समस्यन्ते। विस्पष्टं पटुर्विस्पष्टपटुः।

विचित्रं कटुकः विचित्रकटुकः । विचित्रकषायः । व्यक्तलवणः । सम्यङ्-मधुरः । कट्वम्लः । निपुणपण्डितः । कुशलदक्षः । चपलवत्सलः ॥

काष्ठादीनि क्रियाविशेषणतायाम् ॥ ३ ॥

काष्ठादीनि क्रियाविशेषणतायां सुपा सहैकार्थीभावे समस्यन्ते । काष्ठा परः प्रकर्षः । का(ष्ठम ? ष्ठा)ध्यापकः काष्ठमध्यापकः । दारुणमध्यापकः । समा(स ? ता) पुत्राध्यापकः । अमातापुत्राध्यापकः । निष्ठुरमध्यापक इत्यर्थः । वेशं सुभगमध्यापकः वेशाध्यापकः । एवमनाज्ञताध्यापकः । अयुताध्यापकः । भृशाध्यापकः । घोराध्यापकः । परमाध्यापकः । स्वाध्यापकः । अत्यध्यापक इति ॥

सर्वचर्माद्यश्वोदशैकादशमाशब्दोर्ध्वमुहूर्तोर्ध्वदेहोर्ध्वन्दमकृतपूर्वादयस्तद्धिते ॥ ४ ॥

सर्वचर्मादयः सामान्यसमासास्तद्धितविषये साधवो भवन्ति । सर्वश्चर्मणा वृतः सर्वचर्मीणो रथः । अद्य श्वो वा (वापि ?) जायते अद्यश्वीना गौः । दशभिरेकादश गृह्णाति दशैकादशिकः । मा शब्दः क्रियतामित्याह माशब्दिकः । ऊर्ध्वं मुहूर्ताद् भवमूर्ध्वमौहूर्तिकम् । एवमौर्ध्वदैहिकम् । ऊर्ध्वन्दमिकम् । कृतः पूर्वं कटोऽनेन कृतपूर्वी कटम् । भुक्तपूर्वी ओदनम् । गतपूर्वी ग्रामम् इति ॥

काकतालादय इवार्थे ॥ ५ ॥

इवार्थद्योतको यस्तद्धितस्तद्विषये काकतालादयः सामान्याः समासाः साधवो भवन्ति । काकागमनतालपतनतुल्यं तज्जनितकाकवधादितुल्यं काकतालीयम् । एवमजाकृपाणीयम् । अन्धाङ्घ्रिन्यासवर्त्तिकानिलयनतुल्यं तज्जनितवर्तिकावाप्तितुल्यं वा अन्धकवर्त्तकीयम् । ख(गा ? लत्या)गमनबिल्वपतनतुल्यं तज्जनिताभिघाततुल्यं वा खलतिबिल्वीयम् ॥

इवेन विभक्त्यलोपश्च ॥ ६ ॥

सुबन्तमिवेन सहैकार्थीभावे समस्यते । स .... .... .... संज्ञं भवति । विभक्तिश्च न लुप्यते । कन्ये इव । दम्पती इव । वाससी इव ।

त इत्येव साधु ।

रोदसी इव। वक्ष्यन्ति वेदागनिगन्तिकर्मण्णाणिमिति (?)। ऐकपद्यमैकस्वर्यं च समासाद् भवति॥

भूतपूर्वादयः॥ ७॥

भूतपूर्वादयः सामान्यसमासाः साधवो भवन्ति। भूतः पूर्वं भूतपूर्वः। एवं दृष्टपूर्वः श्रुतपूर्व इति। सेयमनन्तरा षट्सूत्री प्रथमसूत्रस्यैव प्रपञ्चः। अत उत्तरं विशेषसंज्ञार्थ आरम्भो भवति॥

अव्ययीभावः॥ ८॥

अयमप्यधिकारः। प्राक् तत्पुरुषाद् यः समासः सोऽव्ययीभावसंज्ञो भवति। अधिस्त्रि। उपकुम्भम्। महत्याः संज्ञायाः करणमनव्ययमव्ययं भवतीत्यर्थान्तरं प्रदर्शयत् प्रायेणासत्त्ववचनमव्ययीभावस्य दर्शयति॥

अव्ययं विभक्त्यर्थे[1]॥ ९॥

विभक्त्यर्थे वर्तमानमव्ययं सुबन्तं सुबन्तेन सहैकार्थीभावे समस्यते। अव्ययीभावश्च समासो भवति। (अधिस्त्रि। अधिकुमारि। सप्तम्यर्थे यदव्ययं तद् विभक्तिवचनम्॥)

समीपसमृद्ध्योश्च॥ १०॥

.... .... .... .... ....

कुम्भस्य समी(पम् ? पे) उपकुम्भम्। उपतीरम्। ऋद्धेराधिक्यं समृद्धिः। समृद्धिर्मद्राणां सुमद्रम्। सुमगधम्॥

असमृद्ध्यर्थाभावात्ययासम्प्रतिषु॥ ११॥

असमृद्ध्यादिषु वर्तमानमव्ययं सुबन्तं सुबन्तेन सहैकार्थीभावे समस्यते। अव्ययीभावश्च समासो भवति। शाब्दिकानां समृद्ध्यभावो दुश्शाब्दिकम्। दुर्यवनम्। मक्षिकाणामभावो निर्मक्षिकम्। शीतानामत्ययो निःशितम्। निर्हिमम्। तैसृकस्याच्छादनादेः सम्प्रत्युपभोगकालो न भवति। अतितैसृकम्। अ(धि ? ति)कम्बलम्॥

ख्यातिपश्चादर्थयोः॥ १२॥

---

1. 'र्थे समीपसमृद्ध्यर्थाभावा' ग. पाठः.

ख्यातौ पश्चादर्थे च वर्तमानमव्ययं सुपा सहैकार्थीभावे समस्यते। अव्ययीभावश्च समासो भवति। कपस्य (?) ॥

योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यसदृशेषु ॥ १३ ॥

यौगपद्यानुपूर्व्यसम्पत्तिसाकल्यान्तवचनेषु ॥ १४ ॥

यौगपद्यादिष्वर्थेषु वर्तमानमव्ययं सुपा सहैकार्थीभावे समस्यते। अव्ययीभावश्च समासो भवति। युगपच्चक्राणि धेहि सचक्रं धेहि। ज्येष्ठानुपूर्व्यमनुज्येष्ठम्। वृद्धानुक्रमेण यथावृद्धम्। सम्पन्नं ब्रह्म सब्रह्म परमाराणाम्। सक्षत्रं शालङ्कायनानाम्। सतृणमभ्यवहरति। सबुसम्। न किञ्चिदभ्यवहार्यं परित्यजतीत्यर्थः। अन्तवचने सकलं ज्यौतिषमधीते। समुहूर्त्तं साग्न्यधीते। सेष्टि। सपशुबन्धम्। कलादिपर्यन्तमेवाधीत इत्यर्थः। तेन साकल्याद् भिद्यते ॥

यथासादृश्ये ॥ १५ ॥

यथेत्येतदव्ययम् (असादृश्ये वर्तमानं) सुपा सहैकार्थीभावे समस्यते। अव्ययीभावश्च समासो भवति। यथावृद्धं ब्राह्मणानामन्त्रयस्व। (योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथाशब्दार्थाः) ॥

यावदियत्त्वे ॥ १६ ॥

प्रतिना मात्रार्थे ॥ १७ ॥

सङ्ख्याक्षशलाकाः परिणा द्यूतेऽन्यथावृत्तौ ॥ १८ ॥

पर्यपाङ्बहिरञ्चवः पञ्चम्या ॥ १९ ॥

लक्षणेनाभिप्रती आभिमुख्ये ॥ २० ॥

अनुः सामीप्यायामयोः ॥ २१ ॥

सामीप्यायामयोरिति किम्। वृक्षमनु विद्योतते। लक्षणेनेति किम्। लक्ष्येणाशनिवाराणस्यादिना मा भूत् ॥

तिष्ठद्गुवहद्ग्वायतीगवानि कालविशेषे नचान्यसमासः ॥ २२ ॥

तिष्ठद्ग्वादीनि शब्दरूपाणि कालविशेषेऽव्ययीभावसंज्ञानि साधूनि भवन्ति। न चान्येन सह समस्यन्ते। विभाषाधिकारेऽपि नित्यसमास

एवायम्। नहि वाक्येनेति किम्? ह) कालसंज्ञा गम्यते। तिष्ठन्ति गावो यस्मिन् काले वाहाय दोहाय वा तिष्ठद्गु। आयन्ति गावो यस्मिन् काले आयतीगवं कालः॥

लूनलूयमानपूतपूयमाना यवेन नच व्यतिरेकविभक्तिः॥ २३॥

लूनादयः शब्दाः सुबन्ता यवशब्देन सुबन्तेन सह समस्यन्ते। अव्ययीभावश्च समासो भवति। नचैतेभ्यो द्वितीयादिका व्यतिरेकविभक्तिर्भवति॥

खलेसंहृतसंह्रियमाणा बुसेन च॥ २४॥

खले बुसान्यस्मिन् खलेबुसम्। खलेयवम्। निपातनात् सप्तम्या अलुक्। संहृतबुसम्। संहृतयवम्। संह्रियमाणबुसम्। संह्रियमाणयवम्॥

सुविनिर्दुरपरायतिपापपुण्यानि समया॥ २५॥

सुप्रभृतीनि सुबन्तानि समाशब्देन सुबन्तेन सह वा समस्यन्ते। अव्ययीभावश्च समासो भवति। शोभना समा अस्मिन् सुषमम्। एवं विषमं निष्षमम्। दुष्षमम्। अपरसमम्। आयतीसमम्। पापसमम्। पुण्यसमम्। समृद्धिः समायाः सुषममित्यादि तु पूर्वेणैव सिद्धम्। उत्तरपदार्थप्राधान्ये तु तत्पुरुष एव भवति। शोभना समा सुसमा॥

समं भूमिपदातिभ्यामन्यपदार्थे॥ २६॥

सममित्येतत् सुबन्तमन्यपदार्थे भूमिपदातिभ्यां सुबन्ताभ्यां सहैकार्थीभावे समस्यते। अव्ययीभावश्च समासो भवति। समा भूमिरस्मिन् समंभूमि। समंपदाति। पूर्वपदस्य मान्तत्वं निपातनात्। कालभावयोरेवायमन्यपदार्थ इष्यते। तेन समा भूमिरस्मिन् ग्रामे समभूमिर्ग्राम इत्यपि भवति। अन्यपदार्थ इति किम्। समा भूमिः समभूमिरिति तत्पुरुष एव भवति॥

प्रोऽह्नरथमृगदक्षिणाभिः॥ २७॥

प्र इत्येतत् सुबन्तमह्नादिभिः सुबन्तैः सहैकार्थीभावे समस्यते। अव्ययीभावश्च समासो भवति। प्रक्रान्तमहोऽस्मिन्। प्रगता रथा अस्मिन्।

१. 'प्रा' क, 'प्रेयोऽह्न' ग. पाठः. २. 'प्रय इ.' क. पाठः.

प्रनष्टा मृगा अस्मिन् । प्रकृता दक्षिणा अस्मिन् । प्राह्णम् । निपातनादह्नादेशः । प्ररथं, प्रमृगं, प्रदक्षिणं वर्तते । कालभावयोरेवायमन्यपदार्थ इष्यते । तेन प्रगता मृगा अस्मात् प्रमृगो देश इत्यपि भवति । पूर्वपदार्थप्राधान्ये तु प्रणाशो मृगाणां प्रमृगमिति पूर्वेणैव भवति । उत्तरपदार्थप्राधान्ये तु तत्पुरुष एव भवति । प्राह्णः । प्ररथः । प्रमृगः । प्रदक्षिणः ॥

**सम्प्रत्यसम्प्रत्यप्रदक्षिणानि वर्तमानावर्तमानवामेषु॥ २८ ॥**

सम्प्रत्यादीनि शब्दरूपाणि वर्तमानादिष्वर्थेषु साधूनि भवन्ति । सम्प्रति इदानीमित्यर्थः । तदभावः असम्प्रति । अप्रदक्षिणं वामम् । सम्प्रतिप्रदक्षिणाभ्यां नञ्समासेन सिद्धे पुनर्निपातनं 'नचान्यसमास' इत्येतदिहाप्यनुवर्त्तत इति दर्शयति । तेन लूनयवादीनामप्यन्येन सह समासो भवति ॥

**पारेमध्येऽग्रेऽन्तः षष्ठ्या वा ॥ २९ ॥**

पारेप्रभृतीनि सुबन्तानि षष्ठ्यन्तेन सहैकार्थीभावे वा समस्यन्ते । अव्ययीभावश्च समासो भवति । तत्सन्नियोगेन चाद्यानां त्रयाणामेकारान्तत्वं निपात्यते । वेति वर्तमाने पुनर्वावचनमेकार्थीभावेऽपि विकल्पार्थम् । तेन षष्ठीसमासोऽपि पक्षे भवति । पूर्वेण तु वावचनेन वा पक्षे वाक्यं भवतीति प्रदर्श्यते । पारं गङ्गायाः पारेगङ्गम् । गङ्गायाः पारं गङ्गापारम् । मध्यं गङ्गाया मध्येगङ्गम् । गङ्गामध्यम् । अग्रं वनस्य अग्रेवणम् वनाग्रम् । गिरेरन्तः अन्तर्गिरम् । अन्तर्गिरि ॥

**सङ्ख्या वंश्येन ॥ ३० ॥**

विद्यया जन्मना वा प्राणिनामेकलक्षणसन्तानो वंशस्तत्र भवो वंश्यः । तद्वाचिना सुबन्तेन सह सङ्ख्यावाचि सुबन्तमेकार्थीभावे वा समस्यते । अव्ययीभावश्च समासो भवति । द्वौ मुनी व्याकरणस्य वंश्यौ द्विमुनि व्याकरणस्य । त्रिमुनि व्याकरणस्य । यदा तु विद्यया सह तद्वतामभेदाविवक्षा, तदा द्विमुनि व्याकरणं, त्रिमुनि व्याकरणमिति भवति ॥

**नदीभिः समाहारे ॥ ३१ ॥**

सङ्ख्यावाचि सुबन्तं नदीवचनैः सुबन्तैः सह समाहारे वा समस्यते। अव्ययीभावश्च समासो भवति। द्वयोर्यमुनयोः समाहारः द्वियमुनम्। त्रिगङ्गम्। पञ्चनदम्। सप्तगोदावरम्। नदीभिरिति बहुवचननिर्देशाद् विशेषाणामपि भवति। समाहार इति किम्। एका नदी एकनदी, द्वीरावतीको देशः॥

## अन्यपदार्थे संज्ञायाम्॥ ३२॥

नदीवचनैः सुबन्तैः सह सुबन्तमन्यपदार्थे संज्ञायां समस्यते। अव्ययीभावश्च समासो भवति। उन्मत्तगङ्गम्। लोहितगङ्गम्। तूष्णींगङ्गम्। शनैर्गङ्गम्। अन्यपदार्थ इति किम्। कृष्णवेण्णा। शुक्लतापी। संज्ञायामिति किम्। शीघ्रगङ्गो देशः॥

## तत्पुरुषः॥ ३३॥

अधिकारोऽयम्। प्राग् बहुव्रीहेर्यानि इत ऊर्ध्वमनुक्रमिष्यामस्तत्पुरुषसंज्ञास्ते वेदितव्याः। महत्याः पूर्वाचार्यसंज्ञाया अङ्गीकरणं पूजार्थं, तस्य पुरुषः स चासौ पुरुषश्चेति संज्ञयैवोदाहरणप्रदर्शनार्थं च भवति॥

## द्वितीया श्रितातीतपतितगतात्यस्तगमिगामिबुभुक्ष्वादिभिः॥ ३४॥

द्वितीयान्तं सुबन्तं श्रितादिभिः सुबन्तैः सहैकार्थीभावे समस्यते। तत्पुरुषश्च समासो भवति। कष्टं श्रितः कष्टश्रितः। कान्तारातीतः। श्वभ्रपतितः। ग्रामगतः। तरङ्गात्यस्तः। ग्रामगमी। ग्रामगामी। ओदनबुभुक्षुः। आदिग्रहणाद् ग्रामागामी। हिताशंसुः। तत्त्वबुभुत्सुः। सुखेप्सुरिति॥

## प्राप्तापन्नाभ्यां तौ च द्वितीयया पुंवच्च॥ ३५॥

द्वितीयान्तं सुबन्तं प्राप्तापन्नाभ्यां सुबन्ताभ्यां, प्राप्तापन्नौ द्वितीयान्तेन सुपा सहैकार्थीभावे वा समस्येते। तत्पुरुषश्च समासो भवति। पुंवच्चानयोः स्त्रियामपि द्वितीयान्तेन सह समासे रूपं भवति। सुखं प्राप्तः सुखप्राप्तः। सुखमापन्नः सुखापन्नः। प्राप्तो जीविकां प्राप्तजीविकः। आपन्नो जीविकामापन्नजीविकः। प्राप्ता जीविकां प्राप्तजीविका। आपन्ना जीविकामापन्नजीविका॥

## स्वयंसामी क्तेन ॥ ३६ ॥

स्वयं सामि इत्येते अव्यये (क्तेन) सुबन्तेन सहैकार्थीभावे वा समस्येते । तत्पुरुषश्च समासो भवति । स्वयमित्येतदात्मनेत्यस्यार्थे वर्तते । सामीत्यर्धपर्यायः । स्वयंधौतौ पादौ । स्वयंविलीनमाज्यम् । सामिकृतम् । सामिभुक्तम् । द्वितीयाधिकारेऽप्येतयोरेव योग्यत्वात् सुबित्येतदेवाभिसम्बध्यते ॥

## खट्वा क्षेपे ॥ ३७ ॥

खट्वेत्येतद् द्वितीयान्तं क्षेपे गम्यमाने क्तान्तेन सुपा सहैकार्थीभावे वा समस्यते । तत्पुरुषश्च समासो भवति । खट्वारूढो जाल्मः । उत्पथप्रस्थित इत्यर्थः । विकल्पाधिकारेऽपि नित्यसमास इत्येव । नहि वाक्येन क्षेपो गम्यते ॥

## कालाः ॥ ३८ ॥

कालवाचिनः शब्दा द्वितीयान्ताः क्तान्तेन सहैकार्थीभावे वा समस्यन्ते । तत्पुरुषश्च समासो भवति । अनत्यन्तसंयोगार्थ आरम्भः । षण्मुहूर्त्ताश्चराचरास्ते कदाचिदहर्गच्छन्ति, कदाचिद् रात्रिम् । अहरतिसृताः । अहस्सङ्क्रान्ताः । मासप्रमितः प्रतिपदश्चन्द्रमाः । मासं प्रमातुमारब्धवानित्यर्थः ॥

## अत्यन्तसंयोगे ॥ ३९ ॥

कालवाचि द्वितीयान्तं सुबन्तमत्यन्तसंयोगे सुबन्तेन सहैकार्थीभावे वा समस्यते । तत्पुरुषश्च समासो भवति । मुहूर्तं सुखं मुहूर्तसुखम् । सर्वरात्रकल्याणी । अत्यन्तसंयोगे इति किम् । मासं पूरको व्रजति ॥

## तृतीया तत्कृतेन गुणवचनेन ॥ ४० ॥

तृतीयान्तं सुबन्तं तृतीयान्तार्थकृतगुणवाचिना सुबन्तेन सहैकार्थीभावे वा समस्यते । तत्पुरुषश्च समासो भवति । शङ्कुलया खण्डः शङ्कुलाखण्डः । किरिणा काणः किरिकाणः । तत्कृतेनेति किम् । अक्ष्णा काणः । गुणवचनेनेति किम् । गोभिर्वपावान् । दध्ना पटुः । गुणमुक्तवान्

गुणवचनः। न चैतौ पूर्वं गुणमुक्त्वा साम्प्रतं द्रव्ये वर्तेते इति गुणवचनौ न भवतः। अत एव शुद्धगुणवाचिनापि न समासो भवति। घृतेन पाटवम्। दध्ना जाड्यमिति॥

अर्थादिसदृशसमतुल्याधिकैश्च ॥ ४१ ॥

अर्थादयो .... .... विधावुक्तास्तैस्सदृशसमतुल्याधिकैश्च (समतुल्याः? सह तृतीया)न्तं सुबन्तमेकार्थीभावे समस्यते। तत्पुरुषश्च समासो भवति। धान्येनार्थः धान्यार्थः। धान्येनार्थी धान्यार्थी। मासेन पूर्वः मासपूर्वः। मासेनावरः मासावरः। असिना कलहः असिकलहः। वाचा निपुणः, वाङ्निपुणः। गुडेन मिश्रः गुडमिश्रः। आचारेण श्लक्ष्णः आचारश्लक्ष्णः। मात्रा सदृशः मातृसदृशः। पित्रा समः पितृसमः। भ्रात्रा तुल्यः भ्रातृतुल्यः। माषेणाधिकं माषाधिकं कार्षापणः। द्रोणाधिका खारी इति॥

अर्धं चतसृभिः ॥ ४२ ॥

तत्कृतेनेति वर्तते। अर्धमित्येतत् तृतीयान्तं तत्कृताभिश्चतसृभिः सहैकार्थीभावे समस्यते। तत्पुरुषश्च समासो भवति। अर्धेन कृताश्चतस्रः अर्धचतस्रः मात्राः। अर्धचतस्रः खार्य इति। स्त्रीलिङ्गनिर्देशादर्धेन कृताश्चत्वारो द्रोणा इत्यत्र न भवति॥

एकं नविंशत्यादिभिः ॥ ४३ ॥

(एकमित्येतत् तृतीयान्तं) ......नविंशत्यादिभिः सहैकार्थीभावे वा समस्यते। तत्पुरुषश्च समासो भवति। एकेन (न) नविंशतिः एकान्नविंशतिः। एकान्नत्रिंशत्। एकान्नचत्वारिंशत् इति॥

कर्तृकरणे कृता बहुलम् ॥ ४४ ॥

कर्तरि करणे च या तृतीया तदन्तं सुबन्तं कृदन्तेन सुपा सहैकार्थीभावे वा समस्यते। तत्पुरुषश्च समासो भवति। राज्ञा हतः राजहतः। अहिना दष्टः अहिदष्टः। नखैर्निर्भिन्नः नखनिर्भिन्नः। परशुना छिन्नः परशुच्छिन्नः। एवं सुलभः दुर्लभः। अरिदुर्जयः। लोकदुर्दर्शनः। प्रपदप्रहरः। पादहारकः। पदाहतिः शस्त्रप्रहतिरिति। बहुलग्रहणात् क्वचित् करणमपि न समस्यते। दात्रेण लूनवान्। परशुना छिन्नवान्। क्वचित् सुबुत्पत्तेः

प्रागेव समासो भवति । अश्वक्रीती । धनक्रीती । अभ्रविलिप्ती द्यौः । सूपविलिप्ती पात्री इति । अत्र यदि सुबुत्पत्तिः प्रतीक्ष्येत तदान्तरङ्गत्वाट्टापि सत्यनदन्तत्वात् ङीप् न स्यात् । क्वचिदकृतापि भवति । आत्मतृतीयः आत्मपञ्चम इति ॥

कृत्यैरधिकार्थवचने ॥ ४५ ॥

कृतिना प्रयुक्तमध्यारोपितमर्थवचनमधिकार्थवचनं, तस्मिन् गम्यमाने कर्तृकरणतृतीयान्तं सुबन्तं कृत्यप्रत्य(येनानद? या)न्तेन सुपा सहैकार्थीभावे वा समस्यते । तत्पुरुषश्च समासो भवति । काकपेया नदी । श्वलेह्यः कूपः । कण्टकसञ्चेय ओदनः । बाष्पच्छेद्यानि तृणानि । बहुलग्रहणादधिकार्थवचनमन्तरेणापि भवति । बुसोपेन्ध्योऽग्निः । तृणोपेन्ध्योऽग्निः । वनघात्यो द्रुमः । कृच्छ्रसाध्यमिति । पूर्वस्यैवायं प्रपञ्चः ॥[1]

भक्ष्यान्नयानपात्रैर्मिश्रीकरणव्यञ्जनयुग्यपूरणानि मिश्रोपसिक्तयुक्तपूर्णाद्यप्रयोगे ॥ ४६ ॥

मिश्रीकरणादिवाचीनि तृतीयान्तानि भक्ष्यादिसुबन्तैः सहैकार्थीभावे अव्यतिरिक्तकल्पान्तर्गतप्रतीयमानमिश्रोपसिक्तयुक्तपूर्णादिक्रियापदाप्रयोगे समस्यन्ते । तत्पुरुषश्च समासो भवति । तत्र खरविशदमभ्यवहार्यं भक्ष्यम् । तत्संस्कारकं मिश्रीकरणम् । गुडेन मिश्रा धाना गुडधानाः । तिलपृथुकाः । भोज्यमन्नम् । उपसेचनं व्यञ्जनम् । दध्ना उपसिक्त ओदनः दध्योदनः । यानं रथादि । युग्यं वाहनम् । अश्वैर्युक्तो रथः अश्वरथः । गजरथः । पात्रं घटादि । पूरणं घृतादि । घृतेन पूर्णो घटः घृतघटः । दधिघटः ॥

चतुर्थी यता ॥ ४७ ॥

चतुर्थ्यन्तं सुबन्त यत्प्रत्ययान्तेन सुपा सहैकार्थीभावे वा समस्यते । तत्पुरुषश्च समासो भवति । देवाय देयं देवदेयं पुष्पम् । ब्राह्मणदेयं धनम् । वरप्रदेया कन्या । यतेति किम् । ब्राह्मणाय दातव्यम् ॥

सुखहिताभ्याम् ॥ ४८ ॥

---

१. 'नि ॥ चतुर्थी' ख. पाठः.

चतुर्थ्यन्तं सुखहिताभ्यां सहैकार्थीभावे वा समस्यते । तत्पुरुषश्च समासो भवति । गोभ्यः सुखं गोसुखम् । गोभ्यो हितं गोहितम् । अतादर्थ्यार्थ आरम्भः ॥

तादर्थ्ये प्रकृत्या ॥ ४९ ॥

तादर्थ्ये चतुर्थ्यन्तं विकृतिवाचि प्रकृतिवाचिना सुपा सहैकार्थीभावे वा समस्यते । तत्पुरुषश्च समासो भवति । यूपाय दारु यूपदारु । कुण्डलहिरण्यम् । प्रकृत्येति किम् । रन्धनाय स्थाली । अवहननायोलूखलम् । तादर्थ्य इति किम् । कल्पते मूत्राय यवागूः । ननु च सापेक्षत्वान्नासमर्थत्वादेवात्र समासः । भवति च प्रधानस्य सापेक्षत्वादपि समासः ॥

बलिरक्षितघाससुराविधादिभिश्च ॥ ५० ॥

तादर्थ्यचतुर्थ्यन्तं सुबन्तं बल्यादिभिः सुबन्तैः सहैकार्थीभावे वा समस्यते । तत्पुरुषश्च समासो भवति । कुबेराय बलिः कुबेरबलिः । गोभ्यो रक्षितः गोरक्षितः । अश्वाय घासः अश्वघासः । श्वश्रूसुरा । कथं श्वश्रूसुरम् । सम्बन्धसामान्यषष्ठीसमासे 'सेनासुराशालानिशानां वे'ति नपुंसकत्वाद् भविष्यति । हस्तिने विधा हस्तिविधा । आदिशब्दाद्धर्मनियमो धर्माय जिज्ञासेत्यादयो भवन्ति । अप्रकृतिविकारभावेऽपि यथा स्यादिति वचनम् ॥

नित्यमर्थेनेदमर्थे ॥ ५१ ॥

तादर्थ्यचतुर्थ्यन्तमिदमर्थे वर्तमानेनार्थशब्देन सुपा सहैकार्थीभावे नित्यं समस्यते । तत्पुरुषश्च समासो भवति । वृत्तिविषये चार्थशब्द इदमर्थे वर्तते । तेनोत्तरपदार्थप्राधान्येऽपि समासस्य सर्वलिङ्गता भवति । ब्राह्मणेभ्यः अयं ब्राह्मणार्थः सूपः । ब्राह्मणेभ्य इयं ब्राह्मणार्था यवागूः । ब्राह्मणेभ्य इदं ब्राह्मणार्थं पयः ॥

पञ्चमी भीतभीतिभी[1]भयभी[2]रुभीलुकजुगुप्सुभिः ॥ ५२ ॥

पञ्चम्यन्तं भीतादिभिः सुबन्तैः सहैकार्थीभावे वा समस्यते । तत्पुरुषश्च समासो भवति । वृकाद् भीतः वृकभीतः । वृकभीतिः । वृकभीः ।

१ 'भीरुभ', २, 'भीलुभी' ख. पाठः.

वृकभयम् । परलोकभीरुः । अपवादभीलुकः । अधर्मजुगुप्सुः । भीतादिभिरिति किम् । वृकाद् भीतवान् । ग्रामाद् गन्तव्यम् । बहुलस्यैवायं प्रपञ्चः । तेन द्वीपान्तरानीतः स्थानभ्रष्ट इत्यादि सिद्धं भवति ॥

अपेतापोढनिर्गतमुक्तपतितापत्रस्तैरसर्वा[1] ॥ ५३ ॥

किञ्चिदेव न सर्वं पञ्चम्यन्तं सुबन्तमपेतादिभिः सुबन्तैः सहैकार्थीभावे वा समस्यते । तत्पुरुषश्च समासो भवति । सुखादपेतः सुखापेतः । कल्पनाया अपोढः कल्पनापोढः । ग्रामनिर्गतः । चक्रमुक्तः । स्वर्गपतितः । तरङ्गापत्रस्तः । असर्वेति किम् । (प्रासादात्) पतितः भोजनादपत्रस्त इति ॥

स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन ॥ ५४ ॥

स्तोकाद्यर्थानि पञ्चम्यन्तानि कृच्छ्रशब्दश्च क्तान्तेन सुपा सहैकार्थीभावे वा समस्यन्ते । तत्पुरुषश्च समासो भवति । स्तोकान्मुक्तः । अल्पान्मुक्तः । अन्तिकादागतः । अभ्याशादागतः । दूरादागतः । विप्रकृष्टादागतः । कृच्छ्रान्मुक्तः । 'पञ्चम्याः स्तोकादिभ्य' इत्यलुक् । कथं 'कृच्छ्रलब्धमपि लब्धवर्णभागि'ति । तृतीयासमासो भविष्यति ॥

शतसहस्रौ परेण ॥ ५५ ॥

शत सहस्र इत्येतौ पञ्चम्यन्तौ (परेण) सुपा सहैकार्थीभावे वा समस्येते । तत्पुरुषश्च समासो भवति । शतात् परे परश्शताः । सहस्रात् परे परस्सहस्राः । राजदन्तादिषु पाठादुपसर्जने परनिपातः । परश्शतादित्वात् सुट् ॥

सप्तमी सिद्धशुष्कपक्वबन्धादिभिः ॥ ५६ ॥

सप्तम्यन्तं सुबन्तं सिद्धादिभिः सहैकार्थीभावे वा समस्यते । तत्पुरुषश्च समासो भवति । काम्पिल्यसिद्धः । छायाशुष्कः । स्थालीपक्वः । चक्रबन्धः । आदिग्रहणात् वीरशेखरः हस्तकटकः इत्यादयो भवन्ति ॥

शौण्डधूर्तकितवव्याड[2]संवीतपटुपण्डितकुशलनिपुणचपलान्तरादिभिः प्रसक्ताद्यप्रयोगे ॥ ५७ ॥

---

१. 'र्वे' ख. ग. पाठः. २. 'भ' ख, पाठः.

सप्तम्यन्तं शौण्डादिभिः सहैकार्थीभावेऽव्यतिरिक्तकल्पान्तर्गत-प्रतीयमानप्रसक्तादिक्रियाप्रयोगे वा समस्यते। तत्पुरुषश्च समासो भवति। अक्षेषु प्रसक्तः शौण्डः अक्षशौण्डः। अक्षधूर्तः। अक्षकितवः। अक्षव्याडः। लोकसंवीत । व्यवहारपटुः। रणपण्डितः। शास्त्रकुशलः। आचारनिपुणः। वाक्चपलः। अर्णवान्तरः। ब्राह्मणाधीनः ॥

## ध्वाङ्क्षकाकवायसबकादिभिः क्षेपे ॥ ५८ ॥

सप्तम्यन्तं क्षेपे गम्यमाने ध्वाङ्क्षादिभिः सुबन्तैः सहैकार्थीभावे समस्यते। तत्पुरुषश्च समासो भवति। तीर्थे ध्वाङ्क्ष इव तीर्थध्वाङ्क्षः। तीर्थकाकः। तीर्थवायसः। तीर्थबकः। उपमयात्र क्षेपो गम्यते। आदि-ग्रहणात् तीर्थकुक्कुटादयो भवन्ति ॥

## सिंहव्याघ्रवासवयुधिष्ठिरादिभिः पूजायाम् ॥ ५९ ॥

सप्तम्यन्तं सुबन्तं (सिंहादिभिः) सहैकार्थीभावे वा समस्यते। तत्पुरु-षश्च समासो भवति। समरे सिंह इव समरसिंहः। रणव्याघ्रः। भूमि-वासवः। कलियुधिष्ठिरः। उपमयात्र पूजा गम्यते। आदिग्रहणाद् भूमि-देवादयो भवन्ति ॥

## यतावश्यके ॥ ६० ॥

सप्तम्यन्तमावश्यकयत्प्रत्ययान्तेन सुपा सहैकार्थीभावे वा समस्यते। तत्पुरुषश्च समासो भवति। पूर्वाह्णगेयं साम। मासदेयमृणम्। प्रातरध्येयो-ऽनुवाकः। आवश्यक इति किम्। मासे देया भिक्षा। यतेति किम्। मासे दातव्यमृणम् ॥

## संज्ञायाम् ॥ ६१ ॥

सप्तम्यन्तं पूर्वपदमुत्तरपदेन सह समस्यते। तत्पुरुषश्च समासो भवति। पूर्वोत्तरपदसमुदायश्चेत् संज्ञा भवति। नित्यसमासश्चायम्। नहि वाक्येन संज्ञा गम्यते। अरण्येतिलकाः। अरण्येमाषकाः। वनेकशेरुकाः। वनेबल्बजाः। कूपेपिशाचिकाः। 'हलदन्तात् सप्तम्याः' इति सप्तम्या अलुक्। आपेशाणः। मुकुटेकार्षापणः। हलेद्विपदिका। 'कारनाम्नि' त्यलुक् ॥

## ऋणमधमोत्तमाभ्याम् ॥ ६२ ॥

ऋणमित्येतत् सप्तम्यन्तमधमोत्तमाभ्यां सहैकार्थीभावे वा समस्यते। तत्पुरुषश्च समासो भवति। ऋणे अधमः अधमर्णः। ऋणे उत्तमः उत्तमर्णः। राजदन्तादित्वात् परनिपातः॥

क्तेनाहोरात्रावयवाः॥ ६३॥

अहरवयवा रात्र्यवयवाश्च सप्तम्यन्ताः क्तान्तेन सुपा सहैकार्थीभावे वा समस्यन्ते। तत्पुरुषश्च समासो भवति। पूर्वाह्णे कृतं पूर्वाह्णकृतम्। अपराह्णकृतम्। पूर्वरात्रकृतम्। अपररात्रकृतम्। अवयवग्रहणं किम्। अहनि भुक्तं रात्रौ भुक्तम्। बहुलवचनाद् रात्रिवृत्तः सन्ध्यागर्जितमित्यादयो भवन्ति॥

तत्र॥ ६४॥

तत्रेत्येतत् सप्तम्यन्तं क्तान्तेन सुपा सहैकार्थीभावे वा समस्यते। तत्पुरुषश्च समासो भवति। तत्रकृतम्। तत्रभुक्तम्। ऐकपद्यमैकस्वर्यं च समासाद् भवति॥

सगतिकारकेणापि क्षेपे॥ ६५॥

सप्तम्यन्तं सुबन्तं क्तान्तेन केवलेन सगतिकारकेणापि च सुपा सहैकार्थीभावे क्षेपे गम्यमाने समस्यते। तत्पुरुषश्च समासो भवति। भस्मनिहुतम्। प्रवाहेमूत्रितम्। उदकेविशीर्णम्। निष्फलं यत् क्रियते, तदेवमुच्यते। अवतप्तेनकुलस्थितं तवैतत्। उपमयात्र क्षेपः। चापलमनवस्थितत्वं वा तवैतदित्यर्थः। नित्यसमासोऽयम्। नहि वाक्येन क्षेपो गम्यते॥

पात्रमवधारणे समितबहुलाभ्यां नचान्यसमासः॥ ६६॥

पात्रमित्येतत् सप्तम्यन्तमवधारणे सति क्षेपे गम्यमाने समितबहुलाभ्यां सहैकार्थीभावे वा समस्यते। तत्पुरुषश्च समासो भवति। नचान्येन सहास्य समासः। पात्रे एव समिताः पात्रेसमिताः। पात्रेबहुलाः। नचान्यसमास इति किम्। परमाः पात्रेसमिताः॥

गेहगोष्ठौ शूरक्ष्वेडिनर्दिविजितव्याडपटुपण्डितप्रगल्भैः [॥ ६७॥

गेहगोष्ठौ सप्तम्यन्तावबधारणे सति क्षेपे गम्यमाने शूरादिभिः सुबन्तैः सहैकार्थीभावे समस्येते। तत्पुरुषश्च समासो भवति। गेह एव शूरः गेहेशूरः। गोष्ठेशूरः। गेह एव क्ष्वेडतीत्येवंशीलः गेहेक्ष्वेडी। गोष्ठेक्ष्वेडी। एवं गेहेनर्दी। गोष्ठेनर्दी। गेह एव विजितमनेन गेहेविजिती। गोष्ठेविजिती। इष्टादित्वादिनिः। 'क्तस्येन्विषयस्य कर्मणी'ति सप्तमी। गेहेव्याडः। गोष्ठेव्याडः। गेहेपटुः। गोष्ठेपटुः। गेहेपण्डितः। गोष्ठेपण्डितः। गेहेप्रगल्भः। गोष्ठेप्रगल्भः। न चान्यसमास इत्येव। परमो गेहेशूरः॥

## उदुम्बरः कृमिमशकाभ्यामुपमायाम्॥ ६८॥

उदुम्बरः सप्तम्यन्तः कृमिमशकाभ्यां सुबन्ताभ्यां सहोपमायां सत्यां क्षेपे गम्यमाने समस्यते। तत्पुरुषश्च समासो भवति। (उदुम्बरे कृमिः उदुम्बरकृमिः। उदुम्बरे मशकः उदुम्बरमशकः)॥

## अवटकूपौ कच्छपमण्डूकाभ्याम्॥ ६९॥

(अवटकूपौ सप्तम्यन्तौ कच्छपमण्डूकाभ्यां सुबन्ताभ्यां सह उपमायां सत्यां क्षेपे गम्यमाने) समस्येते। तत्पुरुषश्च समासो भवति। अवटकच्छपः। कूपमण्डूकः। अल्पदृश्वोच्यते॥

## नगरं काकादिभिः॥ ७०॥

नगरमित्येतत् सप्तम्यन्तं काकादिभिः सुबन्तैः सहोपमायां क्षेपे समस्यते। तत्पुरुषश्च समासो भवति। नगरकाकः। नगरवायसः। नगरश्वा। एतैः सदृशो धृष्ट उच्यते॥

## गेहेमेहिपिण्डीशूरौ निरीहतायाम्॥ ७१॥

गेहेमेहि पिण्डीशूर इत्येतौ सप्तमीतत्पुरुषौ निरीहतायां क्षेपे गम्यमाने साधू भवतः। गेहेमेही। पिण्डीशूरः। य आवश्यकार्थमपि बहिर्न निर्गच्छति भोजन एव संरम्भते स एवमुच्यते॥

## पितरिशूरमातरिपुरुषौ क्षियायाम्॥ ७२॥

पितरिशूर मातरिपुरुष इत्येतौ सप्तमीतत्पुरुषौ क्षियायां साधू भवतः। पितरिशूरः। मातरिपुरुषः। यः सदाचारं भिनत्ति स एवमुच्यते॥

गर्भः सुहिततृप्तदृप्तैरनौचित्ये ॥ ७३ ॥

गर्भशब्दः सप्तम्यन्तोऽनौचित्ये सति क्षेपे गम्यमाने सुहितादिभिः सुबन्तैः सह समस्यते । तत्पुरुषश्च समासो भवति । गर्भेसुहितः । गर्भेतृप्तः । गर्भेदृप्तः । यो मिथ्याभिमानेनानुचितचेष्टः स एवमुच्यते ॥

कर्णेटिरिटिराचुरुचुराभ्याम् ॥ ७४ ॥

कर्णशब्दः सप्तम्यन्तोऽनौचित्ये सति क्षेपे गम्यमाने टिरिटिराचुरुचुराशब्दाभ्यां समस्यते । तत्पुरुषश्च समासो भवति । कर्णेटिरिटिरा । (कर्णेचुरुचुरा ।) चापलेनानुचिता चेष्टोच्यते । टिरिटिरिरिति गत्यनुकरणम् । चुरुचुरु(वि ? रि)ति वाक्यानुकरणम् । तत्करोतीति ण्यन्तादप्रत्ययः । निपातनसामर्थ्याच्च युच् न भवति ॥

विशेषणं विशेष्येण समानाधिकरणेन ॥ ७५ ॥

यदनेकप्रकारं वस्तु सामान्याकारेण प्रवृत्तं प्रकारान्तरेभ्यो व्यावृत्य कस्मिंश्चिद्वस्तुनि व्यवस्थापयति तद्विशेषणम् । यदवस्थाप्यते तद्विशेष्यम् । भिन्नप्रवृत्तिनिमित्तस्य शब्दस्यैकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम् । तद्वत् समानाधिकरणम् । विशेषणवाचि सुबन्तं विशेष्यवाचिना समानाधिकरणेन सुबन्तेन सहैकार्थीभावे वा समस्यते । तत्पुरुषश्च समासो भवति । नीलं च तदुत्पलं च नीलोत्पलम् । रक्तश्चासौ कम्बलश्च रक्तकम्बलः । कृष्णाश्च ते तिलाश्च कृष्णतिलाः । बहुलवचनात् क्वचिदेकार्थीभाव एव । गौरखरः । कृष्णसर्पः । लोहितशालिरिति । क्वचिद् व्यपेक्षैव । दीर्घश्चारायणः । रामो जामदग्न्यः । अर्जुनः कार्तवीर्य इति । विशेषणविशेष्ययोः सम्बन्धिशब्दत्वादेकतरोपादानेनैव द्वये लब्धे द्वयोरुपादानं परस्परमुभयोर्व्यवच्छेद्यव्यवच्छेदकत्वे समासो यथा स्यादित्येवमर्थम् । तेनेह न भवति । तक्षकः सर्पः लोहितस्तक्षक इति । नह्यसर्पोऽन्यवर्णो वा तक्षकोऽस्ति । कथं तर्ह्याम्रवृक्षः शिंशपावृक्ष इत्यादौ समासः । नह्यवृक्ष आम्रः शिंशपा वा सम्भवति । नात्राम्रादयो वृक्षविशेषवचनाः । किन्तर्हि तत्सहचरितमाधुर्यस्थैर्यादिगुणविशेषवचनाः । एवं च तक्षकाहिः शेषाहिरित्यादयोऽपि भवन्ति । यद्येवम् उभयोर्विशेषणत्वादुभयोर्विशेष्यत्वादुपसर्जनत्वाप्रसिद्धिः । तथाहि — यथोत्पलशब्दो नीलशब्देनाभिसम्बध्यमानो विशेषेऽवतिष्ठते

तथा नीलशब्दोऽप्युत्पलशब्देनाभिसम्बध्यमानो विशेषवचनः सम्पद्यत इति पूर्वनिपातस्यानियमप्रसङ्गः । नैष दोषः । नहि द्वयोः प्रधानयोरप्रधानयोर्वा समत्वात् परस्परानपेक्षायां सम्बन्धो भवतीत्यवश्यमेकेन प्रधानेनान्येन चाप्रधानेन भवितव्यम् । तत्र साक्षाद् द्रव्यस्य क्रियासूप(मा ? योगाद्) द्रव्यं प्रधानं गुणः पुनरप्रधानम् । तथाहि श्वेतं छागमालभेतेति । श्वेताभावे कृष्णमपि छागमेवालभेत । द्वयोस्तु गुणवाचिनोर्विवक्षातः प्रधानोपसर्जनभावे पर्यायेण पूर्वनिपातो भवति । खञ्जकुब्जः कुब्जखञ्ज इति ॥

सर्वैकजरत्पुराणनवकेवलपूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराः ॥ ७६ ॥

सर्वादयः सुबन्ताः समानाधिकरणेन सुपा सहैकार्थीभावे वा समस्यन्ते । तत्पुरुषश्च समासो भवति । सर्वशब्दो द्रव्यावयवप्रकारगुणकात्स्न्र्येषु वर्तते । सर्वे शैलाः सर्वशैलाः । सर्वा रात्रिः सर्वरात्रः । सर्वमन्नं सर्वान्नम् । सर्वः श्वेतः सर्वश्वेतः इति । एकशब्दोऽपि सङ्ख्यान्यासहायाद्वितीयेषु वर्तते । एकशाटी । एकर्षयः । एकचोरः । एकधनुर्धरः । जरद्धस्ती । जरत्तापसः । पुराणधान्यम् । नवोदकम् । नवोक्तिः । केवलान्नम् । केवलोदकम् । पूर्वपुरुषः । अपरपुरुषः । प्रथमपुरुषः । चरमपुरुषः । जघन्यपुरुषः । समानपुरुषः । मध्यपुरुषः । मध्यमपुरुषः । वीरपुरुषः । 'विशेषणं विशेष्येण' इति सिद्धे पुनर्वचनं प्रपञ्चार्थम् । तेनैवंविधयः सुसङ्गृहीता भवन्ति । येषां लक्षणं 'प्रपञ्चप्रधानोपसर्जनं परस्परं विप्रतिषेधेने'ति वक्ष्यति । तस्य च विषयः प्रदर्शितो भवति । एकवीर इत्यादयस्तु बहुलाधिकाराद् भविष्यति ॥

पूर्वकालोऽपरकालेन ॥ ७७ ॥

पूर्वकाला(र्थोऽपरकाला)र्थवाचिना समानाधिकरणेन सुपा सहैकार्थीभावे वा समस्यते । तत्पुरुषश्च समासो भवति । पूर्वं कृष्टा पश्चात् समीकृता कृष्टसमीकृता भूमिः । स्नातानुलिप्तः । लिप्तवासितः । छिन्नप्ररूढः । द्वयोर्गुणवचनत्वादनियमप्रसङ्गे पूर्वकालस्यैव पूर्वनिपातनार्थं वचनम् ॥

दिक्सङ्ख्ये संज्ञायाम् ॥ ७८ ॥

दिग्वाचिनः सङ्ख्यावाचिनश्च शब्दाः सुबन्ताः समानाधिकरणेन सुबन्तेन सहैकार्थीभावे संज्ञायां समस्यन्ते । तत्पुरुषश्च समासो भवति । पूर्वेषुकामशमी । अपरेषुकामशमी । पञ्चाम्राः । सप्तर्षयः । नित्यसमासश्चायम् । नहि वाक्येन संज्ञा गम्यते ॥

तद्धितार्थोत्तरपदसमाहारे च ॥ ७९ ॥

दिग्वाचि सङ्ख्यावाचि च सुबन्तं तद्धितः स्यादित्येवमर्थं चोत्तरपदे परतः समाहारे चाभिधेये समानाधिकरणेन सुपा सहैकार्थीभावे वा समस्यते । तत्पुरुषश्च समासो भवति । पूर्व(स्यां) शालायां भवः पौर्वशालः । आपरशालः । पूर्वा गौः प्रियास्य पूर्वगवप्रियः । दिक् समाहारे न सम्भवति । पञ्चानां नापितानामपत्यं पाञ्चनापितिः । पञ्चसु कपालेषु संस्कृतः पाञ्चकपालः पुरोडाशः । पञ्च गावो धनमस्य पञ्चगवधनः । पञ्चनावप्रियः । पञ्च गावः समाहृताः पञ्चगवम् । पञ्चानां पूलानां समाहारः पञ्चपूली ॥

न मत्वर्थे ॥ ८० ॥

उपमानानि सामान्यवचनैः ॥ ८१ ॥

उपमीयतेऽनेनेत्युपमानम् । उपमानोपमेययोः साधारणो धर्मः सामान्यम् । तदुक्तवन्तः सामान्यवचनाः । साधारणं गुणमुक्त्वा मतुब्लोपादिनोपमेयस्थैरित्यर्थः । उपमानवाचीनि सुबन्तानि सुबन्तैः सामान्यवचनैः समानाधिकरणैः सहैकार्थीभावे समस्यन्ते । तत्पुरुषश्च समासो भवति । शस्त्रीव श्यामा शस्त्रीश्यामा देवदत्ता । न्यग्रोधपरिमण्डला । हंसगद्गदा । कुमुदश्येनी । शुकहरिणी । शरकाण्डगौरी । यद्यपि वाक्यस्य भेदविषयत्वात् शस्त्रीव श्यामेति भेदेन विग्रहः । तथापि समानाधिकरणेनेत्यनुवृत्तेः शस्त्रादयोऽन्तर्नीतिवार्थाः श्यामादिकं गुणमुपादाय यदोपमेये वर्तन्ते तदोपमेयवृत्तिभिः समानाधिकरणैः सह समासमनुभवन्ति । एवञ्च मृगी (चा ? वा)सौ चपला च मृ(गी ? ग)चपला काकी(व) वन्ध्या काकवन्ध्येति समानाधिकरणलक्षणः पुंवद्भावो भवति ॥

उपमेयानि व्याघ्रसिंहर्षभवृषभपुण्डरीकपद्मपल्लवकिसलयेन्दुचन्द्रादिभिः सामान्याप्रयोगे ॥ ८२ ॥

उपमेयवाचीनि सुबन्तानि व्याघ्रादिभिः सामर्थ्यादुपमानवचनैः सहैकार्थीभावे समस्यन्ते। तत्पुरुषश्च समासो भवति। न चेत् सामान्यवाची शब्दः प्रयुज्यते। पुरुषोऽयं व्याघ्र इव पुरुषव्याघ्रः। पुरुषसिंहः। पुरुषर्षभः। पुरुषवृषभः। मुखपुण्डरीकम्। पादपद्मम्। अधरपल्लवः। करकिसलयम्। वदनेन्दुः। मुखचन्द्रः। आदिग्रहणात् कुचकुम्भस्तनकलशादयो भवन्ति। सामान्याप्रयोग इति किम्। पुरुषोऽयं व्याघ्र इव शूरः। सिंह इव बलवान्। अत्रापि पुरु ·· ··· ··· ·· ··· ॥

कुत्सितानि स्वार्थकुत्सनैः ॥ ८३ ॥

खसूचीखेटद्रु(र्द्रु)रूटचेलब्रुवहतकजाल्मापशदकाण्डपृष्ठस्पृष्टधृष्टधूर्त्तकितवादिभिः ॥ ८४ ॥

पापाणकहतदग्धादीनि कुत्सितैः ॥ ८५ ॥

सन्महत्परमोत्तमोत्कृष्टपुमांसः पूज्यमानैः ॥ ८६ ॥

वृन्दारकनागकुञ्जरव्याघ्रशार्दूलवृषभर्षभपुङ्गवादिभिः पूज्यमानम् ॥ ८७ ॥

पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्त्तैर्जातिः॥ ८८ ॥

प्रशंसावचनैश्च ॥ ८९ ॥

गतल्लिकामचर्चिकाप्रकाण्डोद्घतल्लजकपादमिश्रपाशहस्तभित्तिस्थलपाल्यादिभिः ॥ ९० ॥

चतुष्पादो गर्भिण्या ॥ ९१ ॥

युवा खलतिपलितवलिनजरद्भिः ॥ ९२ ॥

कृत्यतुल्याख्यान्यजात्या ॥ ९३ ॥

जातिर्जात्या ॥ ९४ ॥

वर्णो वर्णेन ॥ ९५ ॥

कुमारः श्रमणाप्रव्रजिताबन्धकीकुलटागर्भिणीतापसी-
दास्यध्यापकाभिरूपकपण्डितकुशलनिपुणचपलपटुमृदुभिः
[॥ ९६ ॥

क्तेन नञ्विशिष्टेनानञ् ॥ ९७ ॥

कृताकृतभुक्ताभुक्तपीतविपीत(गत)प्रत्यागतयातानुया-
तक्रयाक्रयिकापुटापुटिकाफलाफलिकामानोन्मानिकाश्च
[॥९८॥

कतरकतमौ जातिपरिप्रश्ने ॥ ९९ ॥

किं क्षेपे ॥ १०० ॥

किंशुककिंलुककिंपुरुषकिन्नरीकिञ्जल्ककिन्दासादयः
संज्ञायाम् ॥ १०१ ॥

श्रे(ण्यू ? ण्ये)कपूगकुण्डमुण्डराशिनिचयत्रिशिखनिधा-
नेन्द्रदेवकण्ठश्रवणभूतवदान्याध्यापकब्राह्मणक्षत्रियपटुपण्डि-
तकुशलचपलनिपुणाश्च्व्यर्थे कृतमतमितोक्तभूतसमाज्ञाता-
म्नाताख्यातसम्भाविताबधारितावकल्पितकालितनिराकृताप-
कृतापाकृतोदाहृतोदीरितोदितदृष्टविश्रुतादिभिः ॥ १०२ ॥

शाकपार्थिवाजातौल्वलिकुतपसौश्रुतस्मृतरौब्योदन-
पाणिन्याणिमाण्डव्यवलाकाकौशिकविदर्भिकौण्डिन्यपरशुरा-
मादयः प्रियादिलोपे ॥ १०३ ॥

अधिकान्ता सङ्ख्या सङ्ख्ययाधिकलोपश्च ॥ १०४॥

भागांशादिभिः पूरणाताल्लुक् च वा (?) ॥ १०५ ॥

मयूरच्छत्रौ व्यंसकेनोपायाद्म चानेन समासः ॥ १०६॥

कम्बोजयवनौ मुण्डेन ॥ १०७ ॥

एहीडायवाभ्यामन्यपदार्थे नपुंसकत्वं च ॥ १०८ ॥

अपेहि च वाणिजास्वागतद्वितीयविघसप्रघसादिभिः क्रियायाम् ॥ १०९ ॥

प्रेहिस्वागतवाणिजाभ्याम् ॥ ११० ॥

प्रोह कटकर्दमाभ्यां द्वितीयया ॥ १११ ॥

छिन्धिभिन्ध्युद्धमविचक्षणल(व)णचूडादिभिः ॥११२॥

आहर चेलवसनवनितादिभिः ॥ ११३ ॥

आख्यातमाख्यातने सातत्ये ॥ ११४ ॥

उद्धरोत्सृजावसृजाभ्याम् ॥ ११५ ॥

पचपतपपान्युदनैनैः ॥ ११६ ॥

उन्मृजावमृजने ॥ ११७ ॥

इहद्वितीयेहपञ्चम्येहिरेयाहिराहोपुरुषिकाहंपूर्विकाहंप्रथमिकाहमहमिकाविचप्रचानिश्चप्रचादयः ॥ ११८ ॥

·· ··· सा एहिरेयाहिरा(?)। अहो पुरुष इति यस्यां क्रियायां सा आहोपुरुषिका । अहं पूर्व इति यस्यां सा अहंपूर्विका । एवमहंप्रथमिका । अहमहमिति यस्यां सा अहमहमिका । विकृतं प्रकृतं च यस्यां सा विचप्रचा । निश्चितं च प्रचितं च यस्यां सा निश्चप्रचा । आदिग्रहणादेहिरेगच्छरायदृच्छादयो भवन्ति ॥

जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्तरि ॥ ११९ ॥

ह्यन्तं तिङन्तं कर्मवाचिना सुपा सहाभीक्ष्ण्ये गम्यमाने कर्तर्यभिधेये बहुलं समस्यते । तत्पुरुषश्च समासो भवति । जहि जहि जोडमिति य

उच्यते स जहिजोडः । जहिस्तम्बः । बहुलग्रहणं प्रयोगानुसारार्थम् । तेनातिप्रसङ्गो न भवति ॥

स्नात्वाकालकपीत्वास्थिरकभुक्त्वासुहितप्रोष्यपापीय-उत्पत्यपाकलानिपत्यरोहिणीनिषद्यश्यामादयः ॥ १२० ॥

स्नात्वाकालादयस्तत्पुरुषसमासाः साधवो भवन्ति । स्नात्वाकालकः । पीत्वास्थिरकः । भुक्त्वासुहितः । प्रोष्यपापीयान् । उत्पत्यपाकला । निपत्यरोहिणी । निषद्यश्यामा । आदिग्रहणाज्जिकुच्च्यकर्णिप्रोद्ययद्यादयो भवन्ति । ऐकपद्यमैकस्वर्यं च समासाद् भवति ॥

आचोवचोच्चनीचाच्चपराचोच्चावचाकिञ्चनाकुतोभयानि [॥ १२१ ॥

आचोवचादयस्तत्पुरुषसमासाः साधवो भवन्ति । आचितं चावचितं च आचोवचम् । उच्चैश्च नीचैश्च उच्चनीचम् । अवाक् च परस्ताच्च आच्चपराचम् । उदक् च अवाक् च उच्चावचम् । नास्य किंचनास्तीत्यकिञ्चनः । नास्य कुतोऽपि भयमस्तीति अकुतोभयम् । इति ॥

पूर्वापराधरोत्तराण्येकदेशिनैकाधिकरणेन ॥ १२२ ॥

एकदेशोऽस्यास्तीत्येकदेशी अवयवी, तद्वाचिना सुबन्तेनैकद्रव्येण सह पूर्वादीनि सामर्थ्यादेकदेशवाचीनि सुबन्तानि समस्यन्ते । तत्पुरुषश्च समासो भवति । पूर्वं कायस्य पूर्वकायः । अपरकायः । अधरकायः । एकदेशिनेति किम् । पूर्वं नाभेरिति । एकदेशिग्रहणे पूर्वादयः सामर्थ्यादेकदेशवचना विज्ञायन्ते इति षष्ठ्यन्तेन समासो भवति । असति तु तस्मिन्नेकद्रव्येण नाभेरिति पञ्चम्यन्तेनापि स्यात् । एकाधिकरणेनेति किम् । पूर्वं छात्राणामामन्त्रयस्व । अवयवावयविसम्बन्धे च षष्ठीभावात् षष्ठीसमासापवादोऽयमेकदेशिसमासो विज्ञायते । तेन कायस्य पूर्वमित्यादौ षष्ठीसमासो न भवति । अथवा अन्यथा सूत्रं व्याख्यायते — पूर्वादीनि सुबन्तान्येकदेशिना समानाधिकरणेन सह समस्यन्ते । कथं पुनरवयवानामवयविना सहैकाधिकरण्यं भवति । यदा (ये ? अवयवि)षु वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते इति दर्शनम् । यथा पूर्वे पञ्चालाः । उत्तरे पञ्चाला ।

ग्रामो दग्धः । पटो दग्ध इति । पूर्वश्चासौ कायश्च पूर्वकायः । अपरकायः । अधरकायः । उत्तरकायः । एवं च 'विशेषणं विशेष्येणे'ति सिद्धे पुनर्वचनं नियमार्थम् । पूर्वादिशब्दानामेकदेशिना सामानाधिकरण्य एव समासो यथा स्यात् । वैयधिकरण्ये मा भूत् । तेन कायस्य पूर्वमित्यादौ षष्ठीसमासोऽपि न भवति ॥

सायाह्नमध्याह्नमध्यन्दिनमध्यरात्रादयः ॥ १२३ ॥

सायाह्नादयः शब्दा एकदेशितत्पुरुषसमासाः साधवो भवन्ति । सायमह्नः, सायं च तदहश्चेति वा सायाह्नः । मध्यमह्नः, मध्यं च तदहश्चेति वा मध्याह्नः । मध्यं दिनस्य, मध्यं च तद् दिनं चेति वा मध्यन्दिनम् । 'मध्यस्य दिन' इति (मुम्) । मध्यं रात्रेः, मध्यं च तद्रात्रिश्चेति वा मध्यरात्रः । आदिग्रहणादन्ये '(उपारतः पश्चिमरात्र)गोचरादि'त्यादयः शिष्टप्रयोगाः साधवो भवन्ति ॥

अर्धं समप्रविभागे वा ॥ १२४ ॥

अर्धमित्येतत् समप्रविभागे वर्तमानमेकदेशिनैकद्रव्येण समानाधिकरणेन सुबन्तेन सह वा समस्यते । तत्पुरुषश्च समासो भवति । अर्धं पिप्पल्याः, अर्धं च तत् पिप्पली चेति वा अर्धपिप्पली (पिप्पल्यर्धम् । अर्धकोशातकी) कोशातक्यर्धम् । अर्धपणः पणार्धम् । अर्धवेदी वेद्यर्धम् । अर्धचूलिका चूलिकार्धम् । अर्धचापं चापार्धम् । अर्धस्वरः स्वरार्धम् । अर्धग्रामः ग्रामार्धम् । अर्धापूपः अपूपार्धम् । समप्रविभाग इति किम् । ग्रामार्धः । नगरार्धः । असमप्रविभागे वर्तमानस्यार्धशब्दस्य नैकदेशिसमासः॥

अर्धजरतीयार्धवैशसार्धोक्तादयः ॥ १२५ ॥

असमप्रविभागार्थ आरम्भः । अर्धजरतीयादय एकदेशिसमासाः सामानाधिकरण्ये वा तत्पुरुषाः साधवो भवन्ति । अर्धो जरत्याः अर्धश्चासौ जरती चेति वार्धजरती, तत्तुल्यम् अर्धजरतीयम् । अर्धवैशसम् । अर्धोक्तम् । आदिग्रहणात् ....... लौकिकादयो भवन्ति । वावचनानुवृत्तेर्जरत्यर्ध इत्याद्यपि भवति ॥

द्वितीयतृतीयचतुर्थ[1]तुर्य[2]तुरीयतलाग्रादयश्च ॥ १२६ ॥

द्वितीयादयः सुबन्ता एकदेशिनैकद्रव्येण समानाधिकरणेन सह समस्यन्ते । तत्पुरुषश्च समासो भवति । द्वितीयं भिक्षायाः । द्वितीया चासौ भिक्षा चेति वा द्वितीयभिक्षा । भिक्षाद्वितीयम् । तृतीयभिक्षा भिक्षातृतीयम् । चतुर्थभिक्षा भिक्षाचतुर्थम् । तुर्यभिक्षा भिक्षातुर्यम् । तुरीयभिक्षा भिक्षातुरीयम् । तलं पादस्य, तलं च तत् पादश्चेति वा तलपादः । पादतलम् । अग्रं हस्तस्य, अग्रं च तद्धस्तश्चेति वा अग्रहस्तः । हस्ताग्रम् । आदिग्रहणादूर्ध्वकायः कायोर्ध्वमित्यादयो भवन्ति ॥

कालाः परिमाणिना ॥ १२७ ॥

कालविशेषवाचिनः सुबन्ताः सामर्थ्यात् परिमाणवचनाः परिमाणिवाचिना सुपा सह समस्यन्ते । तत्पुरुषश्च समासो भवति । मासो जातस्यास्य मासजातः । संवत्सरजातः । द्व्यहो जातस्यास्य द्व्यहजातः । त्र्यहजातः । काला इति बहुवचननिर्देशात् कालपरिच्छेदिका सङ्ख्यापि काल इत्युच्यते । तेन द्वे अहनी ते द्वे एव पदे परिमाणिना सह समस्येते । पश्चादनयोरेवोत्तरपदे द्विगुर्भवति । द्वे अहनी जातस्य, द्व्यह्नजातः । एवं त्र्यह्नजातः । कथं द्व्यहजातः त्र्यहजातः । समाहारद्विगोर्जातेन सह समासो भविष्यति । तत्पुरुषस्योत्तरपदार्थप्राधान्ये हि मासस्य परिमाणतां जातस्य परिमेयतां च प्रदर्शयितुं वृत्तिवैपरीत्येन विग्रहः क्रियते मासो जातस्येति । मासजातयोश्चाभिसम्बन्धः समासेन निवर्तत इति षष्ठी न भवति । अभिहितश्चार्थेऽन्तर्भूतः प्रातिपदिकार्थः सम्पन्न इति प्रथमैव भवति ॥

नञ् ॥ १२८ ॥

नञित्येतत् समर्थेन सुपा सह समस्यते । तत्पुरुषश्च समासो भवति । न ब्राह्मणः अब्राह्मणः । अवृषलः । अशुक्लः । अकृष्णः । अकृत्वा । अकर्तुम् । नञर्थोपहितश्चोत्तरपदार्थश्चतुर्धा सम्भवति तत्सदृशस्तद्विरुद्धस्तदन्यस्तदभाव इति । तत्सदृशो यथा—अब्राह्मणः अशुक्ल इति । तत्सदृशः क्षत्रियादिः पीतादिश्च प्रतीयते । तद्विरुद्धो यथा—अधर्मः

---

१. 'र्थतुरी', २. 'तु' ग. पाठः.

अशुक्ल इति । तद्विरोधी पापः कृष्णश्च प्रतीयते । तदन्यो यथा — अनग्निः अवायुरिति । अग्निवायुभ्यामन्यः प्रतीयते । तदभावो यथा—अवचनमवीक्षणमिति । वचनवीक्षणाभावः प्रतीयते । यद्ययमुत्तरपदार्थप्रधानः कथम् 'अनेकानि देशान्तराणि बभ्राम', 'भवन्त्यनेके जलधेरिवोर्मयः', 'उद्धतैर्निभृतमेकमनेकैः', 'यत्रैकमनेकेषां वाक्यार्थानां क्रियापदं भवति' इत्यादिप्रयोगा असाधवो भवन्ति । साधव एवैते । यदि वैकशेषाद् भविष्यन्ति । तद्यथा —

'अनेकस्य चकारासौ बाणैर्बाणस्य खण्डनम्' ।
'अविरहितमनेकेनाङ्कभाजा फलेन'

इति ॥

शोभिहिताहालमर्थतद्धितैरसामर्थ्ये ॥ १२९ ॥

नञित्येतत् सुबन्तं शोभिहिताहालमित्येवमर्थतद्धितान्तैः सुबन्तैः सहासामर्थ्ये समस्यते । तत्पुरुषश्च समासो भवति । कर्णवेष्टकाभ्यां न शोभते, अकार्णवेष्टकिकं मुखम् । वत्सेभ्यो न हितः अवत्सीयो गोधुक् । वधं नार्हति अवध्यो ब्राह्मणः । सन्तापाय न प्रभवति असान्तापिकः सदुपदेशः ॥

असूर्यपश्यापुनर्गेयाश्राद्धभोज्यलवणभोज्यादयश्च ॥ १३० ॥

असूर्यम्पश्यादयोऽसमर्थनञ्तत्पुरुषगर्भाः साधवो भवन्ति । सूर्यमपि न पश्यन्ति असूर्यम्पश्या राजदाराः । पुनर्न गीयन्ते अपुनर्गेयाः श्लोकाः । श्राद्धं न भुङ्क्ते अश्राद्धभोजी ब्राह्मणः । अलवणभोजी भिक्षुः । आदिग्रहणाद् अकिञ्चित्करः अकिञ्चित्कुर्वाणः अकिञ्चिदकुर्वाणः इत्येते केषाञ्चिन्मते भवन्ति ॥

ईषद् गुणेन ॥ १३१ ॥

ईषदित्येतत् सुबन्तं गुणवचनेन सुबन्तेन सह समस्यते । तत्पुरुषश्च समासो भवति । ईषत्कडारः । ईषत्पिङ्गलः । ऐकपद्यमैकस्वर्यं च समासाद् भवति । गुणेनेति किम् । ईषद् भोक्तव्यम् । ईषद् गार्ग्यः ॥

षष्ठी ॥ १३२ ॥

षष्ठ्यन्तं सुबन्तं समर्थेन सुपा सह समस्यते । तत्पुरुषश्च समासो भवति । राज्ञः पुरुषः राजपुरुषः । ब्राह्मणकम्बलः ॥

कृद्योगा[1] ॥ १३३ ॥

कर्तृकर्मणोः कृतीति कृद्योगे या षष्ठी विहिता तदन्तं सुपा सहैकार्थीभावे समस्यते। तत्पुरुषश्च समासो भवति। व्यासकृतिः। कालिदासोक्तिः। इध्मप्रव्रश्चनः। पलाशशातनः। 'प्रतिपदविधाना षष्ठी न समस्यत' इति वक्ष्यति। तस्यायं पुरस्तादपवादार्थः॥

याजकपूजकपरिचारकपरिवेषकस्नापकाध्यापकोत्सादकोन्मादकोद्वर्त्तकहोतृभर्त्रादिभिश्च ॥ १३४ ॥

याजकादिभिः सुबन्तैः सह षष्ठी समस्यते। तत्पुरुषश्च समासो भवति। 'कर्तृतृजकाभ्यामि'ति प्रतिषेधं वक्ष्यति। तस्यायं पुरस्तादपवादः। ब्राह्मणानां याजकः ब्राह्मणयाजकः। गुरुपूजकः। राजपरिचारकः। भक्तपरिवेषकः। देवस्नापकः। वेदाध्यापकः। रिपूत्सादकः। चित्तोन्मादकः। अङ्गोद्वर्तकः। क्षीरहोता। भूतभर्त्ता। आदिग्रहणादन्यत्कारकः विश्वगोप्ता 'तत्प्रयोजको हेतुश्च' 'जनिकर्तुः प्रकृतिरि'त्यादयो भवन्ति॥

रथपत्ती गणकेन ॥ १३५ ॥

रथपत्तिशब्दौ षष्ठ्यन्तौ गणकेन समस्येते। तत्पुरुषश्च समासो भवति। रथगणकः पत्तिगणकः॥

गुणात् तरेण तलोपश्च ॥ १३६ ॥

गुणाद् यस्तरप्रत्ययः तदन्तेन सुपा सह षष्ठ्यन्तं समस्यते। (तत्पुरुषश्च समासो भवति।) तरशब्दस्य च लोपो भवति। 'न निर्धारण' इति प्रतिषेधं वक्ष्यति। तस्यायं पुरस्तादपवादः। सर्वेषां श्वेततरः सर्वश्वेतः। सर्वेषां महत्तरः सर्वमहान्॥

सर्वपश्चात्प्रभृतीनि ॥ १३७ ॥

सर्वपश्चात्प्रभृतीनि षष्ठीतत्पुरुषसंज्ञानि साधूनि भवन्ति। सर्वेषां पश्चात् सर्वपश्चात् पदं वर्त्तयति। तदुपरिष्टाद्रुक्मं निदधाति। अव्ययेन प्रतिषेधं वक्ष्यति। तस्यायं पुरस्तादपवादः॥

---

१. 'गा कृति' ग. पाठः.

तत्स्थैश्च गुणैः ॥ १३८ ॥

तदिति षष्ठयन्ताभिधेयं गुणाधारो द्रव्यमुच्यते। तस्मिन्नेव तिष्ठन्तीति तत्स्थाः। भावप्रत्ययमन्तरेण ये च शब्दैः(र्द्रव्यात् पृथङ् नो)च्यन्ते इत्यर्थः। यदा भावप्रत्ययैः पृथक्कृत्याभिहिता द्रव्यवचनात् षष्ठीहेतवो भवन्ति तदा तद्वचनैः सुबन्तैः षष्ठी समस्यते। तत्पुरुषश्च समासो भवति। यत्नस्य गौरवं यत्नगौरवम्। प्रक्रियालाघवम्। बुद्धिकौशलम्। मतिवैगुण्यम्। करणपाटवम्। पुरुषसामर्थ्यम्। अङ्गसौष्ठवम्। हस्तचापलम्। वचनमार्दवम्। उत्तरपदार्थप्राधान्यम्। क्रियासातत्यम्। वर्तमानसामीप्यम्। अधिकरणैतावत्त्वम्। प्रयोगान्यत्वम्। गतताच्छील्यम्। वचनप्रामाण्यम्। शब्दाधिक्यम्। वाङ्माधुर्यम्। तत्स्थैरिति किम्। बलाकायाः शौक्ल्यम्। काकस्य कार्ष्ण्यम्। शुक्लादयो हि द्रव्यात् पृथगपि शब्दैरभिधीयन्त इति तत्स्था न भवन्ति। गुणेन प्रतिषेधं वक्ष्यति। तस्यायं पुरस्तादपवादः। कन्यारूपम्। कपित्थरसः। चन्दनगन्धः। स्तनस्पर्श इत्यादिषु तु रूपादयो गुणसंज्ञाः न तु गुणा इत्येतैः समासप्रतिषेधो न भवति॥

न निर्धारणे ॥ १३९ ॥

निर्धारणे या षष्ठी तदन्तं सुबन्तं सुपा सह न समस्यते। मनुष्याणां क्षत्रियः शूरतमः। गवां कृष्णा सम्पन्नक्षीरतमा॥

प्रतिपदविधाना ॥ १४० ॥

शेषलक्षणां मुक्त्वा 'स्मृत्यर्थदयेशां कर्मणी'त्यादिका षष्ठी प्रतिपदविधाना न समस्यते। मातुः स्मृतम्। सर्पिषो दयितम्। एधोदकस्योपस्कृतम्। चोरस्य रुजणम्। सर्पिषो नाथितम्। चोरस्योज्जासितम्। चोरस्योन्नाटितम्। चोरस्यो(त्त्रासि? त्क्राथि)तम्। चोरस्य पिष्टम्। चोरस्य प्रणिहतम्। शतस्य व्यवहृतम्। सहस्रस्य पणितम्। सहस्रस्य द्यूतम्। किमर्थं पुनः क्तप्रत्ययान्तेनैव प्रतिपदविधानायाः कर्मषष्ठ्याः प्रतिषेध उदाह्रियते। न ल्युडादिनापि, मातुः स्मरणम् एधोदकस्योपस्करणमिति। उच्यते। ल्युडादिप्रयोगे 'कर्तृकर्मणोः कृती'ति कर्मणि षष्ठी। तथा च 'कृद्योगे'ति समास इष्यते।

भावप्रत्ययमन्तरेणेति गुणमात्रवचनैः शुक्लादिशब्दैः। शुक्लः पटः शुक्लः इत्यादि

क्तप्रत्यये तु '(अ ?)मत्याद्यर्थाधिकरणे निष्ठायामि'ति कर्तृकर्मणोः षष्ठी प्रतिषिध्यते । या तु स्मृत्याद्यर्थानां कर्मणः शेषत्वविवक्षायां प्रतिपदं षष्ठी विधीयते, सैव समासप्रतिषेधविषयतया अवतिष्ठते । तदुक्तं —

"कारकैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः ।
प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये ॥
निष्ठायां कर्मविषया या षष्ठी सा निषिध्यते ।
शेषलक्षणया षष्ठ्या समासस्तत्र नेष्यते ॥"

**पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ॥१४१॥**

पूरणप्रत्ययान्तेन गुणवचनेन तृप्त्यर्थेन शतृशानजन्तेनाव्ययेन तव्यप्रत्ययान्तेन समानाधिकरणेन वा सुपा सह षष्ठ्यन्तं न समस्यते । छात्राणां पञ्चमः । ब्राह्मणानां दशमः । पटस्य शुक्लः । काकस्य कृष्णः । गुडस्य मधुरः । चन्दनस्य सुरभिः । बहुलाधिकाराद् वदनसौरभकुसुमसौरभ्यादयो भवन्ति । फलानां सुहितः । फलानां तृप्तः । ब्राह्मणस्य कर्म कुर्वन् । ब्राह्मण(स्य) कर्म (कुर्वा)णः । चोरस्य द्विषन् । ब्राह्मणस्य दोतव्यः । क्षत्रियस्य योद्धव्यम् । इन्द्रः पाटलिपुत्रकस्य माशविदस्य । सर्पिषः पीयमानस्य । यजुषोऽधीयमानस्य । पाटलिपुत्रकराजस्य माराविदस्येति विशेषणसमासो भवत्येव । षष्ठीसमासे तु पूर्वनिपातस्यानियमः स्यादिति स प्रतिषिध्यते ॥

**मत्याद्यधिकरणक्तेन ॥ १४२ ॥**

'मतिबुद्धिपूजार्थेभ्य' इति यः क्तो विहितः, यश्च 'गत्यर्थाकर्मकेऽपि भवति भुजिभ्योऽधिकरणे च', तदन्तेन सह कृद्योगेति प्राप्तः षष्ठीसमासो न भवति । राज्ञां मतः । राज्ञां बुद्धः । राज्ञां पूजितः । इदमेषां यातम् । इदमेषामासितम् । इदमेषां भुक्तम् ॥

**कर्तृकर्महेतुना कर्मणि ॥ १४३ ॥**

कर्तृकर्मणोः षष्ठीहेतुना कृता सह कर्मणि या षष्ठी सा न समस्यते । आश्चर्यो गवां दोहोऽगोपालकेन । साधु खलु पयसः पानं यज्ञदत्तेन । विचित्रा सूत्रस्य कृतिः पाणिनेः ॥

**कर्तर्यकेन ॥ १४४ ॥**

कर्तरि या षष्ठी सा अकप्रत्ययान्तेन सह न समस्यते । भवत आसिका । भवतः शायिका । भवतो गामिका । कर्तरीति किम् । इक्षुभक्षिकां मे धारयसि ॥

कर्तृतृजकाभ्याम् ॥ १४५ ॥

कर्तरि यौ तृजकौ ताभ्यां सह षष्ठी न समस्यते । अपां स्रष्टा । पुरां भेत्ता । ओदनस्य भोजकः । सक्तूनां पायकः ॥

नित्यं क्रीडाजीविकयोः ॥ १४६ ॥

क्रीडायां जीविकायां च गम्यमानायां नित्यं षष्ठी समस्यते । क्रीडाजीविकयोस्तृजभावादक एवोदाह्रियते । उद्दाल(क)पुष्पभाञ्जिका । वारणपुष्पप्रचायिका । दन्तलेखकः । नखलेखकः ॥

गतयः ॥ १४७ ॥

गतिसंज्ञकाः समर्थेन सुपा सह नित्यं समस्यन्ते । तत्पुरुषश्च समासो भवति । प्रकृत्य । प्रकृतम् । ऊरीकृत्य । ऊरीकृतम् ॥

कुः पापेषदर्थयोः ॥ १४८ ॥

कुशब्दः पापार्थे ईषदर्थे च वर्तमानः समर्थेन सुपा सह नित्यं समस्यते । तत्पुरुषश्च समासो भवति । (कुपुरुषः । कोष्णम् ॥)

दुर्निन्दाकृच्छ्राकृच्छ्रार्थयोः ॥ १४९ ॥

स्वती पूजायाम् ॥ १५० ॥

.... .... .... ....

....... सुराजा । अतिराजा । सुस्तुतम् । अतिस्तुतम् । 'न कर्मप्रवचनीया' इति वक्ष्यति । तस्यायं पुरस्तादपवादः ॥

अतिशयातिक्रमणयोश्च ॥ १५१ ॥

सु अति इत्येतौ यथासंख्यमतिशये अतिक्रमणे च वर्तमानौ सुपा सह नित्यं समस्येते । तत्पुरुषश्च समासो भवति । सुस्तुतम् । अतिस्तुतम् ॥

आङीषदर्थाभिव्याप्त्योः ॥ १५२ ॥

आङित्येतदीषदर्थे अभिव्याप्तौ च सुपा सह नित्यं समस्यते । तत्पुरुषश्च समासो भवति । आकडारः । आबद्धम् ॥

प्रादयो गताद्यर्थे प्रथमया ॥ १५३ ॥

प्रादयो गताद्यर्थे वर्तमानाः प्रथमान्तेन सुपा सह नित्यं समस्यन्ते । तत्पुरुषश्च समासो भवति । प्रगत आचार्यः प्राचार्यः । विरुद्धः पक्षः विपक्षः । प्रत्यर्थी पक्षः प्रतिपक्षः । प्रतिबद्धं वचः प्रतिवचः । उपश्लिष्टः पतिः उपपतिः । उपपन्नो नायकः उपनायकः । अनुकूलः (नायकः) अनुनायकः । प्रतिकूलः नायकः प्रतिनायकः ॥

अत्यादयः क्रान्ताद्यर्थे द्वितीयया ॥ १५४ ॥

अत्यादय उपसर्गाः क्रान्ताद्यर्थे वर्तमाना द्वितीयान्तेन सुपा सह समस्यन्ते । तत्पुरुषश्च समासो भवति । अतिक्रान्तः खट्वामतिखट्वः प्रावारः । अत्यश्वो वराहः । प्रतिगतोऽक्षं प्रत्यक्षः पदार्थः । अनुगतो लोमानि अनुलोमः । प्रतिलोमः । अभिपन्नो मुखमभिमुखम् ॥

अवादयः क्रुष्टाद्यर्थे तृतीयया ॥ १५५ ॥

अवादयः क्रुष्टाद्यर्थे वर्तमानाः तृतीयान्तेन सह समस्यन्ते। तत्पुरुषश्च समासो भवति । अवक्रुष्टं कोकिलया अवकोकिलं वनम् । अनुगतमर्थेन अन्वर्थं नाम । सङ्गतमक्ष्णा समक्षं वस्तु । वियुक्तमर्थेन व्यर्थं वचः । सङ्गतमर्थेन समर्थं पदम् ॥

पर्यादयो ग्लानाद्यर्थे चतुर्थ्या ॥ १५६ ॥

पर्यादयो ग्लानाद्यर्थे वर्तमानाश्चतुर्थ्यन्तेन सह समस्यन्ते । तत्पुरुषश्च समासो भवति । परिग्लानोऽध्ययनाय पर्यध्ययनः । परिश्रमः । (अलं कुमार्यै) अलंकुमारिः । अलंपुरुषीणः ॥

निरादयः क्रान्ताद्यर्थे पञ्चम्या ॥ १५७ ॥

निरादयः क्रान्ताद्यर्थे वर्तमानाः पञ्चम्यन्तेन समस्यन्ते । तत्पुरुषश्च समासो भवति । निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः । निर्वाराणसिः । उत्क्रान्ता कुलात् उत्कुला कुलटा । उद्वेलः समुद्रः । उच्छास्त्रं

वचः । उत्सूत्रो न्यायः । उच्छृङ्खलः कलभः । अपगतमर्थादपार्थं वचः । अपक्रान्तं कार्यात् अपकार्यम् ॥

## अन्वादयस्तिङोदात्तवता गतिमता च ॥ १५८ ॥

अन्वादयस्तिङन्तेनोदात्तवता गतिमता च सह समस्यन्ते । तत्पुरुषश्च समासो भवति । अनुव्यचलत् । अनुप्रावर्षत् । यत् पर्यन्ति (?) । समासे सतीति प्रकृतिभावो न भवति । समासोदात्तत्वं च भवति । समासस्य प्रातिपदिकत्वेऽपि सङ्ख्यायास्तिङैवोक्तत्वात् सुबुत्पत्तिर्न भवति । पदत्वार्थमुत्पन्नस्य वा प्रथमैकवचनस्य तिङन्तार्थप्राधान्यान्नपुंसकत्वे स्वमोर्नपुंसकादिति सुलोपो भवति । एवञ्च सत्यामनुप्राविशद् देवदत्ता इति 'आम एकान्तरमामन्त्रितमनन्तिके' इति निघातप्रतिषेधः सिद्धो भवति । बहुलाधिकाराच्चायं समासः क्वचिदेव भवति ॥

## न कर्मप्रवचनीयाः ॥ १५९ ॥

कर्मप्रवचनीयाः सुपा सह न समस्यन्ते । शाकल्यस्य संहितामनु प्रावर्षत् । वृक्षं प्रति विद्योतते विद्युत् । यदत्र मां परि स्यात् । साधुर्देवदत्तो मातरमभि । अनु अर्जुनं योद्धारः । उप खार्यां द्रोणः । अधि ब्रह्मदत्ते पञ्चालाः ॥

## उपपदमतिङ् ॥ १६० ॥

कृद्विधौ 'सप्तमीस्थमुपपद'मि'त्युक्तम् । तदतिङन्तं समर्थेन सह नित्यं समस्यते । तत्पुरुषश्च समासो भवति । अतिङ्ग्रहणादिह सुपेति न सम्बध्यते । तेन कृदन्तावस्थायामेव समासो भवति । कुम्भकारः । ग्रामणीः । अग्निचित् । सोमसुत् । प्रष्ठी । कच्छपी । व्रीहिवापिणी । अत्र यदि कृता सुबन्तेन समासः स्यात् तदा अन्तरङ्गत्वात् सुबुत्पत्तेः प्रागेव टापि सति 'पुंयोगादाख्यायां' 'जातेरस्त्रीविषयात्' इति प्रष्ठी कच्छपीत्यत्रानकारान्तत्वात् ङीब् न भवेत् । व्रीहिवापिणीत्यत्र तु ङीपि सति प्रातिपदिकान्तलक्षणं णत्वं न भवेत् । कथं तर्हि दधिसेक् अनुसूरित्यादौ पदादिलक्षणः षत्वप्रतिषेधः । बहुलवचनात् क्वचित् सुबन्तेनापि समासः । अतिङिति किम् । कारको व्रजति । क्रियोपलक्षणार्थं तिङिति वर्णयन्ति । तेनेहापि न भवति । कारकस्य व्रज्या नारस्य गतिः ॥

## नाव्ययेनानमा ॥ १६१ ॥

अव्ययेन कृदन्तेन मान्तवर्जितेन सहोपपदं न समस्यते। काले भोक्तुम्। वेला भोक्तुम्। अलं कृत्वा। खलु कृत्वा। पूर्वं भुक्त्वा व्रजति। प्रथमं भुक्त्वा व्रजति। अनमेति किम्। चोरङ्कारमाक्रोशति। स्वादुङ्कारं भुङ्क्ते। समूलकाषं कषति। जीवग्राहं गृह्णाति। सुवर्णनिधायं निदधाति। ओदनपाकं पचति। उपस्कारं लुनाति॥

अमा च प्राक् खमुञः॥ १६२॥

'कर्मण्याक्रोशे कृञः खमुञ्' इत्युक्तम्। ततः प्राक् (खमुञ? अम) न्तेन च सहोपपदं न समस्यते। अग्रे भोजं व्रजति। प्रथमं भोजं व्रजति॥

तृतीयादीनि क्त्वा च वा॥ १६३॥

'दंशेस्तृतीयायां चे'त्युक्तं, तानि तृतीयादीन्युपपदानि अमन्तेन क्त्वान्तेन वा समस्यन्ते। प्राप्तविभाषेयम्। मूलकेनोपदंशं भुङ्क्ते (मूलकोपदंशम्)। दण्डेनोपघातं गाः कालयति (दण्डोपघातम्)। पार्श्वयोरुपपीडं शेते। पार्श्वाभ्यामुपपीडं शेते। पार्श्वोपपीडं शेते। शय्याया उत्थायं व्रजति। शय्योत्थायं व्रजति। यष्टिग्राहं युध्यन्ते। नामानि ग्राहमाचष्टे नामग्राहम्। ब्राह्मण! पुत्रस्ते जातः। किं तर्हि वृषल! नीचैःकृत्य कथयसि। (नीचैः कृत्य?।) नीचैः कृत्वा। नीचैःकारम्। तिर्यक् कृत्वा। (तिर्यक्कृत्य)। तिर्यक्कारम्। मुखतो भूत्वा (मुखतोभूय) मुखतोभावम्। तूष्णींभूय तूष्णीं भूत्वा तूष्णींभावम्। अन्वग्भूय अन्वग्भूत्वा अन्वग्भावम्। अमन्तेन सह समासाभावपक्षे वाव्ययोपपदानां परनिपातो भवति॥

अव्ययं (प्र)[1]वृद्धादिभिः॥ १६४॥

अव्ययं (प्र)वृद्धादिभिः सुबन्तैः सह समस्यते। तत्पुरुषश्च समासो भवति। पुनःप्रवृद्धं बर्हिः। पुनरुत्स्यूतं वासः। पुनर्निष्क्रीतो रथः। पुनरुक्तं वचः। पुनर्नवं पयः। पुनःश्रुतं पयः। स्वर्यातः। अन्तर्भूतः। प्रातःस्नानम्। उच्चैर्घोषम्। नीचैर्गतम्। अधस्पदम्। अनद्धापुरुषः। प्रायश्चित्तम्। अघशी। प्राग्वृत्तम्। पुराकल्पः। श्वःश्रेयसम्। श्वोवसीयसमिति॥

इति श्रीदण्डनाथनारायणभट्टसमुद्धृतायां सरस्वतीकण्ठाभरणस्य व्याकरणस्य लघुवृत्तौ हृदयहारिण्यां तृतीयस्याध्यायस्य द्वितीयः पादः॥

---

१. 'यं वृ' क. पाठः.

## अथ तृतीयः पादः ।

### शेषो बहुव्रीहिः ॥ १ ॥

अधिकारोऽयमाद्वन्द्वात् । उपयुक्ताद् योऽन्यः स शेषः । इत उत्तरं यः समासो वक्ष्यते स उपयुक्तादन्यो बहुव्रीहिसंज्ञो भवति । अदूरदशाः । त्रिदशाः । द्वित्राः । उपदशाः । उच्चैर्मुखः । चित्रगुरिति । शेष इति किम् । उपदशम् । उन्मत्तगङ्गम् ॥

### अदूराधिकासन्नाः सङ्ख्यया सङ्ख्येये ॥ २ ॥

सङ्ख्येये या सङ्ख्या तद्वाचिना सुबन्तेन सहादूराधिका(नामे?सन्ना) एकार्थीभावे समस्यन्ते । बहुव्रीहिश्च समासो भवति । अदूरा दशानां अदूरदशाः । अधिका दशानामधिकदशाः । आसन्ना दशानामासन्नदशाः । सङ्ख्ययेति किम् । अदूरा ग्रामाणाम् । सङ्ख्येय इति किम् । अधिका विंशतिर्गवाम् । अत्रादूरा दशैषामिति विग्रहाद् 'अनेकं मतुपोऽर्थे' इत्यनेनैव सिद्धे दशादूरा दशाधिका दशासन्ना इति षष्ठीतत्पुरुषेऽपि संख्येयार्थे मा भूदिति वचनम् ॥

### सङ्ख्या सुजर्थे ॥ ३ ॥

सङ्ख्यावाचि सुबन्तं सुजर्थे वर्तमानं सङ्ख्येये या सङ्ख्या तद्वाचिना सुपा सह समस्यते । बहुव्रीहिश्च समासो भवति । द्विर्दश द्विदशाः । त्रिर्दश त्रिदशाः । चतुर्दश चतुर्दशाः । वृत्तिविषय एव सङ्ख्या-शब्दानां सुजर्थाभिधानसामर्थ्यमिति वाक्ये सु(ज ? चः) प्रयोगो न भवति ॥

### वार्थे च ॥ ४ ॥

सङ्ख्यावाचि सुबन्तं सङ्ख्येये या सङ्ख्या तद्वाचिना सुपा सह वार्थे समस्यते । बहुव्रीहिश्च समासो भवति । द्वौ वा त्रयो वा द्वित्राः । त्रिचतुराः । पञ्चषाः । ननु द्वित्रा (वा ? ना)नयेति यदावधृतमानयनं तदावधृतवचन-मुपपन्नम् । यदा द्वावादीयेते तदा न सिध्यति । नैवम् । अविद्धलेऽर्थे बहुवचनं प्रयोक्तव्यम् । यथा कतीह भवतः पुत्रा इति । तथा (वा ? )द्वौ वेत्युक्ते

त्रयो वेति गम्यते। त्रयो वेत्युक्ते द्वौ वेति। सैषा पञ्चाधिष्ठाना वाक्। तद्युक्तं वचनमिति॥

अव्ययम्॥ ५॥

सङ्ख्येये या सङ्ख्या तद्वाचिना सुबन्तेन सहाव्ययं समस्यते। बहुव्रीहिश्च समासो भवति। समी(पा? पे) दशानामुपदशाः। उपविंशाः। यदा समीपिप्राधान्यं तदा बहुव्रीहिः। यदा तु सामीप्यप्राधान्यं तदाव्ययीभावः उपदशमिति॥

अन्यपदार्थे॥ ६॥

अव्ययं सुबन्तेन सहान्यस्य पदस्यार्थे समस्यते। बहुव्रीहिश्च समासो भवति। उच्चैर्मुखमस्योच्चैर्मुखः। नीचैर्मुखः। अन्तरङ्गमस्य अन्तरङ्गः। बहिरङ्गः। कर्तुं कामोऽस्य कर्तुकामः। हर्तुं मनोऽस्य हर्तुमना इति॥

अस्तिक्षीरादयः॥ ७॥

अस्तिक्षीरादयोऽन्यस्य पदस्यार्थे बहुव्रीहिसमासाः साधवो भवन्ति। अस्ति क्षीरमस्याः अस्तिक्षीरा गौः। अस्तिधना राजधानी। अस्त्यादीनां तिङन्तत्वमाश्रित्ये(दं निपातनम्)। अव्ययत्वे तु पूर्वेणैव सिद्धमिति॥

उपमानमुपमेयसरूपोत्तरपदलोपश्च॥ ८॥

उपमानवाचि सुबन्तं सामर्थ्यादुपमेयवाचिना सुबन्तेन सहान्यस्य पदस्यार्थे समस्यते। बहुव्रीहिश्च समासो भवति। यत्र चोपमानपदे उपमेयसरूपमुत्तरपदमस्ति त(त्र? च्च) लुप्यते। चन्द्र इव मुखमस्याश्चन्द्रमुखी। कमलवदना। बिम्बोष्ठी। चक्रनितम्बा। (इति?) उष्ट्रमुखः। वृषस्कन्धः। हरिणाक्षी। हंसगमनेति। उपमेयसरूपग्रहणं किम्। इभकुम्भस्तनी। नागनासोरूः॥

सप्तमी पूर्वं समानाधिकरणम्॥ ९॥

सप्तम्यन्तं पूर्वपदं सुबन्तं समानाधिकरणं सुबन्तेन सहान्यस्य पदस्यार्थे समस्यते। बहुव्रीहिश्च समासो भवति। उत्तरपदं च लुप्यते। कण्ठे स्थितः कालोऽस्य कण्ठेकालः। उरसि जातानि लोमान्यस्य उरसिलोमा। वहेगडुः। गडुशिराः इति।

समुदायविकारषष्ठीसमस्तम् ॥ १० ॥

समुदायापेक्षा विकारापेक्षा च या षष्ठी तया यत् समस्तं तत् सुबन्तं समानाधिकरणं सुपा सहान्यस्य पदस्यार्थे समस्यते । बहुव्रीहिश्च समासो भवति । उत्तरपदं च लुप्यते । (केशानां सङ्घातः केशसङ्घातः । केशसङ्घातः चूडा अस्य केशचूडः । सुवर्णस्य विकारोऽलङ्कारोऽस्य सुवर्णालङ्कारः ॥)

प्रादिभ्यो धातुजं वा चोत्तरपदलोपश्च ॥ ११ ॥

.......... प्रपतितानि पर्णान्यस्य प्रपर्णः प्रपतितपर्णः । प्रपलाशः प्रपतितपलाशः । परागता असवोऽस्य परासुः परागतासुः । उद्रश्मिः उद्गतरश्मिः ॥

नञोऽस्त्यर्थम् ॥ १२ ॥

नञः परं धातुजमस्त्यर्थं समस्तं समानाधिकरणं सुपा सहान्यस्य पदस्यार्थे समस्यते । बहुव्रीहिश्च समासो भवति । वा चोत्तरपदं लुप्यते । अविद्यमानः पुत्रोऽस्य अपुत्रः अविद्यमानपुत्रः ॥

अनेकं मतुपोऽर्थे ॥ १३ ॥

अनेकं सुबन्तं समानाधिकरणं मतुपोऽर्थे समस्यते । बहुव्रीहिश्च समासो भवति । चित्रा गावोऽस्य चित्रगुर्देवदत्तः । वीराः पुरुषा अस्मिन् वीरपुरुषको ग्रामः । के सब्रह्मचारिणोऽस्य किंसब्रह्मचारी । अर्धं तृतीयम(वा ? स्या)मर्धतृतीया इति । अनेकग्रहणाद् बहूनामपि पदानां समासो भवति । शोभनाः सूक्ष्माः जटाः केशा अस्य सुसूक्ष्मजटकेशः । शोभनं (तद ? नत)मजिनं वासोऽस्य सु(लभा ? नता)जिनवासाः । समन्तान्यन्तेषु सि(किनी ? तीनि) रन्ध्राण्यस्मिन् समन्तसितिरन्ध्रः । मत्ता बहवो मातङ्गा अस्मिन् मत्तबहुमातङ्गं वनम् । पञ्च गावो धनमस्य पञ्चगवधनः । पञ्च नावः प्रिया अस्य पञ्चनावप्रियः । समानाधिकरणमिति किम् । पञ्चभिर्भुक्तमस्य । अन्यपदार्थ इति वर्तमाने मतुपोऽर्थ इति (बहु ?)वचनमस्यु-

पाधीनामेव समासो यथा स्यादित्येवमर्थम् । तेन पञ्च भुक्तवन्तो अस्येत्यन्यपदार्थमात्रे न भवति ॥

## कर्तृकर्मप्रवचनमप्रथमायाः ॥ १४ ॥

अमत्वर्थार्थोऽयमारम्भः । कर्तृकर्मप्रवचनं चानेकं समानाधिकरणं सुबन्तमप्रथमान्तस्यान्यस्य पदस्यार्थे समस्यते । बहुव्रीहिश्च समासो भवति । कर्तृप्रवचनम् — आरूढो वानरो यं स आरूढवानरो वृक्षः । प्राप्ता अतिथयो यं प्राप्तातिथिर्ग्रामः । कुपितः प्रभुरस्मै कुपितप्रभुर्भृत्यः । भीताः शत्रवो यस्माद् भीतशत्रुर्नृपः । कर्मप्रवचनम् — ऊढो रथोऽनेन ऊढरथोऽनड्वान् । भिक्षितभिक्षो यतिः । उपहृतः पशुरस्मै उपहृतपशू रुद्रः । उद्धृत ओदनोऽस्या उद्धृतौदना स्थाली । अनेकमित्यनुवृत्तेरिहापि भवति । आरूढबहुवानरो वृक्षः । ऊढबहुरथोऽनड्वान् । कर्तृकर्मवचनात् सुराजन्वती भूमिरनेन, प्राग् ग्रामोऽस्मादित्यादौ न भवति । अप्रथमाया इति किम् । वृष्टे देवे गतः । इह कस्मान्न भवति — वृष्टे देवे गतं पश्य । बहिरङ्गत्वान्न प्रथमा । वचनमित्येव सिद्धे प्रशब्दोपादानं बहिःक्रियापेक्षेऽपि कर्तृकर्मत्वे यथा स्यात् । तेन (तः परो यस्माच्छ्रूयते) तपरः । हल् पूर्वोऽस्माच्छ्रूयते हल्पूर्व इत्याद्यपि सिद्धं भवति ॥

## दिङ्नामान्यन्तराले ॥ १५ ॥

दिशां नामानि दिङ्नामानि । तानि सुबन्तान्यन्तराले वाच्ये समस्यन्ते । बहुव्रीहिश्च समासो भवति । दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालं सा दक्षिणपूर्वा । (पूर्वोत्त)रा । उत्तरपश्चिमा । दक्षिणपश्चिमा । 'सर्वनाम्नां वृत्तिमात्र' इति पुंवद्भावः । कथं पश्चिमदक्षिणा पश्चिमोत्तरेति । कर्मधारयोऽयम् । बहुव्रीहौ हि सर्वनाम्नः पूर्वनिपातो भवति । यद्येवं दक्षिणपूर्वेत्यादावपि कर्मधारयेणैव सिद्धम् । सत्यम् । (एवं) सति दक्षिणपूर्वायै दक्षिणपूर्वस्यै इति पाक्षिकस्याभावो बहुव्रीहिस्वरश्च न सिध्यति । ननु च यथा दक्षिणपूर्वायै (त्रु ? मु)ग्धायै इत्यन्यपदार्थे समासस्तथान्तरालेऽपि भविष्यति । न सिध्यति । तत्र द्वे प्रथमान्ते षष्ठ्यर्थे

समस्येते। इह तु द्वे षष्ठयन्ते प्रथमार्थे इति विशेषः। नामग्रहणं रूढ्यर्थम्। तेनेह न भवति। ऐन्द्र्याश्च कौबेर्याश्च यदन्तरालमिति ॥

तत्र गृहीत्वा तेन प्रहृत्येति सरूपे युधि क्रियाऽव्यतीहारे ॥ १६ ॥

तत्रेति सप्तम्यन्ते सरूपे गृहीत्वेति क्रियाव्यतीहारे (णे? तेने)ति च तृतीयान्ते सरूपे प्रहृत्येति क्रियाव्यतीहारे युद्धविषये समस्येते। बहुव्रीहिश्च समासो भवति। केशेषु केशेषु गृहीत्वा वृत्तं युद्धं केशाकेशि। बाहूबाहवि। दण्डैश्च (दण्डैश्च) प्रहृत्य वृत्तं युद्धं दण्डादण्डि। मुष्टीमुष्टि। सरूप इति किम्। हस्ते च पादे च गृहीत्वा वृत्तं युद्धम्। क्रियाव्यतीहार इति किम्। केशेषु च केशेषु च गृहीत्वा युद्धमनेन। युधीति विषयनिर्देशाद् युद्धोपाधिकायामन्यस्यामपि क्रियायां भवति। बाहूबाहवि व्यासजेतामिति। अयमपि प्रथमार्थे समासः। वचनसामर्थ्याच्चैक(रे? शे)षं वा बाधते॥

सह तृतीयया तुल्ययोगे ॥ १७ ॥

सहेत्येतत् सुबन्तं तृतीया(न्तेन) बहुव्रीहौ समस्यते। तुल्यश्चेत् प्रधानाप्रधानयोः क्रियायां योगो भवति। सह पुत्रेण सपुत्र आगतः। सच्छत्रः। तुल्ययोग इति किम्। 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' ॥

क्वचिद् विद्यमानार्थे ॥ १८ ॥

सहेत्येतत् (सुबन्तं) तृतीयान्तेन (विद्यमानार्थे) क्वचित् समस्यते। बहुव्रीहिश्च समासो भवति। सह कर्मणा वर्तते सकर्मकः। सलोमकः। सपक्षकः। सधनः। समदः। सदर्पः। क्वचिद्ग्रहणादिह न भवति। सहैव धनेन भिक्षां भ्रमति ॥

चार्थे युगपदधिकरणवचनतायां द्वन्द्वः ॥ १९ ॥

अनेकमिति वर्तते। अनेकं सुबन्तं युगपदधिकरणवचनताविषये चार्थे वर्तमानं समस्यते। द्वन्द्वश्च समासो भवति। प्लक्षश्च न्यग्रोधश्च प्लक्षन्यग्रोधौ। धवश्च खदिरश्च पलाशश्च धवखदिरपलाशाः। वाक् (च) त्वक् च वाक्त्वचम्। छत्रोपानहम्। चार्थ इति किम्। वीप्सायुगपदधिकरण(वचनतायां) मा भूत्। ग्रामो ग्रामो रमणीयः। युगपदधिकरणव-

नतायामिति किम् । प्लक्षश्च न्यग्रोधश्च वीक्ष्यताम् । वाक् च त्वक् च गृह्यताम् । याज्ञिकश्चासौ वैयाकरणश्च याज्ञिकवैयाकरणः । कति पुनश्चार्थाः । समुच्चयोऽन्वाचय इतरेतरयोगः समाहार इति चत्वारः । तत्रैकमर्थं प्रति....ध्यादीनामतुल्यवचनानामविरोधिनामनियमक्रमयौगपद्यानामात्मस्वरूपभेदेन चीयमानता समुच्चयः । यथा — देवदत्तः पचति च पठति च । देवदत्तो यज्ञदत्तश्च पचति । राज्ञो गौश्चाश्वश्च । राज्ञो ब्राह्मणस्य च गौः । शुक्लश्चायं कृष्णश्च । नीलं च तदुत्पलं चेति । अत्र चार्थत्वेऽपि युगपदधिकरणवचनताया अभावात् समासो भवति । चप्रयोगमन्तरेणापि चायं भवति । यथा —

"अहरहर्नयमानो गामश्वं पुरुषं पशुम् ।
वैवस्वतो न तृप्यति सुराया इव दुर्मतिः ॥
इन्द्रस्त्वया + वरुणो वायुरादित्यः स्तूयताम् ॥"

इति । समुच्चय एव अन्वाचयो यत्रैकस्य प्राधान्यमित(रत् तद)नुरोधेन पश्चादाचीयते । यथा — वटो! भिक्षामट गां चानयेति । स हि भिक्षां तावदटति । यदि च गां पश्यति, तामप्यानयतीत्यसामर्थ्यादेव चात्र समासो न भवति । द्रव्याणामेव परस्परसव्यपेक्षाणामुद्भूतावयवभेदः समूह इतरेतरयोगः । यथा — धवश्च खदिरश्च पलाशश्च तिष्ठन्ति धवखदिरपलाशास्तिष्ठन्ति । अत्रावयवानामुद्भूतत्वात् तत्सङ्ख्यानिबन्धनं बहुवचनं भवति । स एव तिरोहितावयवभेदः समाहारः । यथा — धवश्च खदिरश्च पलाशश्च (धवखदिरपलाशं) तिष्ठति । अत्र तु समूहस्य प्राधान्यात् तस्य चैकत्वादेकवचनमेव भवति । ए(त)योर्युगपदधिकरणवचनताया विद्यमानत्वात् समासो भवति । यद्येवं पट्वीमृध्या(मुख्या ?)वित्यत्र समानाधिकरणलक्षणः पुंवद्भावः प्राप्नोति । विप्रतिषिद्धार्थेषु च युगपदधिकरणवचनतानुपपत्तिः शीतोष्णे सुखदुःखे इति । नैवम् । पुंवद्भावे हि वाक्यविषयं सामानाधिकरण्यमाश्रीयते, न तु वृत्तिविषयम् । वृत्तेरलौकिकत्वात् । नहि लोके पट्व्यौ च मृद्व्यौ चेति वाक्यप्रयोगः । न च प्रतिषिद्धार्थेष्वपि दोषः । सर्व इमे समासवर्तिनः शब्दाः परस्परव्यवच्छेद्यव्यवच्छेदकभावापन्नत्वेन विप्रतिषिद्धार्था एव । तत्र प्लक्षन्यग्रोधादिषु यथा युगपदधिकरणवचनता दृश्यते, तथा शीतोष्णादिष्वपि । नन्वेवमपि प्लक्षन्यग्रोधादिषु अर्थद्वयस्यैकेनैवाभिहितत्वादितरस्य

प्रयोगो न प्राप्नोति। नैवम्। सहभूतावन्योन्यस्यार्थमाहतुः, न पृथग्भूतौ। स्वभावत एव शब्दानामभिधानशक्तेर्नियतविषयत्वात्। प्लक्षन्यग्रोधावित्यत्र तु प्लक्षन्यग्रोधशब्दयोः प्रत्येकं द्व्यर्थाभिधायित्वेऽपि बहुवचनं न भवति। याभ्यामेवात्रैको ह्यर्थस्ताभ्यामेवापरोऽपीति द्विवचनमेव भवति। का पुनरिह युगपदधिकरणवचनता नाम। या पदार्थानां सहविवक्षा। तथाहि युगपदनेकमधिकरणं वक्तीति युगपदधिकरणवचनस्तस्य भावो युगपदधिकरणवचनता। एतदुक्तं भवति—यत्रैककमेव वर्तिपदं युगपदनेकं समासाभिधेयमधिकरणं वक्ति तत्र समास इति॥

**दधिसर्पिर्मधूनि पयोमधुसर्पिर्भिरितरेतरयोगे॥ २०॥**

समाहारेतरेतरयोगयोर्द्वन्द्वविधानात् सर्वत्रोभयप्रसङ्गे नियम आरभ्यते। दध्यादीनि सुबन्तानि यथासङ्ख्यं पयःप्रभृतिभिः सुबन्तैः सहेतरेतरयोग एव समस्यन्ते। द्वन्द्वश्च समासो भवति। दधि च पयश्च दधिपयसी। सर्पिर्मधुनी। मधुसर्पिषी॥

**इध्मावाग्ऋचो बर्हिर्मनस्सामभिः॥ २१॥**

इध्मादीनि (सुबन्तानि) यथासङ्ख्यं बर्हिःप्रभृतिभिः सहेतरेतरयोग एव समस्यन्ते। द्वन्द्वश्च समासो भवति। आकारोच्चारणं दीर्घार्थम्। इध्माबर्हिषी। वाङ्मनसे। ऋक्सामे॥

**आदिरवसानेन॥ २२॥**

आदिशब्दोऽवसानेन सहेतरेतरयोगे समस्यते। द्वन्द्वश्च समासो भवति। आद्यवसाने॥

**शुक्लः कृष्णेन॥ २३॥**

शुक्लशब्दः कृष्णेन सहेतरेतरयोगे समस्यते। द्वन्द्वश्च समासो भवति। शुक्लकृष्णे॥

**श्रद्धा मेधया॥ २४॥**

श्रद्धाशब्दो मेधया सहेतरेतरयोगे समस्यते। द्वन्द्वश्च समासः। श्रद्धामेधे॥

**मेधादीक्षाश्रुताध्ययनानि च तपसा॥ २५॥**

मेधादीनि श्रद्धा च तपसा सहेतरेतरयोगे समस्यन्ते। द्वन्द्वश्च समासो भवति। मेधातपसी। दीक्षातपसी। श्रुततपसी। अध्ययनतपसी। श्रद्धातपसी॥

**याज्याप्रवर्ग्योलूखलान्यनुवाक्योपसन्मुसलैः॥ २६॥**

याज्यादीनि सुबन्तानि यथासङ्ख्यमनुवाक्यादिभिः सहेतरेतरयोगे समस्यन्ते। द्वन्द्वश्च समासो भवति। याज्या च अनुवाक्या च याज्यानुवाक्ये। प्रवर्ग्योपसदौ। उलूखलमुसलौ॥

**हरिब्रह्मशिवस्कन्दपरिव्रज्याद्या वासवप्रजापतिवैश्रवणविशाखकौशिकादिभिः॥ २७॥**

हरिप्रभृतयो यथासङ्ख्यं वासवादिभिः सहेतरेतरयोगे समस्यन्ते। द्वन्द्वश्च समासो भवति। हरिवासवौ। ब्रह्मप्रजापती। शिववैश्रवणौ। स्कन्दविशाखौ। परिव्रज्याकौशिकौ। आदिशब्दः प्रकारे। तेन येषां लोके इतरेतरयोग एव समासो दृश्यते, तेषामिह ग्रहणं भवति। सूर्याचन्द्रमसौ। अग्नीषोमौ। सोमारुद्रौ। नारदपर्वतौ। शण्डामर्कौ। नरनारायणौ। रामलक्ष्मणौ। भीमार्जुनौ। कम्बलाश्वतरौ। मातापितरौ। मातापुत्राविति॥

**अधिकरणैतावत्त्वे॥ २८॥**

अधिकरणं वर्तिपदार्थः। स हि समासार्थस्याधारः। तस्यैतावत्त्वे परिमाणे गम्यमाने समाहारविषयेऽपीतरेतरयोग एव द्वन्द्वो भवति। उदगुः दश कठकालापाः। द्वादश पदकक्रमकाः। चतुर्दश दन्तोष्ठाः। षोडश मार्दङ्गिकपाणविकाः। अष्टादश रथिकाश्वारोहा इति॥

**समीपे वा॥ २९॥**

अधिकरणानामियत्तायाः समीपे गम्यमाने समाहारविषये इतरेतरयोगे वा द्वन्द्वो भवति। उपदशं पाणिपादम्। उपदशाः पाणिपादाः। उपविंशति तक्षायस्कारम्। उपविंशास्तक्षायस्काराः। अव्यय (स्य) सङ्ख्याव्ययीभावोऽपि विहितः बहुव्रीहिरपि। तत्रैकत्वनपुंसकत्वानुरोधात् समाहारपक्षेऽव्ययीभावः प्रयुज्यते। इतरेतरयोगपक्षे तु बह्वर्थो बहुव्रीहिरिति॥

**सङ्ख्या विंशत्यादिभिः सङ्ख्यायां समाहारे॥ ३०॥**

सङ्ख्यावाचिनः शब्दाः विंशत्यादिभिः सह सङ्ख्यायामभिधेयायां समाहार एव चार्थे समस्यन्ते। द्वन्द्वश्च समासो भवति। एकश्च विंशतिश्च एकविंशतिः। द्वाविंशतिः। एकत्रिंशद्। द्वात्रिंशत्। एकनवतिः। द्वानवतिः। अष्टसहस्रम्। विंशत्यादिभिरिति किम्। एकश्च दश च एकादश। चत्वारश्च दश च चतुर्दश इतीतरेतरयोगे। (संख्याया)मिति किम्। एको देवदत्ताय दीयताम्। विंशतिर्यज्ञदत्तायेति। एकविंशती अनयोर्देहि। एवं

'त्रिंशच्चत्वारिंशतौ च षष्टिसप्तत्यशीतयः।
चतुस्त्रिद्व्येकभागिनः पञ्चसप्ततिकोटिमान्॥"

इति। 'अधिकान्ता सङ्ख्या सङ्ख्ययाधिकलोपश्चे'ति तत्पुरुषेणैव सिद्धे एकविंशतिः पञ्चविंशतिः इत्यादावितरेतरयोगे द्विवचनं बहुवचनं च मा भूदिति वचनम्॥

## अनुवादे चरणाः स्थेणोर्लुङि॥ २१॥

प्रमाणान्तरावगतार्थस्य शब्देन सङ्कीर्तनमनुवादः। शाखाध्ययननिमित्तकव्यपदेशभाजो द्विजादयश्चरणाः कठादयः। अनुवादे गम्यमाने चरणवाचिनः शब्दाः स्थेणोर्लुङ्परयोः प्रयोगे सति समाहार एव चार्थे समस्यन्ते। द्वन्द्वश्च समासो भवति। प्रत्यष्ठात् कठकौथुमम्। उदगात् कठकालापम्। अत्रैतेषां प्रतिष्ठोदयौ प्रमाणान्तरावगतौ शब्देन सङ्कीर्त्यते। अनुवाद इति किम्। उदगुः कठकालापाः। चरणा इति किम्। उदगुर्वैयाकरणमीमांसकाः। स्थेणोरिति किम्। अगमन् कठकालापाः। लुङीति किम्। अतिष्ठन् कठकालापाः॥

## अनपुंसकान्यध्वर्युक्रतवः॥ २२॥

अध्वर्युवेदो यजुर्वेदः। तत्र विहिताः क्रतवोऽश्वमेधादयोऽध्वर्युक्रतवः। ससोमको यागः क्रतुः। अध्वर्युक्रतुवाचिनः शब्दा अनपुंसकलिङ्गाः समाहार एव चार्थे समस्यन्ते। द्वन्द्वश्च समासो भवति। अर्काश्वमेधम्। सवातिरात्रम्। अध्वर्युग्रहणं किम्। इषुवज्रौ। उद्भिद्बलभिदौ। क्रतव इति किम्। दर्शपूर्णमासौ। अनपुंसकानीति किम्। वाजपेयराजसूये॥

## अध्ययनतः सन्निकृष्टानि॥ २३॥

अध्ययनेन निमित्तेन ये सन्निकृष्टास्तद्वाचीनि सुबन्तानि समाहार एव चार्थे समस्यन्ते। द्वन्द्वश्च समासो भवति। पदक(क्रमकम्)। क्रमक(चार्चिक ? वार्त्तिक)म्। अध्ययनत इति किम्। पितापु(त्रेण ? त्रौ)। सन्निकृष्टानीति (किम्)। याज्ञिकवैयाकरणौ॥

## अप्राणिनि[1] जातयः॥ ३४॥

अप्राण्याश्रितजातिवाचिनः शब्दाः समाहार एव चार्थे समस्यन्ते। द्वन्द्वश्च समासो भवति। आराशस्त्रम्। धानाशष्कुलि। अप्राणिग्रहणं किम्। ब्राह्मणक्षत्रियविट्शूद्राः। प्राणिसदृशग्रहणाद् द्रव्य(वाचिनां न)। रूपरसगन्धस्पर्शाः। उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनानि। जातय इति किम्। नन्दकपाञ्चजन्यौ। जातिपक्षे च जातिशब्दाः समाहारे समस्यन्ते, न नियतद्रव्यविवक्षायाम्। इमानि बदरामलककाष्ठानि तिष्ठन्ति॥

## नदीदेशनगराणि भिन्नलिङ्गानि॥ ३५॥

नदीवाचीनि देशवाचीनि नगरवाचीनि च सुबन्तानि प्रत्येकं भिन्नलिङ्गानि समाहार एव समस्यन्ते। द्वन्द्वश्च समासो भवति। गङ्गा च शोणश्च गङ्गाशोणम्। (म ? उ)ध्येरावति। कुरवश्च कुरुक्षेत्रं च कुरुकुरुक्षेत्रम्। कुरुकुरुजाङ्गलम्। मधुरा च पाटलिपुत्रं च मधुरापाटलिपुत्रम्। काञ्चीकान्यकुब्जम्। नगरग्रहणेन ग्रामाणामग्रहणादिह न भवति— जाम्बवश्च ग्रामः, जाम्बवश्च शालूकिनी च जाम्बवशालूकिन्यौ। शौर्यं च नगरम्। केतवता च ग्रामः। शौर्यकेतवते। नदीदेशनगराणीति किम्। कुक्कुटमयूर्यौ। देशग्रहणेन जनपदानां ग्रहणं, पृथङ् नदीनगरग्रहणात्। तेनेह न भवति। गौरी च कैलासश्च गौरीकैलासौ। कैलासगन्धमादने। भिन्नलिङ्गानीति किम्। गङ्गायमुने। मद्रकेकयाः। मधुराक्षशिले॥

## नित्यवैराः॥ ३६॥

नित्यं वैरं येषां ते नित्यवैराः। तद्वाचिनः शब्दाः समाहार एव चार्थे समस्यन्ते। द्वन्द्वश्च समासो भवति (मार्जारमूषकम्। श्वशृगालम्। अहिनकुलम्। गोव्याघ्रम्)। नित्यग्रहणं किम्। गौपालिशालङ्कायनाः। 'देवासुरैरमृतमम्बुनिधिर्ममन्थे'॥

---

1. 'णिजा' ख. पाठः.

कारवः ॥ ३७ ॥

कारवस्तक्षादयः। तद्वाचिनः शब्दाः (समाहार एव चार्थे समस्यन्ते। द्वन्द्वश्च समासो भवति)। तक्षायस्कारम्। रजकतन्तुवायम्। कारव इति किम्। चण्डालश्वपचाः। जनङ्गमपुल्कसाः॥

गवाश्वगवाविकगवैडकाजाविकाजैडकानि ॥ ३८ ॥

गवाश्वादयो द्वन्द्वाः समाहार एव चार्थे साधवो भवन्ति। गवाश्वम्। गवाविकम्। गवैडकम्। (अजाविकम्)। अजैडकम्। गवाश्वप्रभृतिषु यथोच्चारितं द्वन्द्ववृत्तम्। तेना(वर्जयति? न्यत्र) शेषविभाषैव भवति। गोश्वौ गोश्वमिति॥

कुब्जवामनकुब्जकिरातपुत्रपौत्रश्वचण्डालस्त्रीकुमारदासीदासदासीमाणवकोष्ट्रखरोष्ट्रशशभागवतीभागवतानि [॥ ३९ ॥

कुब्जवामनादयो द्वन्द्वाः समाहार एव चार्थे साधवो भवन्ति। कुब्जवामनम्। कुब्जाकिरातम्। पुत्रपौत्रम्। श्वचण्डालम्। स्त्रीकुमारम्। दासीदासम्। दासीमाणवकम्। उष्ट्रखरम्। उष्ट्रशशम्। भागवतीभागवतम्॥

शटीप्रच्छदकुटीकुटमूत्रशकृन्मूत्रपुरीषयकृन्मेदोमांसशोणितदर्भशरदर्भपूतीकार्जुनपुरुषतृणोलपानि ॥ ४० ॥

शटीप्रच्छदादयो द्वन्द्वसमासाः समाहार एव चार्थे साधवो भवन्ति। शटीप्रच्छदम्। कुटीकुटम्। मूत्रशकृत्। मूत्रपुरीषम्। यकृन्मेदः। मांसशोणितम्। दर्भशरम्। दर्भपूतीकम्। अर्जुनपुरुषम्। तृणोलपम्॥

प्राणितूर्याङ्गानि ॥ ४१ ॥

प्राण्यङ्गवाचीनि तूर्याङ्गवाचीनि च सुबन्तानि समाहार एव चार्थे समस्यन्ते। द्वन्द्वश्च समासो भवति। पाणिपादम्। शिरोग्रीवम्। मार्द-

---

१. 'शा' ख. ग पाठः.

ङ्गिकपाणविकम् । साञ्चितमौरजिकम् । प्राण्यर्थं वचनम् । शङ्खपटहं पण-वमृदङ्गमित्यादौ तु 'अप्राणिनि जातय' इत्येव सिद्धम् । प्राण्यङ्गानां तु व्यतिकरनिवृत्त्यर्थं वचनम् । तेनेह न भवति । पाणिपणवाविति ॥

सेनाङ्गानि बहुत्वे ॥ ४२ ॥

बहुत्वे वर्तमानानि (सेनाङ्गानि) समाहार एव चार्थे समस्यन्ते। द्वन्द्वश्च समासो भवति । हस्तिनश्चाश्वाश्च हस्त्यश्वम् । रथिकाश्वारोहम्। बहुत्व इति किम् । हस्त्यश्वौ । रथिकाश्वारोहौ ॥

क्षुद्रजन्तवः ॥ ४३ ॥

क्षुद्रजन्तुवाचिनः शब्दा बहुत्वे वर्तमानाः समाहार एव चार्थे सम-स्यन्ते । द्वन्द्वश्च समासो भवति । दंशमशकम् । यूकालिक्षम् । क्षुद्रजन्तव इति किम् । ब्राह्मणक्षत्रियौ ॥

फलानि ॥ ४४ ॥

बदराणि चामलकानि च बदरामलकम् । इङ्गुदोदुम्बरम् । बहुल इत्येव । बदरं चामलकं च बदरामलके । 'अप्राणिनि जातय' इति सिद्धे बहुत्व एव यथा स्यादिति वचनम् ॥

वा वृक्षमृगतृणधान्यशकुनिविशेषाः ॥ ४५ ॥

वृक्षादिविशेषवाचिनः शब्दा बहुत्वे वर्तमानाः समाहार एव चार्थे वा समस्यन्ते । द्वन्द्वश्च समासो भवति । प्लक्षाश्च न्यग्रोधाश्च प्लक्षन्य-ग्रोधं प्लक्षन्यग्रोधाः । धवाश्वाश्वकर्णाश्च धवाश्वकर्णं धवाश्वकर्णाः । रुरु-पृषतं रुरुपृषताः। ऋश्यैणम् ऋश्यैणाः । कुशकाशं कुशकाशाः । मुञ्जवल्कलं मुञ्जवल्कलाः । व्रीहियवं व्रीहियवाः । तिलमाषं तिलमाषाः । हंसचक्रवाकं हंसचक्रवाकाः । तित्तिरिकपिञ्जलं तित्तिरिकपिञ्जलाः । बहुत्व इत्येव। प्लक्षन्यग्रोधौ । 'अप्राणिनि जातय' इत्यनेन कस्मान्न भवति । सैव प्राप्ति-र्बहुत्वे नियम्य विकल्प्यते ॥

व्यञ्जनानि ॥ ४६ ॥

बहुत्व इति निवृत्तं, योगविभागात् । व्यञ्जनविशेषवाचीनि सुब-न्तानि समाहार एव चार्थे वा समस्यन्ते । द्वन्द्वश्च समासो भवति । दधिघृतं दधिघृते। सूपशाकं सूपशाके। 'अप्राणि(नि) जातय' इति नित्यप्राप्तौ विकल्पः॥

विरोधीन्यद्रव्याणि ॥ ४७ ॥

परस्परविरुद्धार्थान्यद्रव्यवाचीनि सुबन्तानि समाहार एव चार्थे वा समस्यन्ते । द्वन्द्वश्च समासो भवति । सुखदुःखं सुखदुःखे । शीतोष्णं शीतोष्णे । पूर्वापरं पूर्वापरे । अधरोत्तरम् अधरोत्तरे । विरोधीनीति किम् । कामक्रोधौ धर्माधर्मौ । अद्रव्याणीति किम् । सुखदुःखाविमौ ग्रामौ । शीतोष्णे उदके । 'पूर्वापरौ तोयनिधी । अधरोत्तरावोष्ठौ । अद्रव्यवचनाः सन्तो ये द्रव्यवचना भवन्ति त इह प्रत्युदाह्रियन्ते । ये तु नित्यं द्रव्यवचनास्तेषामुत्तरसूत्रेण विभाषैव भवति । छायातपौ छायातपम् । रात्रिदिवसं रात्रिदिवसाविति ॥

शेषमुभयोः ॥ ४८ ॥

शेषं सुबन्तमुभयोरितरेतरयोगसमाहारयोश्चार्थयोः समस्यते । द्वन्द्वश्च समासो भवति । अश्वबलीवर्दौ अश्वबलीवर्दम् । गोबलीवर्दौ गोबलीवर्दम् । अश्ववडवौ अश्ववडवम् । तिष्यपुनर्वसू तिष्यपुनर्वसु इति ॥

प्रायेण पूर्वपदार्थप्रधानोऽव्ययीभावः ॥ ४९ ॥

योऽयम् 'अव्ययं विभक्त्यर्थे' इत्यादिनाव्ययीभावसमासो विहितः, स प्रायेण पूर्वपदार्थप्रधानो भवति । अधिस्त्रि । अधिकुमारि । प्रायेणेति किम् । शाकप्रति द्विमुनीत्युत्तरपदार्थप्रधानः । तिष्ठद्गु उन्मत्तगङ्गमित्यन्यपदार्थप्रधानोऽपि भवति ॥

उत्तरपदार्थप्रधानस्तत्पुरुषः ॥ ५० ॥

योऽयं 'द्वितीया श्रितातीतपतिते'त्यादिना तत्पुरुषो विहितः, स प्रायेणोत्तरपदार्थप्रधानो भवति । कष्टश्रितः राजपुरुषः । नीलोत्पलम् । शस्त्रीश्यामेति । प्रायेणेति किम् । गोगर्भिणी पुरुषव्याघ्रः पूर्वकायः निष्कौशाम्बिरिति पूर्वपदार्थप्रधानः । एहीडम् । एहियवम् । पचतभृज्जत । खादतमोदतेत्यन्यपदार्थप्रधानोऽपि भवति ॥

अन्यपदार्थप्रधानो बहुव्रीहिः ॥ ५१ ॥

योऽयं 'शेषो बहुव्रीहिरि'त्यादिना बहुव्रीहिसमास उक्तः, स प्रायेणान्यपदार्थप्रधानो भवति । चित्रगुः । शबलगुः । उच्चैर्मुखः । असि-

क्षीरेति । प्रायेणेति किम् । अदूरदशा अधिकदशा इति पूर्वपदार्थप्रधानः । द्विदशाः त्रिदशा इत्युत्तरपदार्थप्रधानोऽपि भवति ॥

उभयपदार्थप्रधानो द्वन्द्वः ॥ ५२ ॥

योऽयं चार्थे युगपदधिकरणवचनतायां द्वन्द्व उक्तः, स उभयपदार्थप्रधान एव भवति । प्लक्षन्यग्रोधौ । धवखदिरौ । धवखदिरपलाशाः धवखदिरपलाशमिति ॥

कर्मधारये प्रधानोपसर्जनानां परम्परं विप्रतिषेधे [॥ ५३॥

कर्मधारयसमासाधिकारे प्रधानानां प्रधानमुपसर्जनानां तूपसर्जनं विप्रतिषेधे सति यद्यत् परं तत्तद् भवति । विप्रतिषेधश्च तुल्यबलयोरन्यत्र सावकाशयोरेकत्र युगपत्प्रसङ्गे संज्ञायते । 'वृन्दारकनागकुञ्जरादिभिः पूज्यमानमि'त्यस्यावकाशः गोनागः अश्वनागः । 'पोटायुवतिस्तोकादिभिर्जातिरि'त्यस्यावकाशः इभ्ययुवतिः अर्ययुवतिः । इहोभयं प्राप्नोति—नागयुवतिः । परत्वात् पोटायुवतिस्तोकेत्यादि । उपसर्जनानामुपसर्जनम् । 'सन्महत्परमोत्तमोत्कृष्टपुमांसः पूज्यमानैरि'त्यस्यावकाशः सद्भवः महापुरुषः । 'कृत्यतुल्याख्यान्यजात्ये'त्यस्यावकाशः तुल्यश्वेतः तुल्यपद्मः । इहोभयं प्राप्नोति—तुल्यमहान् । परत्वात् 'कृत्यतुल्याख्यान्यजात्ये'त्येतद् भवति । 'विप्रतिषेधे परं कार्यमि'त्यनेनैव सिद्धे वचनं पूर्वविप्रतिषेधोऽस्तीति ज्ञापनार्थम् । तेन काकोलूकमित्यादौ 'नित्यवैरा' इत्यनेन परोऽपि शकुनिविकल्पो बाध्यत इत्याद्युपपन्नं भवति ॥

मत्वर्थीयार्थकर्मधारयाद् बहुव्रीहिः ॥ ५४ ॥

मत्वर्थीयः स्यादित्येवमर्थं यः कर्मधारयस्तं बाधित्वा बहुव्रीहिर्भवति । चित्रा गावोऽस्य सन्ति चित्रगुर्देवदत्तः । चित्रगवीमानिति न भवति । बहवो ब्राह्मणा अस्मिन् देशे सन्ति बहुब्राह्मणको देशः । बहुब्राह्मणवानिति न भवति । लौकिके प्रयोगे गुरुलाघवानादरात् पर्यायेणोभयोः प्रसङ्गे नियमार्थं वचनम् ॥

कदाचित् कर्मधारयः सर्वधनाद्यर्थः ॥ ५५ ॥

सर्वधनाद्यर्थः कदाचित् कर्मधारयो बहुव्रीहिः । किं प्रयोजनम् । सर्वधनीत्यादौ कर्मधारयप्रभृतिभिर्मत्वर्थीयैरन्यपदार्थस्या(वि? भि)धानं यथा स्यात् । कः पुनरसौ कालः । यत्र काश्चिच्छब्दविशेषोऽर्थविशेषो वाभिधित्सितो भवति । शब्दविशेषो यथा — सर्वधनी सर्वबीजी सर्वकेशी कृष्णतालुकी । अर्थविशेषो जात्यादिः । यथा गोखरबदराणाम् । कृष्णसर्पवान् वल्मीकः । नीलोत्पलवत् तटाकम् । महापुरुषवान् पुरुषव्याघ्रवान् ग्राम इति ॥

पूर्वपदातिशय आतिशयिकाद् बहुव्रीहिः सूक्ष्मवस्त्र-[2] तराद्यर्थः ॥ ५६ ॥

यत्रान्यपदार्थप्राधान्ये वाक्ये उत्तरपदार्थस्यातिशयो विवक्ष्यते तत्र पूर्वमातिशयिकः पश्चाद्बहुव्रीहिर्भवति ॥

उत्तरपदातिशय आतिशयिको बहुव्रीहिर्बह्वाढ्यतरा-द्यर्थः ॥ ५७ ॥

बहवोऽतिशयेना(स्या ? ढ्या अ)स्मन् देशे बह्वाढ्यतरः । बहुसुकुमारतर इति ॥

उपसर्जनं पूर्वम् ॥ ५८ ॥

समासशास्त्रे 'प्रथमानिर्दिष्टमुपसर्जनमि'त्युक्तम् । तत् समासे पूर्वं निपतति । अव्ययम् अधिस्त्रि । द्वितीया कष्टश्रितः । तृतीया शङ्कुलाखण्डः । चतुर्थी यूपदारु । पञ्चमी वृकभयम् । षष्ठी राजपुरुषः । सप्तमी अक्षशौण्डः । विशेषणं नीलोत्पलम् । उपपदं कुम्भकारः । प्रथमानिर्दिष्टस्योपसर्जनस्याश्रयणादप्रधान(स्याप्य ? स्य) प्रथमानिर्दिष्टस्य पूर्वनिपातो न भवति । गोगर्भिणी पुरुषव्याघ्रः ॥

राजदन्तलिप्तवासितसिक्तसंमृष्टभृष्टलुञ्चितनग्नमुषितावक्लिन्नपक्वार्पितोतोप्तगाढाधमर्णोत्तमर्णपरश्शतपरस्सहस्रादिषु परम् ॥ ५९ ॥

---

1. 'धान्यावलकः' (?), 2. 'क्ष्मतरा' ख. ग. पाठः.

राजदन्तादिषु समासेषूपसर्जनं परं निपतति । दन्तानां राजा राजदन्तः । षष्ठ्यन्तत्वादुत्तरपदस्योपसर्जनत्वम् । पूर्वं वासितं ततो लिप्तं लिप्तवासितम् । पूर्वकालत्वादुपसर्जनत्वेन पूर्वत्वम् । एवं सिक्तसंमृष्टम् । भृष्टलुञ्चितम् । नग्नमुषितम् । अवक्लिन्नपक्वम् । अर्पितोतम् । उप्तगाढ(म्) इति । अधम ऋणे अधमर्णः । उत्तम ऋणे उत्तमर्णः । शतात् परे परश्शताः । सहस्रात् परे परस्सहस्राः । 'पञ्चमी'त्युपसर्जनत्वम् । आदिग्रहणादन्येऽपि नृवरकुरुश्रेष्ठादयो भवन्ति ॥

बिम्बोष्ठबिम्बाधरपुरुषोत्तमादिषु वा ॥ ६० ॥

बिम्बोष्ठादिषूपसर्जनं वा परं निपतति । ओष्ठबिम्बं बिम्बोष्ठः । अधरबिम्बं बिम्बाधरः । उत्तमपुरुषः पुरुषोत्तमः । आदिग्रहणाद् गृहमध्यं मध्यगृहम् इत्यादयो भवन्ति ॥

इदुद् द्वन्द्वे ॥ ६१ ॥

पूर्वमित्यनुवर्तते । इकारान्तमुकारान्तं च द्वन्द्वे पूर्वं निपतति । अग्नीषोमौ । व्रीहियवौ । स्वादुतिक्तौ । कमण्डलुकृष्णाजिनम् ॥

न स्वातिश्चित्रायाः ॥ ६२ ॥

द्वन्द्वे स्वातिरिदन्ताश्चित्रायाः पूर्वं न निपतति । अनक्षत्रार्थ आरम्भः । चित्रास्वाती माणविके ॥

पतिर्भार्यायाः ॥ ६३ ॥

पतिशब्द इदन्तो भार्यायाः पूर्वं न निपतति । भार्यापती ॥

जायाया जं दं च वा ॥ ६४ ॥

जायाशब्दाद् द्वन्द्वे पतिः पूर्वो न निपतति । जं दमित्येतौ च जायाशब्दस्यादेशौ भवतः । जाया च पतिश्च जायापती । जम्पती । दम्पती ॥

पशुश्च पुत्रात्[1] ॥ ६५ ॥

द्वन्द्वे समासे पुत्रशब्दात् पतिः पशुश्च पूर्वो न निपतति । पुत्रपशू । पुत्रपती ॥

श्मश्रुः केशात् ॥ ६६ ॥

---

१. 'त् । जानु' ख. ग. पाठः

द्वन्द्वे समासे श्मश्रुशब्दः केशात् पूर्वो न निपतति । केशश्मश्रू ॥

जानुविदू शिरसः ॥ ६७ ॥

द्वन्द्वे समासे शिरश्शब्दाद् जानुविदू पूर्वौ न निपततः । शिरोजानु । शिरोविदु ॥

सर्पिर्मधुदीर्घलघुगुणवृद्ध्यादिषु वा ॥ ६८ ॥

सर्पिर्मध्वादिषु द्वन्द्वेषु इदुदन्तं पूर्वं वा निपतति । सर्पिर्मधुनी मधुसर्पिषी । दीर्घलघू लघुदीर्घौ । गुणवृद्धी वृद्धिगुणौ । आदिग्रहणात् चन्द्रराहू राहुचन्द्रावित्यादयो भवन्ति ॥

अजाद्यदन्तम् ॥ ६९ ॥

अजाद्यदन्तं यच्छब्दरूपं तद् द्वन्द्वे समासे पूर्वं निपतति । उष्ट्रखरम् । उष्ट्रशरम् । अश्वखरम् । इन्द्रचन्द्रौ । इदुदन्तावपि परत्वा-(द् बाधित्वे)दमेव भवति । इन्द्राग्नी । इन्द्रवायू । इन्द्राविष्णू ॥

न शूद्रार्यावन्त्यश्मकविष्वक्सेनार्जुनादिषु ॥ ७० ॥

द्वन्द्वेष्वजाद्यदन्तं शूद्रार्यादिषु पूर्वं न निपतति । शूद्रश्चार्यश्च शूद्रार्यौ । अवन्त्यश्मकाः । विष्वक्सेनार्जुनौ । आदिग्रहणाद् विषयेन्द्रियाणि गजाश्वावित्यादयो भवन्ति ॥

धर्मार्थकामार्थशब्दार्थाद्यन्ताग्नीन्द्रचन्द्रार्कादिषु वा ॥७१॥

धर्मार्थादिषु द्वन्द्वेष्वजाद्यदन्तं पूर्वं वा न निपतति । धर्मार्थौ अर्थधर्मौ । कामार्थौ अर्थकामौ । शब्दार्थौ अर्थशब्दौ । आद्यन्तौ अन्तादी । अग्नीन्द्रौ इन्द्राग्नी । चन्द्रार्कौ अर्कचन्द्रौ । आदिग्रहणाद् अश्वत्थकपित्थौ कपित्थाश्वत्थावित्यादयो भवन्ति ॥

अल्पाच्तरम् ॥ ७२ ॥

अल्पाच् पूर्वं निपतति द्वन्द्वसमासे । प्लक्षन्यग्रोधम् । धवाश्वकर्णम् । अस्मादेव निर्देशात् स्वार्थे घः । तेन श्रेयसितरा श्रेयसीतरा 'युधिष्ठिरः श्रेष्ठतमः कुरूणाम्' इत्यादि सिद्धं भवति ॥

---

१. 'रु' ख. ग. पाठः.

नोलूखलमुसलतण्डुलकिण्वचित्ररथबाह्लिकस्नातकरा-जन्नक्षिभ्रुवदारगवोशीरबीजादिषु ॥ ७३ ॥

उलूखलमुसलादिषु द्वन्द्वेष्वल्पाच्तरं पूर्वं न निपतति । उलूखल-मुसलौ । तण्डुलकिण्वम् । चित्ररथबाह्लिकौ । स्नातकराजानौ । अक्षिभ्रुवम् । दारगवम् । उशीरबीजम् । आदिग्रहणादधरोष्ठमित्यादयो भवन्ति ॥

समीरणाग्न्यादित्यचन्द्रपाणिनीयरौढीयादिषु वा ॥७४॥

समीरणाग्न्यादिषु द्वन्द्वेष्वल्पाच्तरं (वा पूर्वं निपतति) । समीरणाग्नी अग्निसमीरणौ । आदित्यचन्द्रौ चन्द्रादित्यौ । पाणिनीयरौढीयाः रौढीयपा-णिनीयाः । आदिग्रहणाद् जित्याविपूयाः विपूयजित्याः इत्यादयो भवन्ति ॥

लघ्वक्षरम् ॥ ७५ ॥

द्वन्द्वे समासे लघ्वक्षरं पूर्वं निपतति । सासीर्यं (?) । तिलमाषम् । 'शैलौ मलयदर्दुरौ' ॥

न श्रद्धातपसादिषु ॥ ७६ ॥

श्रद्धातपसादिषु द्वन्द्वेषु लघ्वक्षरं पूर्वं न निपतति । श्रद्धातपसी । आदिग्रहणाद् दीक्षातपसी मेधातपसी इत्यादयो भवन्ति ॥

शकृन्मूत्रकुशकाशादिषु वा ॥ ७७ ॥

शकृन्मूत्रादिषु द्वन्द्वेषु लघ्वक्षरं वा पूर्वं निपतति । शकृन्मूत्रं मूत्र-शकृत् । कुशकाशं काशकुशम् । आदिग्रहणात् करभरासभौ रासभकरभौ इत्यादयो भवन्ति ॥

अभ्यर्हितम् ॥ ७८ ॥

द्वन्द्वे समासे अभ्यर्हितं पूर्वं निपतति । मातापितरौ । श्रद्धामेधे । कामक्रोधौ । वासुदेवार्जुनौ ॥

न नरनारायणादिषु ॥ ७९ ॥

नरनारायणादिषु द्वन्द्वेष्वभ्यर्हितं पूर्वं न निपतति । नरनारायणौ । आदिग्रहणात् सोमारुद्रौ कुबेरकेशवावित्यादयो भवन्ति ॥

## तपश्श्रुतादिषु वा ॥ ८० ॥

तपःश्रुतादिषु द्वन्द्वेष्वभ्यर्हितं पूर्वं वा निपतति । तपश्श्रुते श्रुततपसी । आदिग्रहणाद् द्रोणभीष्मौ भीष्मद्रोणावित्यादयो भवन्ति ॥

## मासर्तुनक्षत्राण्यानुपूर्व्येण ॥ ८१ ॥

मासवाचीनि ऋतुवाचीनि नक्षत्रवाचीनि च द्वन्द्वे समासे आनुपूर्व्येण निपतन्ति । फाल्गुनचैत्रौ । वैशाखज्येष्ठौ । हेमन्तशिशिरौ । शिशिरवसन्तौ । अश्विनीभरण्यौ । कृत्तिकारोहिण्यौ ॥

## न पुष्यपुनर्वस्वादिषु ॥ ८२ ॥

पुष्यपुनर्वस्वादिषु द्वन्द्वेषु नक्षत्रवाचीन्यानुपूर्व्येण न निपतन्ति । पुष्यपुनर्वसू । तिष्यपुनर्वसू । मघाश्लेषे इति ॥

## वसन्तग्रीष्मादिषु वा ॥ ८३ ॥

वसन्तग्रीष्मादिषु द्वन्द्वेष्वानुपूर्व्येण पूर्वं वा निपतति । वसन्तग्रीष्मौ ग्रीष्मवसन्तौ । आदिग्रहणाच्छुक्रशुचिशुचिशुक्रादयो भवन्ति ॥

## ज्यायान् भ्रातॄणाम् ॥ ८४ ॥

द्वन्द्वे समासे भ्रातॄणां मध्ये यो ज्यायान् स पूर्वं निपतति । युधिष्ठिरार्जुनौ । सङ्कर्षणवासुदेवौ ॥

## न पाण्डुधृतराष्ट्रादिषु ॥ ८५ ॥

पाण्डुधृतराष्ट्रादिषु द्वन्द्वेषु भ्रातॄणां ज्यायान् पूर्वं न निपतति । पाण्डुधृतराष्ट्रौ । विष्णुवासवौ ॥

## भीमसेनार्जुनादिषु वा ॥ ८६ ॥

भीमसेनार्जुनादिषु द्वन्द्वेषु भ्रातॄणां ज्यायान् पूर्वं वा निपतति । भीमसेनार्जुनौ अर्जुनभीमसेनौ । आदिग्रहणाद् देवापिशन्तनू शन्तनुदेवापी इत्यादयो भवन्ति ॥

## वर्णानां च ॥ ८७ ॥

द्वन्द्वे समासे वर्णानां च ज्यायान् वर्णः पूर्वं निपतति । ब्राह्मणक्षत्रियौ । क्षत्रियवैश्यौ । वैश्यशूद्रौ ॥

बहुषूत्क्रमश्च ॥ ८८ ॥

द्वन्द्वे समासे बहुवर्णेषु ज्यायसां क्रमेणोत्क्रमेण च पूर्वनिपातो भवति । ब्राह्मणक्षत्रियवैश्यशूद्राः शूद्रविट्क्षत्रविप्राः ॥

सङ्ख्यानामल्पीयः ॥ ८९ ॥

सङ्ख्यानां द्वन्द्वे यदल्पीयस्तत् पूर्वं निपतति । एकश्च दश च एकादश । एकविंशतिः । 'द्व्येकयोर्द्विवचनैकवचने' 'चतुस्त्रिद्व्येकभागिनः' इत्यादावसङ्ख्यात्वा(द् य)दल्पीयस्तत् पूर्वं निपतति ॥

बहुव्रीहौ च ॥ ९० ॥

बहुव्रीहौ समासे सङ्ख्यानां यदल्पीयस्तत् पूर्वं निपतति । द्वित्राः। त्रिचतुराः । पञ्चषाः । द्विदशाः । त्रिदशाः ॥

सर्वनाम च[2] सर्वतः ॥ ९१ ॥

सर्वबहुव्रीहौ समासे सर्वनाम सङ्ख्या च सर्वस्मात् पूर्वं निपतति। सर्वं श्वेतमस्य सर्वश्वेतः । सर्वकृष्णः । सर्वसारः । सर्वगुरुः । सर्वलघुः । उभयचेतनः । त्रिलोचनः । सप्तभार्यः । चतुर्हस्वः । पञ्चदीर्घः । षडुन्नतः। सप्तरक्त इति । सर्वतोग्रहणाद्विशेषणनिष्ठयोः परोक्तयोरपि पूर्वनिपातो न भवति । सर्वनामसङ्ख्ययोरपि मिथः सम्प्रधारणायां चानुत्कृष्टत्वेन परत्वात् सङ्ख्यायाः पूर्वनिपातो भवति । द्व्यन्यः त्र्यन्यः ॥

विशेषणम् ॥ ९२ ॥

बहुव्रीहौ समासे विशेषणं पूर्वं निपतति । चित्रगुः । शबलगुः ॥

प्रियो वा ॥ ९३ ॥

बहुव्रीहौ समासे विशेषणाप्रियशब्दः पूर्वो वा निपतति । प्रियगुडः। गुडप्रियः ॥

सप्तमी ॥ ९४ ॥

---

१. 'यसः ।', २. 'च । सर्वब' क. पाठः.

बहुव्रीहौ समासे सप्तम्यन्तं पूर्वं निपतति। कण्ठेकालः। उरसिलोमा। मूर्धशिखः। मस्तकशिखः॥

गड्वादिभ्यो वा॥ ९५॥

बहुव्रीहौ समासे सप्तम्यन्तं गड्वादिभ्यः पूर्वं वा निपतति। कण्ठेगडुः गडुकण्ठः। शिरसिगडुः गडुशिराः। मध्येगुरुः गुरुमध्यः। अन्तेगुरुः गुर्वन्तः। व्यवस्थितविभाषया वहेगडुरित्येव भवति॥

नेन्द्वादिभ्यः॥ ९६॥

बहुव्रीहौ समासे सप्तम्यन्तमिन्द्वादिभ्यः पूर्वं न निपतति। इन्दुमौलिः। शशिशेखरः। पद्मनाभः। पद्महस्तः। शङ्खपाणिः। दर्भपवित्रपाणिरिति॥

प्रहरणेभ्यश्च॥ ९७॥

बहुव्रीहौ समासे सप्तम्यन्तं प्रहरणार्थेभ्यश्च पूर्वं न निपतति। शूलपाणिः। शार्ङ्गपाणिः। धनुर्हस्तः। पाशहस्तः। वज्रपाणिः। बहुलाधिकारात् पाणिवज्र इत्यपि भवति॥

क्तान्तं वा॥ ९८॥

बहुव्रीहौ समासे प्रहरणार्थेभ्यः क्तान्तं वा पूर्वं निपतति। अस्युद्यतः उद्यतासिः। प्रहरणकलितः कलितप्रहरणः॥

नित्यं शेषे॥ ९९॥

शेषे बहुव्रीहौ समासे क्तान्तं पूर्वं निपतति। कृतकटः। भिक्षितभिक्षः। ऊढरथोऽनड्वान्। उद्धृतौदना स्थाली॥

आहिताग्निजातपुत्रजातदन्तजातश्मश्रुपीतघृतपीततैलपीतमद्यपीतविषोढभार्यगतार्थच्छिन्नशीर्षादिषु वा॥१००॥

आहिताग्न्यादिषु बहुव्रीहिसमासेषु यत् क्तान्तं तत् पूर्वं वा निपतति। आहिताग्निः अग्न्याहितः। जातपुत्रः पुत्रजातः। जातदन्तः दन्तजातः। जातश्मश्रुः श्मश्रुजातः। पीतघृतः घृतपीतः। पीततैलः तैलपीतः। पीतमद्यः मद्यपीतः। पीतविषः विषपीतः। ऊढभार्यः भार्योढः। गतार्थः अर्थगतः।

छिन्नशीर्षः शीर्षच्छिन्नः । आदिग्रहणात् पीतदधिः दधिपीतः इत्यादयो भवन्ति ॥

जातिकालसुखादिभ्यश्च ॥ १०१ ॥

बहुव्रीहौ समासे जातिवाचिभ्यः कालवाचिभ्यः सुखवाचिभ्यश्च क्तान्तं पूर्वं वा निपतति । .... ... ॥

कडारगडुलकाणखञ्जकुण्ठखोडखलतिगौरपिङ्गलवृद्धभिक्षुकवटरतनवः कर्मधारये ॥ १०२ ॥

सरूपाणामेकशेष एकविभक्तौ ॥ १०३ ॥

स्वरभिन्नानां यस्योत्तरस्वरविधिः ॥ १०४ ॥

विरूपाणामप्येकार्थानाम् ॥ १०५ ॥

पौत्रीदच्छी(?)वद्धंश्यादीनां तन्निमित्त एव चेद्विशेषः ॥ १०६ ॥

स्त्रीपुंवच्च ॥ १०७ ॥

पुमान् स्त्रिया ॥ १०८ ॥

ग्राम्यपशुसङ्घेष्वतरुणानेकशफेषु स्त्री ॥ १०९ ॥

नपुंसकमनपुंसकेनैकवच्चास्य वा ॥ ११० ॥

पितृश्वशुरौ मातृश्वश्रूभ्याम् ॥ १११ ॥

भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ॥ ११२ ॥

सर्वैस्त्यदादीनि ॥ ११३ ॥

तेषामद्वन्द्वतत्पुरुषविशेषणानां पुंनपुंसकतो लिङ्गानि ॥ ११४ ॥

.... .... .... .... .... .... .... .... ....

.... ... पिप्पली च सा चेति अर्धपिप्पल्याविति । ननु च 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरि'ति समासार्थस्य लिङ्गातिदेशात् तद्विशेषणस्यापि सर्वनाम्नस्तल्लिङ्गता भविष्यति । सा हि न्यायप्राप्ता । इयं तु वाचनिकीति तां मा बाधिष्टेति 'अद्वन्द्वतत्पुरुषविशेषणानामि'ति यत्पर्युदासः क्रियते ॥

## तेषां मिथो यत् परम् ॥ ११५ ॥

तेषां त्यदादीनां मिथः परस्परं सहवचने यद्यत् परं तत् तत् शिष्यते । स च यश्च यौ । यश्च एष च एतौ । एष च अयञ्चेमौ । अयं च असौ चामू । यश्च कश्च कौ । स च त्वं च युवाम् । त्वं चाहं चावाम् । स च भवांश्च भवन्तौ इति ॥

## क्वचित् पूर्वञ्च ॥ ११६ ॥

त्यदादीनां मिथः सहवचने यथाभिधानं क्वचित् पूर्वं च शिष्यते । स च यश्च तौ याविति वा । एष चायं च एतौ इमाविति वा । त्वं च भवांश्च युवां भवन्ताविति वा । अहं च भवांश्च आवाम् । क्वचिदिति वचनात् भवन्ताविति न भवति ॥

## पुरुषाणां च ॥ ११७ ॥

पुरुषाणां च युगपद्वचने परः शिष्यते । स च पचति त्वं च पचसि युवां पचथः । देवदत्तश्च पचति (युवां) पचथः यूयं पचथ । त्वं पचसि अहं पचामि आवां पचावः । स च पचति त्वं च पचसि अहं च पचामि वयं पचामः ॥

## अव्ययीभावो नपुंसकम् ॥ ११८ ॥

अव्ययीभावो नपुंसकलिङ्गं भवति । अधिस्त्रि । उपकुम्भम् । द्विमुनि । पञ्चनदम् । सप्तगोदावरम् । उन्मत्तगङ्गम् इति । अन्यपदार्थप्रधानस्यालिङ्गतायामभिधेयलिङ्गतायां प्राप्तायां वचनम् ॥

## द्वन्द्वः समाहार एकवच्च ॥ ११९ ॥

समाहारे यो द्वन्द्वः स नपुंसकमेकवच्चास्य कार्यं भवति । प्रत्यष्ठात् कठकौथुमम् । उदगात् कठकालापम् । धवखदिरपलाशम् । मार्दङ्गिकपाणविकम् । पाणिपादम् । शिरोग्रीवम् । अर्थस्य नपुंसकत्वादेकत्वाच्चानुप्रयोगोऽपि तथैव भवति । तदिदमाराशस्त्रि । तदिदं धानाशष्कुलीति ॥

द्विगुश्च ॥ १२० ॥

समाहारे यो द्विगुः स च नपुंसकमेकवच्च भवति । पञ्चकुमारि । पञ्चमधु । पञ्चगवम् । दशगवम् । समाहार इति किम् । पञ्चभिर्गोणीभिः क्रीतः पञ्चगोणिः ॥

अदन्तः स्त्री ॥ १२१ ॥

अकारान्तः समाहारद्विगुः स्त्रीलिङ्गमेकवच्च भवति । पञ्चानां पूला । समाहारः पञ्चपूली । षण्णगरी । एकापूपी (?) । त्रिलोकी । समाहार इत्येव अष्टाकपालः पुरोडाशः ॥

वाबन्तः ॥ १२२ ॥

आबन्तः समाहारद्विगुर्वा स्त्रीलिङ्गं भवति । पक्षान्तरे तु नपुंसकमेकत्वं च नित्यमेव । पञ्चखट्वी पञ्चखट्वम् ॥

अनो नलोपश्च ॥ १२३ ॥

अन्नन्तस्य द्विगोर्नलोपो वा च स्त्रीत्वं भवति । पञ्चतक्षं पञ्चतक्षी ॥

पात्रपथयुगभुवनाद्यन्तो नपुंसकम् ॥ १२४ ॥

पात्राद्यन्तः समाहारद्विगुरदन्तोऽपि नपुंसकमेकवच्च भवति । पञ्चपात्रम् । (चतुष्पथम् । चतुर्यु)गम् । त्रिभुवनम् । आदिग्रहणात् त्रिविष्टपं (चतु)ष्कण्टकमित्यादयो भवन्ति ॥

षष्ठयाः कन्थोशीनरेषु तत्पुरुषः संज्ञायाम् ॥ १२५ ॥

उशीनरेषु या कन्था तदन्तः षष्ठीतत्पुरुषः संज्ञायां विषये नपुंसकलिङ्गं भवति । सौशमिकन्थम् । आह्वरकन्थम् । उशीनरेष्विति किम् । दाक्षिकन्था । संज्ञायामित्येव । (वीरणकन्था) । परवल्लिङ्गत्वे प्राप्ते वचनम् ॥

उपज्ञोपक्रमं तदादित्वे ॥ १२६ ॥

उपज्ञायत इत्युपज्ञा । उपक्रम्यत इत्युपक्रमः । उपज्ञान्त उपक्रमान्तश्च षष्ठीतत्पुरुषस्तदादित्वेऽभिधित्सिते नपुंसकलिङ्गं भवति । पाणिन्युपज्ञमकालकं व्याकरणम् । चन्द्रोपज्ञमसंज्ञकं व्याकरणम् । (उपज्ञोपक्रममिति किम् ।) वाल्मीकिश्लोकाः । तदादित्व इति किम् । देवदत्तोपज्ञो रथः । यज्ञदत्तोपक्रमो रथः ॥

## ईश्वरार्थादराज्ञः सभा ॥ १२७ ॥

ईश्वरार्थाद् राजवर्जितात् षष्ठ्यन्तात् परा या (सभा तदन्तस्तत्पुरुषो) नपुंसकलिङ्गं भवति । इनसभम् । ईश्वरसभम् । ईश्वरार्थादिति किम् । देवदत्तसभा । अराज्ञ इति किम् । राजसभा । चन्द्रगुप्तसभा । नायमीश्वरपर्यायः, संज्ञाशब्दत्वात् ॥

## यक्षराक्षसपिशाचादिभ्यश्च ॥ १२८ ॥

यक्षादिभ्यः षष्ठ्यन्तेभ्यः परा या सभा तदन्तस्तत्पुरुषो नपुंसकं भवति । यक्षसभम् । राक्षससभम् । पिशाचसभम् । आदिग्रहणाद् गन्धर्वसभं किन्नरसभमित्यादयो भवन्ति ॥

## अशाला ॥ १२९ ॥

अशाला या सभा तदन्तः षष्ठीतत्पुरुषो नपुंसकं भवति । स्त्रीसभम् । दासीसभम् । गोपालसभम् । सङ्घातवचनोऽत्र सभाशब्दः ॥

## सेनासुराशालानिशा वा ॥ १३० ॥

सेनाद्यन्तः षष्ठीतत्पुरुषो वा नपुंसकलिङ्गं भवति । ब्राह्मणसेनं ब्राह्मणसेना । यवसुरं यवसुरा । गोशालं गोशाला । श्वनिशं श्वनिशा, यस्यां मत्ताः श्वानो विहरन्ति ॥

## छाया ॥ १३१ ॥[1]

छायान्तः षष्ठीतत्पुरुषो वा नपुंसकं भवति । कुड्यच्छायम् । कुड्यच्छाया ॥

---

१. 'छाया: ।' ख. ग. पाठः.

## नित्यं बाहुल्ये ॥ १३२ ॥

छायान्तः षष्ठीतत्पुरुषः पूर्वपदार्थबाहुल्ये गम्यमाने नित्यं नपुंसकं भवति । इक्षुच्छायम् । शलभच्छायम् ॥

## पथोऽव्ययात् ॥ १३३ ॥

पथ इति कृतसमासान्तः पथिन्शब्दो गृह्यते । अव्ययात् परो यः पथशब्दस्तदन्तस्तत्पुरुषो नपुंसकं भवति । अपथम् । विपथम् । कापथम् । प्रपथम् । अव्ययादिति किम् । जलपथः स्थलपथः । तत्पुरुष इत्येव । अपथा नदी । उत्पथो देशः ॥

## रात्राह्नवाकाः पुंसि ॥ १३४ ॥

रात्राह्नशब्दौ कृतसमासान्तौ गृह्येते । रात्राद्यन्तस्तत्पुरुषः पुलिङ्गविषयो भवति । त्रिरात्रः । वर्षारात्रः । पूर्वरात्रः । सर्वरात्रः । पूर्वाह्णः । मध्याह्नः । अपराह्णः । सायाह्नः । अत्र परवल्लिङ्गत्वात् स्त्रियां नपुंसके च प्राप्ते वचनम् । अनुवाकः । शंयुवाकः । सूक्तवाकः । 'अकर्तरि च कारके' इति घञ् । ततः स्त्रियां क्तिनादयो बाध(कं? काः) । नपुंसके भावकरणाधिकरणेषु ल्युट् । कर्मादौ बाधकाभावादभिधेयपारतन्त्र्येण लिङ्गत्रयेऽपि स्यादिति वचनम् । यथा — शेषो बहुव्रीहिः । शेषाः पुरुषाः । 'तथेति शेषामिव भर्तुराज्ञाम्' । शेषा विभक्तयः । शेषमन्नम् । शेषाणि वाक्यानि । न च करणाधिकरणयोरपि सर्वत्र नपुंसके ल्युट् । युगं युगानीति ॥

## अहोऽसुदिनपुण्याभ्याम् ॥ १३५ ॥

सुदिनपुण्याभ्यामन्यस्तत्परो योऽहश्शब्दस्तदन्तस्तत्पुरुषः पुंविषयो भवति । द्व्यहः त्र्यहः परमाहः । असुदिनपुण्याभ्यामिति किम् । सुदिनाहं पुण्याहम् ॥

## नपुंसके चार्धर्चाष्टापदसुवर्णशतमानकार्षापणवारवाणगन्धमादनान्धकारापराह्णपूर्वोपवासानिर्यासविमानप्रग्रीवप्रवालवाजपेयराजसूयप्रतिसरादयः ॥ १३६ ॥

अर्धर्चादयः समासाः पुंसि नपुंसके च साधवो भवन्ति । अर्धर्चः अर्धर्चम् । अष्टापदः अष्टापदम् । सुवर्णः सुवर्णम् । शतमानः शतमानम् । कार्षापणः कार्षापणम् । वारवाणः वारवाणम् । गन्धमादनः गन्धमादनम् । अन्धकारः अन्धकारम् । अपराह्णः अपराह्णम् । अपूर्वः अपूर्वम् । उपवासः उपवासम् । निर्यासः निर्यासम् । विमानः विमानम् । प्रग्रीवः प्रग्रीवम् । प्रवालः प्रवालम् । वाजपेयः वाजपेयम् । राजसूयः राजसूयम् । प्रतिसरः प्रतिसरम् । आदिग्रहणात् उद्यानः उद्यानम् । विटङ्कः विटङ्कम् । द्वीपः द्वीपमित्यादयो भवन्ति । समासप्रस्तावादामयादयोऽत्र वक्तव्या न भवन्ति ॥

## परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ॥ १३७ ॥

समाहारद्वन्द्वस्य नपुंसकत्वविधानादिहेतरेतरयोगद्वन्द्वो गृह्यते । तत्पुरुषस्तु पूर्वपदार्थप्रधानः परवल्लिङ्गतां प्रयोजयति । परस्योत्तरपदस्य यल्लिङ्गं तदेव द्वन्द्वस्य तत्पुरुषस्य च भवति । कुक्कुटमयूर्याविमे मयूरीकुक्कुटाविमौ । द्वन्द्वस्योभयपदार्थप्रधानत्वात् पूर्वपरयोर्लिङ्गमनियमेन मा भूदिति वचनम् । समासार्थस्य च परवल्लिङ्गतातिदेशादनुप्रयोगोऽपि तथैव भवति। पूर्वं कायस्य पूर्वका(योऽ)यम् । अर्धं पिप्पल्या अर्धपिप्पलीयमिति॥

## एकविंशत्यादीनां च ॥ १३८ ॥

एकविंशत्यादीनां द्वन्द्वसमासानामुत्तरपदस्येव लिङ्गं भवति । समाहारार्थं वचनम् । एकश्च विंशतिश्च एकविंशतिः । एकनवतिः । द्वानवतिः ॥

## न प्राप्तापन्नगत्यलंपूर्वाणाम् ॥ १३९ ॥

प्राप्तादिपूर्वाणां पूर्वपदार्थप्रधानतत्पुरुषाणां परस्येव लिङ्गं न भवति । प्राप्तो जीविकां प्राप्तजीविकः । आपन्नजीविकः । निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः । अतिक्रान्तः खट्वामतिखट्वः । अवक्रुष्टं कोकिलया अवकोकिलम् । परिग्लानोऽध्ययनाय पर्यध्ययनः । अलं कुमार्यै अलङ्कुमारिः । आतिदेशिकस्य प्रतिषेधादुत्तरपदप्रधानस्य प्रतिषेधो न भवति । प्रगत आचार्यः प्राचार्यः । अशुक्लः शुक्लः कृतः शुक्लीकृतः इति ॥

पूर्ववदश्वबडवौ ॥ १४० ॥

अश्वबडवावित्ययमितरेतरयोगद्वन्द्वः पूर्वपदलिङ्गो भवति । अश्वश्च बडवा चाश्वबडवाविमौ । द्विवचनमतन्त्रम्, इतरेतरयोगोपलक्षणत्वात् । तेनाश्वबडवा अस्य अश्वबडवैः कृतमित्यादिरपि पूर्ववल्लिङ्गो भवति ॥

ह्रस्वो नपुंसके प्रातिपदिकस्य ॥ १४१ ॥

नपुंसके वर्तमानस्य प्रातिपदिकस्याचोऽन्त्यस्य ह्रस्वो भवति । अतिरि अति(र ? लु) । आराशस्त्रि । धानाशष्कुलि । ग्रामणि कुलं खलपुकुलमित्यत्र पदान्तरसम्बन्धाभिव्यङ्ग्यनपुंसकत्वाश्रयस्य ह्रस्वो भवति ....॥

गोरुपसर्जनान्त्यस्य ॥ १४२ ॥

टाबादीनां च ॥ १४३ ॥

.........अतिखट्वः अतिमालः । निष्कौशाम्बिः । निर्वाराणसिः । अवातोरुः अतिब्रह्मबन्धुः । उपसर्जनस्येत्येव । राजकुमारी । परमब्रह्मबन्धूः । स्त्रिया इति वक्तव्ये टाबादीनामिति वचनादिह न भवति — अति[illegible]ी अतिलक्ष्मीः अतिश्रीः सुभ्रूः । अन्त्यस्येति किम् । शालाप्रियः । पञ्चशालाप्रियः । राजकुमारीप्रियः इति । अत्र यद्यपि शालान्तं कुमार्यन्तं च समासप्रातिपदिकमन्यपदार्थापेक्षयो(पसर्जनं, तथा)पि यत्रान्त्यत्वं तत्रोपसर्जनत्वं नास्ति । यत्र तूपसर्जनत्वं तत्रान्त्यत्वं नास्तीति ह्रस्वो (न) भवति । ननु च टाबादीनां प्रत्ययत्वात् 'प्रत्ययग्रहणे यस्मात् स विहितस्तदादेर्ग्रहणमि'तीह न प्राप्नोति अतिरत्नमालः अतिराजकुमारीति । उक्तमेतत् । अनुपसर्जने .... .... .... .... .... ....श्च स्त्रीप्रत्ययान्तमात्रं गृह्यते इति । इह कस्मान्न भवति बहुकुमारीकः बहुवृषलीक इति । 'न कपि' इति प्रतिषेधात् । न चायं कप् समासान्तः । समर्था.... .... .... ...न्तविधावीयसः परस्येत्वं वक्ष्यति ॥

लुक् तद्धितलुक्यगोणीसूच्योः ॥ १४४ ॥

अगोणीसूचीसम्बन्धिनां टाबादीनां तद्धितलुकि सति लुग् भवति । पञ्च इन्द्राण्यो देवता अस्य पञ्चेन्द्रः । पञ्चभिः शष्कुलीभिः क्रीतः पञ्चशष्कुलः । (आमलक्याः) फलम् आमलकम् । बदरम् । सर्वत्राप्राधान्यलक्षणं लौकिकमुपसर्जनत्वम् । तद्धितग्रहणं किम् । गार्गीकुलम् । लुकीति किम् ।

गार्गीत्वम् । उपसर्जनस्येत्येव । अवन्ती । कुन्ती । कुरूः । तद्धितलुकि कृते 'जातौ ङीषूङौ' इत्यनुपसर्जनत्वम् । अगोणीसूच्योरिति किम् । पञ्चभिर्गोणीभिः क्रीतः पञ्चगोणिः । पञ्चसूचिः ॥

लुपि प्रकृतिवल्लिङ्गवचने ॥ १४५ ॥

प्रत्ययस्य लुपि सति तदर्थस्य प्रकृतेरिव लिङ्गवचने भवतः । अभिधेयवल्लिङ्गवचनयोः प्राप्तयोरयमतिदेशः । पञ्चालस्यापत्यानि बहूनि । 'जनपदनाम्नः क्षत्रियादञ्'। तस्य बहुषु लुक् । पञ्चालाः क्षत्रियाः । पुल्लिङ्गा बहुवचनविषयाः । तेषां 'निवासो जनपद' इत्यण् । तस्य 'जनपदे लुप् । (तत्र ?) एवं कुरवः । मत्स्याः । अङ्गाः । वङ्गाः । सुंह्माः । गोदौ नाम ह्रदौ, तयोरदूरभवो ग्रामः गोदः । वरणा नामदूरभवं नगरं वरणाः । लुपीति किम् । 'लवणाल्लुक्' लवणः सूपः । लवणा यवागूः । लवणानि व्यञ्जनानि भवन्ति । लिङ्गवचने इति किम् । शिरीषाणामदूरभवो ग्राम इति चातुरर्थिकस्याणो वरणादित्वात् लुप् । शिरीषाः । तस्य वनं शिरीषवनम् । 'ओषधिवृक्षेभ्यो वे'ति णत्वं न भवति ॥

विशेषणानां चाजातेः ॥ १४६ ॥

लुबर्थस्य यानि विशेषणानि जातिविवर्जितानि तेषां च प्रकृतिवल्लिङ्गवचने भवतः । पञ्चालाः रमणीयाः बह्वन्नाः बहुक्षीराः बहुमाल्यफलाः बहुक्षीरघृता इति । गोदौ रमणीयौ बह्वन्नौ बहुमाल्यफलौ बहुक्षीरघृताविति । अजातेरिति किम् । पञ्चाला जनपदः । गोदौ ग्रामः । ग्रामजनपदयोर्जात्योः स्वकीयमेव लिङ्गं वचनं च भवति । जात्यर्थस्य चायं प्रकृतिवद्भावप्रतिषेधः । तेन जातिद्वारेण यानि विशेषणानि, तेषामपि प्रकृतिवद्भावो न भवति । पञ्चालाः जनपदः रमणीयः बह्वन्नः बहुमाल्यफलः बहुक्षीरघृतः इति ॥

न मनुष्ये ॥ १४७ ॥

मनुष्ये यो लुप् तस्मिन् सति लुबर्थस्य यानि विशेषणानि तेषां

प्रकृतिवल्लिङ्गवचने न भवतः । चञ्चेव वध्रिकेवेति 'इवार्थे प्रतिकृतौ' इति कन् । तस्य 'लुम्मनुष्य' इति लुप् । चञ्चा रमणीयः वध्रिका दर्शनीयः ॥

## समास उत्तरपदस्य ॥ १४८ ॥

प्रत्ययस्य लुपि सति समासे उत्तरपदस्यैव प्रकृतिवल्लिङ्गवचने भवतः, न पूर्वपदस्य । मधुरा च पञ्चालाश्च मधुरापञ्चालाः । मधुरासु-(त्र ?)ह्याः । उत्तरपदस्येति किम् । पञ्चालाश्च मधुरा च पञ्चालमधुरे । पञ्चालानां बहुत्वातिदेशात् समुदायार्थस्य च द्वन्द्वेनाभिधानात् पूर्ववद् बहुवचनं प्राप्तम् । अतो नियमाद् द्विवचनमेव भवति ॥

## हरीतक्यादिषु व्यक्तिः ॥ १४९ ॥

हरीतक्यादिषु तद्धितस्य लुपि सति प्रकृतेरिव व्यक्तिरेव भवति, न वचनम् । व्यक्तिर्लिङ्गमुच्यते । हरीतक्याः फलं हरीतकी हरीतक्यौ हरीतक्यः । एवं कोशातकीद्राक्षादयः । हरीतक्यादयः प्रत्ययलुब्विधौ निर्दिश्यन्ते ॥

## खलतिकादिषु वचनम् ॥ १५० ॥

खलतिकादिषु तद्धितस्य लुपि प्रकृतेरिव वचनमेव भवति, न व्यक्तिः । खलतिका नाम पर्वतः । तस्यादूरभवानि वनानि खलतिकं वनानि । 'वरणादेश्च' इत्यणो लुप् । तत्र खलतिकस्यैकत्वादेकवचनं विधीयते । लिङ्गं पुनर्वचनसम्बन्ध्येव भवति । आदिग्रहणाद् यथादर्शनमन्यत्रापि लुपि कृते वचनमवगन्तव्यम् इति ॥

इति श्रीदण्डनाथनारायणभट्टसमुद्धृतायां सरस्वतीकण्ठाभरणस्य
व्याकरणस्य लघुवृत्तौ तृतीयस्याध्यायस्य
तृतीयः पादः ।

---

## अथ चतुर्थः पादः ।

### स्त्रियाम्[1] ॥ १ ॥

अधिकारोऽयम् । (आपाद) परिसमाप्तेर्यदित ऊर्ध्वमनुक्रमिष्यामः स्त्रियामित्येव तद्वेदितव्यम् । किमिदं स्त्रीति । किं पुनर्लि(ङ्ग ? ङ्गम् ।)बाह्यार्थविशेषेऽपि शब्दोपजनितोऽर्थविशेष उपचयापचयस्थितिरूपः शब्दसंस्कार- .... .... ... भ्यः पुमान् स्त्री नपुंसकमिति लिङ्गम् । तथाह्यर्थाविशेषेऽपि दृष्टं लिङ्गान्यत्वमवयवान्यत्वात् शब्दान्यत्वात् । तद्यथा तटः तटी तटम् । कुटी कुटीरकः कुटीरकम् । पुष्यः तारका नक्षत्रम् । दाराः कलत्रं भार्येति ॥

### अतष्टाप् ॥ २ ॥

प्रातिपदि(काददन्तात् स्त्रि)यां वर्तमानाट्टाप्प्रत्ययो भवति । खट्वा माला शलाका देवदत्तेति । अत इति किम् । दृषत् समित् । तपरकरणं किम् । कीलालपाः ब्राह्मणी । 'ज्यायो दीर्घ' इति सुलोपः स्यात् । पकारः स्वरार्थः । आबिति टाप् डाप् चाप् ॥

### (अजै)डककोकिलाश्वचटकमूषिकेभ्यः ॥ ३ ॥

अजादिभ्यः प्रातिपदिकेभ्यः अदन्तेभ्यः स्त्रियां वर्तमानेभ्यष्टाप्प्रत्ययो भवति । जातिलक्षणस्य ङीषोऽपवादः । अजा । एडका । कोकिला । अश्वा । (चटका । मूषिका) ॥

### बालहोडपाकवत्समन्दविलातेभ्यश्च ॥ ४ ॥

(बालादि)भ्यः प्रातिपदिकेभ्यः स्त्रियां वर्तमानेभ्यष्टाप्प्रत्ययो भवति । वयोलक्षणस्य ङी(षो ? पो)ऽपवादः । बाला । होडा । पाका । वत्सा । मन्दा । विलाता ॥

### पूर्वापहाना[2]परापहाना[3]सम्प्रहानेभ्यो नस्य च णः ॥ ५ ॥

पूर्वापहानादिभ्यः प्रातिपदिकेभ्यः स्त्रियां वर्तमानेभ्यः टाप्प्रत्ययो भवति । नस्य च णत्वं भवति । टिल्लक्षणस्य ङी(षो ? पो)ऽपवादः । पूर्वापहाणा । अपरापहाणा । सम्प्रहाणा ॥

---

१. 'याः' ख. ग. पाठः. २. 'न' ग. पाठः. ३. 'ना' ख. पाठः

सम्भस्त्राजिनशणपिण्डेभ्यः फलात् ॥ ६ ॥

सम्प्रभृतिभ्यः परो यः फलशब्दस्तदन्तात् (प्रातिपदिकात् स्त्रियां वर्तमानात् टाप्प्रत्ययो भवति फलोत्तरपद)लक्षणस्य ङीषोऽपवादः। सम्फला। भस्त्रफला। अजिनफला। शणफला। पिण्डफला। ओषधिजातिविशेषाणां संज्ञा एताः ॥

त्रेश्च ॥ ७ ॥

त्रेश्च परो यः फलशब्दस्तदन्तात् प्रातिपदिकात् स्त्रियां (वर्तमानात् टाप्प्रत्ययो भवति)। ... ... .... ...

.... .... माहृतानि त्रिफला ॥

सत्प्राक्काण्डप्रान्तशतैकेभ्यः पुष्पात् ॥ ८ ॥

सदादिभ्यः परो यः पुष्पशब्दस्तदन्तात् प्रातिपदिकात् स्त्रियां वर्तमानात् टाप्प्रत्ययो भवति। पुष्पोत्तरपदलक्षणस्य ङीषोऽपवादः। सत्(पुष्पा। प्राक्पुष्पा। काण्डपुष्पा। प्रान्तपुष्पा। शतपुष्पा। एकपुष्पा) ॥

मूलान्नञः ॥ ९ ॥

नञः परो यो मूलशब्दस्तदन्तात् प्रातिपदिकात् स्त्रियां वर्तमानात् टाप्प्रत्ययो भवति। मूलोत्तरपदलक्षणस्य ङीषोऽपवादः अमूला ॥

शूद्राच्चामहत्पूर्वाज्जातिः ॥ १० ॥

(शूद्र इत्यस्मात् प्रातिपदिकादमहत्पूर्वात्) स्त्रियां वर्तमानात् टाप्प्रत्ययो भवति। शूद्रा) .... ... ... ...

... ... .... ....

(जातिरिति किम्।) शूद्रस्य भार्या शूद्री। पुंयोगे ङीबेव भवति। अमहत्पूर्वादिति किम्। महाशूद्री आभीरजातिः। जातिलक्षणो ङीषेव भवति। ननु च शूद्रादित्युच्यते। तत्र कः प्रत्ययो गोमहाशूद्रा स्यात् (?) ग्रहणवता .... .... .... .... .... ....

.... .... .... .... .... .... ....

... .... ... .... .... .... ....

(तेन अतिधीवरी अतिपीव)री । अतिभवती अतिमह(ती)त्यादि सिद्धं भवति । इहापि 'षिद्गौरादिभ्यश्च' इति ङीषं बाधित्वा टाप् प्राप्नोति पञ्चाजी दशाजीति । नैवम् । अ(ज ?जैड)केत्यादौ सूत्रे अजादिति स्त्रियां विशेषयिष्यामः । अज्ञ .... .... ... ....

... ... ... ... ...

... ... .... ... ...

... ... ... ... ...

कन्यकनिष्ठज्येष्ठमध्यमध्यममुग्धेभ्यः ॥ ११ ॥

कन्यादिभ्यः स्त्रियां वर्तमानेभ्यष्टाप्प्रत्ययो भवति । अजरमनयोलक्षणस्य ङी(षो ? पो)ऽपवादः । कन्या । कनिष्ठा । ज्येष्ठा । मध्या । मध्यमा । मुग्धा । यदा त्ववयोवचनाः कनिष्ठादयस्तदा अत.... .... ॥

कुङ्देविविड्भ्याम् ॥ १२ ॥

... ... ... ... ... ...

... ... ... ... (देविविशा) ॥

उष्णिहो वा ॥ १३ ॥

उष्णिहः स्त्रीविषयाट्टाप्प्रत्ययो (वा) भवति । उष्णिक् उष्णिहा ॥

ऋचि पादः ॥ १४ ॥

पादिति कृतसमासान्तः पादशब्दो गृह्यते । तदन्तात् प्रातिपदिकात् स्त्रियां वर्तमानाट्टाप्प्रत्ययो भवति । .... .... .... ....

... ... ... (ऋचीति किम् ) । चतुष्पदी ॥

ऋनो ङीप् ॥ १५ ॥

ऋकारान्तान्नकारान्ताच्च प्रातिपदिकात् स्त्रियां वर्तमानात् ङीप्प्रत्ययो भवति । कर्त्री । हन्त्री । दण्डिनी । छत्रिणी । ङकारः सामान्यग्रहणार्थः ॥

अधातोरुगितः ॥ १६ ॥

धातुवर्जितो य उगित् ... .... .... ....ती भवति । प(च्रती ? चन्ती) । दी(व्य(ती ? न्ती) । दण्डमती । अर्वती । विदुषी । श्रेयसी इति । अधातोरिति किम् । उखास्रत् । पर्णध्वत् । ब्राह्मणीति ॥

अञ्चः ॥ १७ ॥

अञ्चेर्धातोरुगितः प्रातिपदिकात् स्त्रियां ङीब् भवति । प्राची प्रतीची ॥

अहशो वनो र च ॥ १८ ॥

... ... ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ... ...
.... ो ङीब् भवति । तत्सन्नियोगेन च रेफान्तादेशः । रेफार्थं वचनम् । ङीप् तु नान्तत्वादेव भवति । धीवरी पीवरी परलोकदृश्वरी । राजकृत्वरी । अहश इति किम् । सहयुध्वा ब्राह्मणी । विहितविशेषणं किम् । श्रया .... .... ... .... .... .... ॥

बहुव्रीहेर्वा ॥ १९ ॥

.... .... .... यो वन् तदन्ताद् बहुव्रीहेः स्त्रियां वा ङीब् भवति । रेफश्चान्तादेशः । बहुधीवरी बहुधीवा । बहुपीवरी बहुपीवा। अहश इति किम् । प्रियसहयुध्वा ब्राह्मणी ॥

पादः ॥ २० ॥

पाच्छब्दान्ताद् बहुव्रीहेः स्त्रियां (ङीब् वा भवति । द्विपात् द्विपदी । त्रिपात् त्रिपदी । चतुष्पात् चतुष्पदी ।) .... .... .... ....
... ... ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ...

अनः ॥ २१ ॥

... ... ... ... ... ... .... ... ...

सूतिहेः (?) स्त्रियां ङीप्प्रत्ययो भवति । उपधालोपे बहुव्रीहिरिहोदाहरणम् । अनुपधालोपिनो हि प्रतिषेधं वक्ष्यति । बहुराज्ञी । बहुराजा । दीर्घाह्नी दीर्घाहा शरत् । बहुव्रीहेरित्येव । अतिक्रा .... ....
... ... ... ... .. .... ... ... ...

नित्यं संज्ञायाम् । २२ ॥

.......वर्तमानात् संज्ञायां विषये नित्यं ङीप्प्रत्ययो भवति । अ(सि ? ति)राज्ञी नाम ग्रामः । बहुराज्ञी पूः ॥

ऊधसो नश्च ॥ २३ ॥

ऊधश्शब्दान्तात् बहुव्रीहेः स्त्रियां नित्यं ङीप्प्रत्ययो भवति। नकारश्चान्तादेशः। कुण्डोध्नी घटोध्नी। द्यू ... ... ... ... ... ... ... ... ... तत्रं वक्ष्यति। बहुव्रीहेरित्येव। प्राप्तोधाः॥

दाम्नः संख्यादेः॥ २४॥

हायनाद् वयसि॥ २५॥

(संख्यादेः) हायनशब्दाद् बहुव्रीहेः स्त्रियां वयसि गम्यमाने ङीप्प्रत्ययो भवति। द्विहायनी। त्रिहायणी। चतुर्हायणी। 'त्रिचतुर्भ्यां वयसि हायनस्ये'ति णत्वम्। वयसीति किम्। (द्विहायना शाला। त्रिहायना।)... .... .... .... .... .... ... .... .... ... ... ... ... ... ... ... नां शरीरावस्था वय इति णत्वमपि न भवति। संख्यादेरिति किम्। अतीतहायना॥

नानुपधालोपिनः॥ २६॥

अन्नन्ताद् बहुव्रीहे(रु? रनु)पधालोपिनः स्त्रियां ङीप् न भवति। सुपर्वा सुपर्वाणौ सुपर्वाणः। सुशर्मा सुशर्माणौ सुशर्माणः। 'न संयोगाद्वमन्तादि'त्युपधालोपप्रतिषेधः। अन इत्येव। बहुमत्स्या। बहुव्रीहेरित्येव। अतिपर्वणा यष्टिः। अनुपधालोपिन इति किम्। बहुराज्ञी॥

मनः॥ २७॥

मन्नन्तात् प्रातिपदिकात् स्त्रियां ङीप्प्रत्ययो न भवति। सीमा सीमानौ सीमानः। पामा पामानौ पामानः। 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति'। तेन महिमानमतिक्रान्ता अतिमहिमेत्यादावपि ङीप्प्रतिषेधो भवति। बहुव्रीहेरिति चात्र न सम्बध्यते। योगविभागात्। अन्यथा नानुपधालोपिन इत्येव ब्रूयात्॥

डाप् चोभाभ्याम्॥ २८॥

मन्नन्तात् प्रातिपदिकाद् अन्नन्ताच्च बहुव्रीहेः स्त्रियां वर्तमानाड्डाप् च ङीप्प्रतिषेधश्च भवति। सीमा सीमे सीमाः। सीमा सीमानौ सीमानः। सुपर्वा

---

१. 'ना' ख. ग. पाठः.

सुपर्वे सुपर्वाः। सुपर्वा सुपर्वाणौ सुपर्वाणः। उपधालोपिनस्तु डाप्प्रतिषेधाभ्यां चैकशब्ब्यं भवति ॥

न स्वसृदुहितृननान्दृयातृमातृतिसृचतसृपञ्चन्नादि-
[भ्यः ॥ २९ ॥

स्वस्रादिभ्यः ऋनो ङीब्नलोपौ न भव(ति ? तः) । स्वसा । दुहिता । ननान्दा । याता । माता । तिस्रः । चतस्रः । पञ्च । ब्राह्मण्यः । आदिग्रहणात् स(प्तोत्वा ? प्तत्या)दावपि भवति ॥

अनुपसर्जनादतः ॥ ३० ॥

अधिकारोऽयम् । यदित ऊर्ध्वमनुक्रमिष्यामः अनुपसर्जनादकारान्तादित्येव तद्वेदितव्यम् । वक्ष्यति टिड्ढाणञिति । कुरुचरी मद्रचरी। अनुपसर्जनादिति किम् । 'वयस्यचरम' इति वक्ष्यति । इहैव यथा स्यात् कुमारी किशोरी । इह मा भूत् शिशुरजेति । (अत इति किम् ।) जातेर्ङी(प ? ष्) इहैव यथा स्यात् कुक्कुटी मयूरी । इह मा भूत् तित्तिरिः कृकवाकुः इति ॥

टिड्ढाणञ्ठक्ठञ्नञ्स्नञ्कञ्क्वरप्ख्युनः ॥ ३१ ॥

टिड्ढाद्यन्तात् प्रातिपदिकादनुपसर्जना(दित्यादिना ?)दकारान्तात् स्त्रियां ङीप्प्रत्ययो भवति । टापोऽपवादः । कुरुचरी सक्तुधानी । (साम गायतीति सामगी ।) सुरापी । नदी । जानुदघ्नी । ऊरुद्वयसी । ऊरुमात्री । पञ्चतयी । शाक्तीकी । स्तनन्धयी शुक्तिन्धयीत्यादौ तु धातोष्टित्करणस्यानन्यार्थत्वात् अटिदन्तेऽपि भवति । ढ इति ढक्ढञोर्ग्रहणम् । 'शिलाया ढ(ञ्च ? श्च)'त्ययं निरनुबन्धः स्त्रियां न वर्तते । सौपर्णेयी । वैनतेयी । शाबलेयी मार्ष्टेयी । अण् । कुम्भकारी । गोसन्दायी। औपगवी माथुरी । अञ् औत्सी औदपानी । ठक् आक्षिकी । ठञ् प्रास्थिकी । लावणिकी । नञ् स्त्रैणी । स्नञ् पौंस्नी । कञ् तादृशी । क्वरप् इत्वरी । ख्युन् आढ्यंकरणी ॥

न लस्थान्यागमटितः ॥ ३२ ॥

लेन स्थानिना आगमेन च यष्टित् तदन्तात् स्त्रियां ङीप् न भवति। पचमाना। चक्षमाणा। पठिता पठितव्या ॥

यञोऽषावटात् ॥ ३३ ॥

यञन्तात् प्रातिपदिकात् स्त्रियां ङीप्प्रत्ययो भवति। न चेत् षकारान्तादवटशब्दाच्च परो यञ् भवति। टापोऽपवादः। गार्गी मात्सी। अषावटादिति किम्। शार्कराक्ष्या। पौतिमाष्या। गौकक्ष्या। आवट्या ॥

सर्वतः (षो ? ष्फो) वा ॥ ३४ ॥

सर्वस्माद् यञन्तात् स्त्रियां (नित्यं ष ? वा ष्फ)प्रत्ययो भवति। गार्गी गार्ग्यायणी। वात्सी वात्स्यायनी। सर्वग्रहणं षावटार्थम्। शार्कराक्ष्यायणी। पौतिमाष्यायणी। आवट्यायनी। षकारो ङीषर्थः ॥

लोहितादिभ्यः शकलान्तेभ्यो नित्यम् ॥ ३५ ॥

लोहितादयो (गर्गादियञ्वि)धौ वक्ष्यन्ते। तेभ्यः शकलपर्यन्तेभ्यो यञन्तेभ्यः स्त्रियां नित्यं ष्फप्रत्ययो भवति। लौहित्यायनी। कात्यायनी। सांशित्यायिनी। शाकल्यायनी ॥

कौरव्यासुरिमाण्डूकेभ्यो डित् ॥ ३६ ॥

कौरव्यादिभ्यः स्त्रियां नित्यं ष्फप्रत्ययः स च डिद् भवति। कौरव्यायणी। आसुरायणी। माण्डूकायनी ॥

वयस्यचरमे ॥ ३७ ॥

प्राणिनां कालकृता शरीरावस्था बाल्ययौवनादिवयः। तस्मिन् अपश्चिमे वर्तमानात् प्रातिपदिकात् स्त्रियां ङीप्प्रत्ययो भवति। कुमारी किशोरी। कर्बरी कलभी। तरुणी। तलुनी। वधूटी। चिरण्टी। अचरम इति किम्। स्थविरा वृद्धा। अत इत्येव। शिशुः। कथं द्विवर्षा उत्तानशया लोहितपादिकेति। नैता वयश्श्रुतयः। अर्थादत्र वयो गम्यते ॥

कुमारादनूढायां च ॥ ३८ ॥

कुमारशब्दादनूढायां च वर्तमानात् ङीप्प्रत्ययो भवति। (वृद्धा) कुमारी वृद्धकुमारी ॥

द्विगोः ॥ ३९ ॥

द्विगुसंज्ञकात् प्रातिपदिकात् स्त्रियां ङीप्प्रत्ययो भवति । पञ्चपूली दशपूली ॥

परिमाणात् तद्धितलुक्यसङ्ख्याकालबिस्ताचितकम्बल्यात् ॥ ४० ॥

संख्याकालबिस्ताचितकम्बल्येभ्यो यद्यन्यत् परिमाणं तदन्तादेव द्विगोस्तद्धितलुकि ङीप् भवति । द्विगुडवी । त्रिगुडवी । परिमाणादिति किम् । पञ्चाश्वाः । दशाश्वाः । लुकीति किम् । द्विपण्या । असंख्याकालबिस्ताचितकम्बल्यादिति किम् । द्विशता । द्विवर्षा । द्विबिस्ता । द्व्याचिता । द्विकम्बल्या । संख्याकालयोरपि परिच्छेदकत्वात् परिमाणत्वम् ॥

काण्डादक्षेत्रे ॥ ४१ ॥

काण्डं प्रमाणपरिमाणमपरिमाणम् । तदन्ताद् द्विगोस्तद्धितलुकि सति अक्षेत्र एव स्त्रियां ङीब् भवति । द्विकाण्डी रज्जुः । अक्षेत्र इति किम् । द्विकाण्डा क्षेत्रभक्तिः । प्रमाणादित्येव । द्वाभ्यां काण्डाभ्यां क्रीतां द्विकाण्डा शाटी ॥

पुरुषाद्वा ॥ ४२ ॥

पुरुषशब्दो यः प्रमाणपरिमाणं तदन्ताद् द्विगोस्तद्धितलुकि वा ङीब् भवति । द्विपुरुषी परिखा द्विपुरुषा परिखा । प्रमाणे विहितस्य मात्रटो लुक् । परिमाणादित्येव । द्वाभ्यां पुरुषाभ्यां क्रीता द्विपुरुषा ॥

केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजेभ्यः संज्ञायाम् ॥ ४३ ॥

केवलादिभ्यः प्रातिपदिकेभ्यः संज्ञायां विषये स्त्रियां ङीप्रत्ययो भवति । केवली । मामकी । भागधेयी । पापी । अपरी । समानी । आर्यकृती । सुमङ्गली । भेषजी । संज्ञायामिति किम् । केवला । मामिका । मामकशब्दात् ठगन्तत्वेनैव ङीप् सिद्धः संज्ञायां नियम्यते ॥

## नुक् चान्तर्वतो गर्भिण्याम् ॥ ४४ ॥

अन्तर्वतः शब्दाद् गर्भिण्यां विषये स्त्रियां ङीप्प्रत्ययो नुगागमश्च भवति । अन्तर्वत्नी गर्भिणी । अत एव निपातनान्मतुप् । गर्भिण्यामिति किम् । अन्तरस्याः शालाया अस्ति ॥

## पतिवतो भार्यायाम् ॥ ४५ ॥

पतिवच्छब्दाद् भार्यायां ङीप्प्रत्ययो नुगागमश्च भवति । पतिवत्नी भार्या । अनयोर्वत्त्वं निपातनात् । भार्यायामिति किम् । पतिमती पृथ्वी ॥

## पत्युर्न ऊढायाम् ॥ ४६ ॥

पतिशब्दस्य स्त्रियां भार्यायामूढायां नकारोऽन्तादेशो ङीप् च भवति । यजमानस्य पत्नी । ऊढायामिति किम् । सङ्गृहीतायां मा भूत् । भार्यायामिति किम् । स्कन्धेनोढायां मा भूत् ॥

## सपूर्वस्य वा ॥ ४७ ॥

सपूर्वस्य पतिशब्दस्यानुपसर्जनस्य स्त्रियां नकारोऽन्तादेशो ङीप् च वा भवति । आशापत्नी आशापतिः । सपूर्वस्येति किम् । पतिरियं ग्रामस्य । अनुपसर्जनादित्येव । अतिक्रान्ता पतिमतिपतिः ॥

## बहुव्रीहौ ॥ ४८ ॥

सपूर्वस्य पत्युर्बहुव्रीहौ स्त्रियां नकारोऽन्तादेशो ङीप् च वा भवति । उपसर्जनार्थ आरम्भः । स्थूलपतिः स्थूलपत्नी । दृढपतिः दृढपत्नी । बहुस्थूलपतिरित्यादौ तु स्थूलपतिशब्दस्य बहुव्रीहिः । न पतिशब्दस्यैवेति न भवति ॥

## समानैकवीरपिण्डभ्रातृपुत्रेभ्यः ॥ ४९ ॥

समानादिभ्यः परो यः पतिशब्दस्तस्य स्त्रियां नकारोऽन्तादेशो ङीप् च भवति । नित्यं, पुनर्विधानात् । सपत्नी । एकपत्नी । वीरपत्नी । पिण्डपत्नी । भ्रातृपत्नी । पुत्रपत्नी ॥

श्येतैतहरितरोहिताद्वा तश्च नः ॥ ५० ॥

श्येतादिभ्यः स्त्रियां ङीष्प्रत्ययो (वा) भवति तत्सन्नियोगेन च तकारस्य नकारः । श्येनी श्येता । एनी एता । हरिणी हरिता । रोहिणी रोहिता । लत्वेन लोहिनी लोहिता ॥

क्नोऽसितपलिताभ्याम् ॥ ५१ ॥

असितपलितशब्दाभ्यां ङीष्प्रत्ययो भवति । तत्सन्नियोगेन च तकारस्य क्नादेशः । असिक्नी असिता । पलिक्नी पलिता ॥

षितो ङीष् ॥ ५२ ॥

षित्प्रत्ययान्तात् प्रातिपदिकात् स्त्रियां ङीष्प्रत्ययो भवति । नर्तकी । धात्री । जल्पाकी । गार्ग्यायणी । आकर्षकी सामग्री । ङकारः सामान्यग्रहणार्थः । षकारस्तदभिघातार्थः ॥

गौरशबलकल्माषसारङ्गपिशङ्गहरिणपाण्डरामरसुन्दरविकलनिष्कलपुष्कलेभ्यः ॥ ५३ ॥

गौरादिभ्यः स्त्रियां ङीष्प्रत्ययो भवति । गुणवचनत्वेनाजातिवाचित्वादप्राप्ते वचनम् । गौरी । शबली । कल्माषी । सारङ्गी । (पिशङ्गी) हरिणी । पाण्डरी । अमरी । सुन्दरी । विकली । निष्कली । पुष्कली । कथं विकलाः । कालविशेषवाचिनो नित्यं स्त्रीविषयत्वाट्टाबेव भवति ॥

बृहन्महत्सरश्चौरतापसदासचेटविटभिक्षुकबन्धकपुत्रगायत्रेभ्यः ॥ ५४ ॥

बृहत्प्रभृतिभ्यः स्त्रियां ङीष्प्रत्ययो भवति । बृहन्महतोरुगिल्लक्षणे ङीपि प्राप्ते सरसो हलन्तत्वाट्टाप्यप्राप्ते शेषेभ्यस्तु (अ)जातिवाचित्वाट्टापि प्राप्ते .... .... .... ... .... ....
.... .... .... .... .... .... ....
.... .... .... .... .... ... ....
.... .... .... .... .... ... ....

१, 'रु' ख, ग, पाठः,

मत्स्यमनुष्यमुकयहयगवयर्श्यद्रुणोकणक्रोष्टुतक्षश्वानडुद्भ्यः ॥ ५५ ॥

... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ...

श्वन्तक्षभ्यां नान्तत्वात् ङीपि क्रोष्टृवनडुद्भ्यां तत्काप्यप्राप्ते(?) वचनम् । मत्स्यी । मनुष्यी । मुकयी । हयी । गवयी । ऋश्यी । द्रुणी । उकणी । क्रोष्ट्री । 'स्त्रियामि'ति 'क्लुशस्तुनस्तुट् च' । तक्षी । शुनी । अनडुही । आमः स्त्रियां वा विधानादनड्वाही ॥

भौरिकिभौलिकिभौलिङ्ग्यौद्राहमानालम्ब्यालब्ध्यालक्षिसौधर्मायस्स्थूणारट्टगौतमापच्चिकेभ्यः ॥ ५६ ॥

भौरिक्यादिभ्यः स्त्रियां ङीष्प्रत्ययो भवति । भौरिकिभौलिक्योः क्रौड्यादित्वाद् भौलिङ्ग्यादीनां गुरूपोत्तमत्वात् 'अणिञोरि'ति ष्यङि प्राप्ते, गौतमस्य शार्ङ्गरवादित्वात् आपच्चिकस्य त्वञन्तत्वात् ङीनि प्राप्ते वचनम् । भौरिकी भौलिकी । क्रौड्यादिपाठात् ष्यङपि भवति । भौरिक्या । भौलिक्या । भौलिङ्गी । औद्राहमानी । आलम्बी । आलब्धी । आलक्षी । सौधर्मी । आयःस्थूणी । आरट्टी । गौतमी । शार्ङ्गरवादित्वात् ङीनपि भवति । स्वरे विशेषः । आपच्चिको नाम जनपदसमाननामा क्षत्रियः । तस्यापत्यं स्त्री । अञ् । तस्य स्त्रियां लुक् । तत्र प्रत्ययलक्षणेन ङीप् प्राप्नोति । आपच्चिकी ॥

दोटनाटनटपाटसूपाटमूलाटपेटपटपटलपुटकुटपाण्टसेभ्यः ॥ ५७ ॥

दोटादिभ्यः स्त्रियां ङीष्प्रत्ययो भवति । दोटशब्दादापच्चिकवत् ङीनि प्राप्ते नटादजातिवचनत्वादन्येभ्यः स्त्रीविषयत्वाट्टापि प्राप्ते वचनम् । दोटी । नाटी । नटी । पाटी । (सूपाटी ।) मूलाटी । पेटी । पटी । पटली । पुटी । कुटी । पाण्टसी ॥

---

१. 'मापक्वेभ्यः', २. 'ढवाढना' ख. ग. पाठः. ३. 'फा' क. पाठः.

धातककेतकतर्कारिशर्कारिबदरकुवललवलामलक-
मालतवेतसातसाढकेभ्यः ॥ ५८ ॥

धातकादिभ्यः स्त्रियां ङीष्प्रत्ययो भवति । जातित्वेऽपि स्त्रीविषय-त्वादप्राप्ते वचनम् । धातकी । केतकी । तर्कारी । शर्कारी । बदरी । कुवली । लवली । आमलकी । मालती । वेतसी । अतसी । आढकी ॥

कदरकदलगलूचवाकुचनाचमाचकुम्भकुसुम्भयूथ-
मेथकरीरसल्लकवल्लकेभ्यः ॥ ५९ ॥

कदरादिभ्यः स्त्रियां ङीष्प्रत्ययो भवति । जातित्वेऽपि स्त्रीविषयत्वा-दप्राप्ते वचनम् । कदरी । कदली । गलूची । वाकुची । नाची । माची । कुम्भी । कुसुम्भी । यूथी । मेथी । करीरी । सल्लकी । वल्लकी ॥

पिप्पलहरीतककोशातकशमतमसुषवश्रृङ्गभृङ्गबिम्ब-
बर्बरशष्कुण्डपिण्डमण्डलेभ्यः ॥ ६० ॥

पिप्पलादिभ्यः स्त्रियां ङीष्प्रत्ययो भवति । जातित्वेऽपि स्त्रीविषय-त्वादप्राप्ते वचनम् । पिप्पली । हरीतकी । कोशातकी । शमी । तमी । सुषवी । श्रृङ्गी । भृङ्गी । बिम्बी । बर्बरी । शष्कुण्डी । पिण्डी । मण्डली ॥

यूपसूपशूर्पसूर्ममहमठपिठरोर्दगूर्दपृ(श्वा ? थु)खार-
काकणेभ्यः ॥ ६१ ॥

यूपादिभ्यः स्त्रियां ङीष्प्रत्ययो भवति । जातित्वेऽपि स्त्रीविषयत्वा-दप्राप्ते वचनम् । यूपी । सूपी । शूर्पी । सूर्मी । मही । मठी । पिठरी । उर्दी । गूर्दी । पृथ्वी । खारी । काकणी ॥

द्रोणबृसासन्दालिन्दकन्दलदेहलशष्कुलशचसूच-
मञ्जरालजवैजयन्तेभ्यः ॥ ६२ ॥

द्रोणादिभ्यः स्त्रियां ङीष्प्रत्ययो भवति । जातित्वेऽपि स्त्रीविषयत्वा-दप्राप्ते वचनम् । द्रोणी । बृसी । आसन्दी । आलिन्दी । कन्दली । देहली । शष्कुली । शची । सूची । मञ्जरी । आलजी । वैजयन्ती ॥

१, २, ३, ४. 'का' क. पाठः. ५. 'णद्रोणवृसास' ख. ग. पाठः. ६' 'ली ॥ द्रोण' ख. पाठः.

काकादनगवादनतेजनरजनदोहनशातनपातनसेचन-कार्दनपाटनपेषणास्तरणास्थानाधिकरणप्रत्यवरोहणाग्रहायणेभ्यः ॥ ६३ ॥

काकादनादिभ्यः स्त्रियां ङीष्प्रत्ययो भवति । काकादनादीनां (ल्यु)डन्तत्वात् टिल्लक्षणे, आग्रहायणस्याणन्तत्वलक्षणे ङीपि प्राप्ते वचनम् । काकादनी । गवादनी । तेजनी । रजनी । दोहनी । शातनी । पातनी । सेचनी । कार्दनी । पाटनी । पेषणी । आस्तरणी । आस्थानी । अधिकरणी । प्रत्यवरोहणी । अग्रे हायनोऽस्या आग्रहायणी । स्वार्थिकोऽण् । निपातनाण्णत्वम् ॥

एषणात् करणे ॥ ६४ ॥

एषणशब्दात् स्त्रियां करणे वर्तमानात् ङीष्प्रत्ययो भवति । इष्यतेऽवगम्यतेऽनयेत्येषणी नाराची । इष्यतेऽस्यामित्यधिकरणे टिल्लक्षणो ङीबेव भवति । स्वरे विशेषः । यदा तु 'इषोऽनिच्छायामि'ति युच्, तदा स्त्री । इष्यतेऽनया देश इति एषणी वैद्यशलाका । करण इति किम् । अन्वेषणा अध्येषणेति टाबेव भवति ॥

सुमङ्गलात् संज्ञायाम् ॥ ६५ ॥

सुमङ्गलशब्दात् संज्ञायां ङीष्प्रत्ययो भवति । सुमङ्गली । 'केवलमामके'त्यादिना ङीबपि भवति । सुमङ्गली । संज्ञायामिति किम् । सुमङ्गला । स्वरे विशेषः ॥

पीनाच्च ॥ ६६ ॥

पीनाच्च संज्ञायां ङीष्प्रत्ययो भवति । पीनी । हस्तिनां स्नेहपानप्रकारः ॥

रेवद्रोहिणाभ्यां नक्षत्रे ॥ ६७ ॥

रेवद्रोहिणशब्दाभ्यां नक्षत्रे स्त्रियां ङीष्प्रत्ययो भवति । ङीपोऽपवादः । (रेवित्यतेऽस्यादि ? रयिर्विद्यतेऽस्या इ)ति मतुप् । निपातनाद्व(तुप् ? त्वम्) । रेवती । रोहिणी रोहितवर्णा । निपातनात् तस्य नकारः ।

नक्षत्र इति किम् । रेवतीरमणो बलः । रेवती शुष्करेवती । उगिल्लक्षणो ङीबेव भवति । रोहिणी रोहिता । 'श्येतैतहरितलोहिताद्वा तश्च न' इति पक्षे ङीप् नकारश्च न भवति । कथं रोहिणी कटुरोहिणी । रोहिण-शब्दः प्रकृत्यन्तरमस्ति । ततो जातेरस्त्रीविषयादिति ङीष् भविष्यति ॥

कटाच्छ्रोण्याम् ॥ ६८ ॥

कटशब्दाच्छ्रोण्यामभिधे(ये ? यायां) ङीष्प्रत्ययो भवति । कटी । श्रोण्यामिति किम् । कटा ॥

कूश्माण्ड्यादयश्च ॥ ६९ ॥

कूश्माण्ड्यादयश्च शब्दा ङीष्प्रत्ययान्ताः साधवो भवन्ति । कूश्माण्डी । सपाण्डी । नाशी । मुसली । काकोली । सम्भली । इत्यादयो भवन्ति ।

भाजगोणनागस्थलकुण्डकालकुशकामुककबरेभ्यः पक्वावपनस्थूलाकृत्रिमामत्रकृष्णायसीरिरंसुकेशवेशेषु ॥७०॥

भाजादिभ्यः प्रातिपदिकेभ्यो यथासङ्ख्यं पक्वादिष्वर्थेषु स्त्रियां ङीष्प्रत्ययो भवति । भाजी पक्वा चेत्, भाजान्या । गोणी आवपनं चेत्, गोणान्या । नागी स्थूला चेत्, नागान्या । स्थली अकृत्रिमा चेत्, स्थलान्या । कुण्डी अमत्रं चेत्, कुण्डान्या । काली कृष्णा चेत्, कालान्या । कुशी आयसी चेत्, कुशान्या । कामुकी रिरंसुश्चेत्, कामुकान्या । कबरी केशवेशश्चेत्, कबरान्या ॥

जानपदाद् वृत्तौ ॥ ७१ ॥

जानपदशब्दादुत्साद्यञन्ताद् वृत्तौ स्त्रियां ङीष्प्रत्ययो भवति । जानपदी वृत्तिः । वृत्ताविति किम् । जानपदी स्थितिः । 'टिड्ढाणञि'ति ङीबेव भवति । स्वरे विशेषः ॥

नीलात् प्राण्योषध्योः ॥ ७२ ॥

नीलशब्दात् प्राण्योषध्योरभिधेययोः स्त्रियां ङीष्प्रत्ययो भवति । नीली बडवा । नीली ओषधिः । प्राण्योषध्योरिति किम् । नीला शाटी ॥

वा संज्ञायाम् ॥ ७३ ॥

नीलशब्दात् संज्ञायां वा ङीष्प्रत्ययो भवति । नीली गौः । नीला ॥

शोणचण्डारालकमलकृपणविकटविशालविशङ्कट-भरुजध्वजकल्याणोदारपुराणाहन्भ्यः ॥ ७४ ॥

शोणादिभ्यः स्त्रियां ङीष्प्रत्ययो वा भवति। शोणी शोणा । चण्डी चण्डा । अराली अराला । कमली कमला । कृपणी कृपणा । विकटी विकटा । विशाली विशाला । विशङ्कटी विशङ्कटा । भरुजी भरुजा । ध्वजी ध्वजा । कल्याणी कल्याणा । उदारी उदारा । पुराणी पुराणा । अहन्शब्दः केवलः स्त्रियां न वर्तत इति (ङीष्प्रत्यय)स्तदन्ताद् भवति। दीर्घमहोऽस्यामिति दीर्घाह्नी शरत् । वावचनात् पक्षे डाब् ङीप्प्रतिषेधोऽपि भवति ॥

चन्द्रभागादनद्याम् ॥ ७५ ॥

चन्द्रभागादनद्यां स्त्रियामभिधेयायां ङीष्प्रत्ययो वा भवति । चन्द्रभागा चन्द्रभागी । अनद्यामिति किम् । चन्द्रभागा नाम नदी ॥

एरक्तिनः ॥ ७६ ॥

इवर्णान्तादक्तिनः स्त्रियां ङीष्प्रत्ययो वा भवति । धूलिः धूली । आलिः आली । अङ्गुलिः अङ्गुली । धमनिः धमनी । दर्विः दर्वी । अक्तिन इति किम् । पङ्क्तिः ॥

पद्धतेश्च ॥ ७७ ॥

पद्धतिशब्दात् स्त्रियां ङीष्प्रत्ययो वा भवति। पद्धतिः पद्धती । क्तिनर्थ आरम्भः ॥

शक्तेः शस्त्रे ॥ ७८ ॥

शक्तिशब्दात् शस्त्रे स्त्रियां ङीष्प्रत्ययो (वा) भवति। शक्तिः शक्ती । शस्त्र इति किम् । शक्तिः सामर्थ्यम् ॥

ओर्गुणादखरुसंयोगोपधात् ॥ ७९ ॥

उकारान्ताद् गुणवचनाच्च खरुसंयोगोपधवार्जितात् स्त्रियां ङीष्प्रत्ययो वा भवति । पटुः पट्वी । मृदुः मृद्वी । बहुः बह्वी । साधुः साध्वी ।

ओरिति किम् । (शुचिः) सेना । गुणादिति किम् । आखुः । अखरु-संयोगोपधादिति किम् । खरुर्ब्राह्मणी । पाण्डुः भूमिः ॥

## पुंनाम्नः पुंयोगादपालकान्तात् ॥ ८० ॥

पुन्नाम्नः पुंस आख्याभूतात् प्रातिपदिकात् पुंयोगाद्धेतोः स्त्रियां वर्तमानाद् ङीष्प्रत्ययो भवति । प्रष्ठस्य स्त्री प्रष्ठी । प्रचरी गणकी । महामात्री । पुंसि शब्दप्रवृत्तिनिमित्तस्य सम्भवात् पुमाख्या ए(काः ? ते)। तद्योगादभेदोपचारेण स्त्रियां वर्तन्ते । पुन्नाम्न इति किम् । परिसृष्टा प्रजाता प्रसूता । पुंयोगादिति किम् । देवदत्ता । यज्ञदत्ता । प्रष्ठस्येयं प्राष्ठी । प्रचरस्येयं प्राचरी इत्यादौ 'तस्येदमि'त्यणन्तत्वात् अपुन्नाम्नो ङीबेव भवति । अपालकान्तादिति किम् । गोपालिका पशुपालिका ॥

## पूतक्रतुवृषाकप्यग्निकुसितकुसीदानामैच् ॥ ८१ ॥

पूतक्रत्वादीनां पुन्नाम्नां पुंयोगात् स्त्रियां वर्तमानानां ङीष्प्रत्ययस्तत्सन्नियोगेन चैषामैकार अन्तादेशो भवति । पूतक्रतोः स्त्री पूतक्रतायी । वृषाकपायी अग्नायी । कुसितायी । कुसीदायी । पुंयोगादित्येव । यया तु पूताः क्रतवः पूतक्रतुः सा भवति ॥

## मनोरौ च वा ॥ ८२ ॥

मनुशब्दस्य पुंयोगात् स्त्रियां वर्तमानस्य ङीष्प्रत्ययस्तत्सन्नियोगेन चास्य ऐकार औकारश्चान्तादेशो वा भवति । मनोः स्त्री मनायी मनावी मनुः ॥

## सूर्या देवतायाम् ॥ ८३ ॥

सूर्यशब्दात् पुंयोगाद् देवतायां स्त्रियां वर्तमानाट्टाबनुदात्तो निपात्यते । यदा तु सूर एव सू(र्या ? र्यः) तदा तस्यान्तोदात्तत्वात् टाबेव निपात्यो भवति । सूर्या । देवतायामिति किम् । सूरी ॥

## इन्द्रवरुणभवशर्वरुद्रमृडाचार्याणामानुक् च ॥ ८४ ॥

इन्द्रादीनां पुंयोगात् स्त्रियां ङीष्प्रत्ययस्तत्सन्नियोगेन चानुगागमो भवति । इन्द्रस्य स्त्री इन्द्राणी । वरुणानी । भवानी । शर्वाणी । रुद्राणी । मृडानी । आचार्यानी । क्षुभ्नादित्वाण्णत्वाभावः ॥

मातुलोपाध्यायाभ्यां वा ॥ ८५ ॥

मातुलोपाध्यायशब्दाभ्यां पुंयोगात् स्त्रियां वर्तमानाभ्यां ङीष्प्रत्ययो भवत्यानुगागमश्च वा। मातुलस्य स्त्री मातुलानी मातुली। उपाध्यायानी उपाध्यायी ॥

आर्यक्षत्रियाभ्यां चापुंयोगे ॥ ८६ ॥

आर्यक्षत्रियाभ्यां च पुंयोगादन्यत्र स्त्रियां वर्तमानाभ्यां ङीष्प्रत्ययानुगागमौ वा भवतः। आर्याणी आर्या। क्षत्रियाणी क्षत्रिया। पुंयोगे तु ङीषेव भवति। आर्यी क्षत्रियी ॥

हिमारण्याभ्यां महत्त्वे ॥ ८७ ॥

हिमारण्याभ्यां महत्त्वे गम्यमाने स्त्रियां ङीष्प्रत्ययानुगागमौ भवतः। पूर्वसूत्रे चानुत्कृष्टत्वाद्वेति नानुवर्तते। महद्धिमं हिमानी। म(हा?-ह)दरण्यमरण्यानी। महत्त्वे एवैतयोः स्त्रियां वृत्तिरिति न प्रत्युदाह्रियते ॥

यवाद् दोषे ॥ ८८ ॥

यवशब्दाद् दोषे गम्यमाने स्त्रियां ङीष्प्रत्ययानुगागमौ भवतः। दुष्टो यवो यवानी। दोष एवास्य स्त्रीलिङ्गतेति न प्रत्युदाह्रियते ॥

यवनाल्लिप्याम् ॥ ८९ ॥

यवनशब्दात् तत्सम्बन्धिन्यां लिप्यामभिधेयायां ङीष्प्रत्ययानुगागमौ भवतः। तस्येदमर्थस्य चाभ्यामेवोक्तत्वादण् न भवति। यवनानामियं यवनानी लिपिः। लिप्यामिति किम्। (य?या)वनी वृत्तिः ॥

क्रीतात् करणादेः ॥ ९० ॥

क्रीतशब्दात् करणादेः प्रातिपदिकात् स्त्रियां ङीष्प्रत्ययो भवति। अश्वक्रीती। वसुक्रीती। करणग्रहणं किम्। सुक्रीता। दुष्क्रीता। आदिग्रहणं किम्। अश्वेन क्रीता। न ह्यत्र करणं क्रीतान्तप्रातिपदिकावयवो भवति। कथं 'सा हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसी' इति। टाबन्तेन समास इत्यदन्तत्वाभावाद् न भवति। पूर्वोदाहरणेषु तु 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इत्यदन्तत्वमस्ति। नियमविषयं चैतत्। तेनातिप्रसङ्गो न भवति ॥

क्तादल्पोक्तौ ॥ ९१ ॥

क्तप्रत्ययान्तात् करणादेः प्रातिपदिकादल्पाख्यायां ङीष्प्रत्ययो भवति । अभ्रविलिप्ती द्यौः । सूपविलिप्ती स्थाली । अल्पाभ्रा अल्पसूपे-त्यर्थः । अल्पोक्ताविति किम् । चन्दनानुलिप्ता योषित् ॥

स्वाङ्गादेरकृतमितजातप्रतिपन्नाद् बहुव्रीहेः ॥ ९२ ॥

स्वाङ्गादेः कृतादिवर्जितात् क्तान्ताद् बहुव्रीहेः स्त्रियां ङीष्प्रत्ययो भवति । शङ्खभिन्नी । ऊरुभिन्नी । केशविलूनी । गलकोत्कृत्ती । अकृत-मितजातप्रतिपन्नादिति किम् । दन्तकृता । दन्तमिता । दन्तजाता । दन्तप्रातिपन्ना । बहुव्रीहेरिति किम् । हस्तात् पतिता हस्तपतिता ॥

पाणिगृहीत्यूढा ॥ ९३ ॥

पाणिगृहीतीति निपात्यते ऊढा चेद् भवति । पाणिगृहीती भार्या । ऊढेति किम् । यस्याः कथञ्चित् पाणिर्गृह्यते सा पाणिगृहीता भवति ॥

अनाच्छादनजात्यादेर्वा ॥ ९४ ॥

आच्छादनवर्जिता या जातिस्तदादेः क्तान्ताद् बहुव्रीहेर्ङीष्प्रत्ययो भवति वा । शार्ङ्ग(र?)जग्धी शार्ङ्ग(र?)जग्धा । पलाण्डुभक्षिती पला-ण्डुभक्षिता । अनाच्छादनग्रहणं किम् । वस्त्रच्छन्ना । वसनच्छन्ना । जात्यादेरिति किम् । मासजाता । संवत्सरजाता । अयाता । सुयाता । बहुयाता । दुःखजाता । सुखजाता । अकृताद्यन्तादित्येव । कुंसकृता । कुण्डमिता । पलाण्डुजाता । वृक्षप्रतिपन्ना । क्तादित्येव । (शर्ङ्गर? शार्ङ्ग)-प्रिया ॥

संज्ञायाम् ॥ ९५ ॥

क्तान्ताद् बहुव्रीहेः संज्ञायां ङीष्प्रत्ययो वा भवति । प्रवृद्धवि-लूनी प्रवृद्धविलूना ॥

स्वाङ्गादुपसर्जनादसंयोगोपधादबह्वचः ॥ ९६ ॥

स्वाङ्गं यदुपसर्जनमसंयोगोपधमबह्वच् तदन्तात् प्रातिपादिकात् स्त्रियां ङीष्प्रत्ययो वा भवति । चन्द्रमुखी चन्द्रमुखा । पीनस्तनी पीन-

स्तना। उपसर्जनग्रहणाद् बहुव्रीहेरिति निवृत्तम्। तेनातिक्रान्ता केशान् अतिकेशी अतिकेशा माला। स्वाङ्गादिति किम्। बहुयवा अतियवा। उपसर्जनादिति किम्। शिखा। असंयोगोपधादिति किम्। सुपार्श्वा। अतिगुल्फा। अबह्वच इति किम्। पृथुजघना। सुललाटा॥

"अद्रवं मूर्त्तिमत् स्वाङ्गं प्राणिस्थमविकारजम्।
अतत्स्थं तत्र दृष्टं च तेन चेत् तत् तथायुतम्॥"

अद्रवमिति किम्। बहुकफा। मूर्त्तिमदिति किम्। बहुज्ञाना। प्राणिस्थमिति किम्। दीर्घमुखा शाला। अविकारजमिति किम्। बहुशोफा। अतत्स्थं तत्र दृष्टं च। बहुकेशी रथ्या बहुकेशा। तेन चेत् तत् तथायुतम्। पृथुस्तनी प्रतिमा पृथुस्तना॥

## नासिकोदरोष्ठजङ्घादन्तकर्णशृङ्गाङ्गगात्रकण्ठात्॥ ९७॥

नासिकादि यदुपसर्जनं स्वाङ्गं तदन्तात् प्रातिपदिकात् स्त्रियां ङीष्प्रत्ययो भवति वा। तुङ्गनासिकी तुङ्गनासिका। तलोदरी तलोदरा। बिम्बोष्ठी बिम्बोष्ठा। दीर्घजङ्घी दीर्घजङ्घा। समदन्ती समदन्ता। चारुकर्णी चारुकर्णा। तीक्ष्णशृङ्गी तीक्ष्णशृङ्गा। मृद्वङ्गी मृद्वङ्गा। सुगात्री सुगात्रा। स्निग्धकण्ठी स्निग्धकण्ठा। संयोगोपधलक्षणे बह्वज्लक्षणे च प्रतिषेधे प्राप्ते वचनम्॥

## पुच्छात्॥ ९८॥

पुच्छशब्दान्तात् प्रातिपदिकात् स्त्रियां ङीष्प्रत्ययो भवति वा। कल्याणपुच्छी कल्याणपुच्छा॥

## कबरमणिविषशरादेः॥ ९९॥

कबराद्यादेरुपसर्जनपुच्छान्तात् प्रातिपदिकात् स्त्रियां ङीष्प्रत्ययो भवति नित्यं, पुनर्विधानात्। कबरपुच्छी। मणिपुच्छी। विषपुच्छी। शरपुच्छी॥

उपमानादेश्च ॥ १०० ॥

उपमानादेश्चोपसर्जनपुच्छान्तात् प्रातिपदिकात् स्त्रियां ङीष्प्रत्ययो भवति । उलूकपुच्छी ॥

पक्षात् ॥ १०१ ॥

पक्षान्तात् प्रातिपदिकात् स्त्रियां ङीष्प्रत्ययो भवति । उलूकपक्षी ।

न क्रोडखुरगुदशफवालभालगलभगोखघोणादिभ्यः ॥ १०२ ॥

क्रोडाद्यन्तात् प्रातिपदिकात् "स्वाङ्गादुपसर्जनादि"ति प्राप्तः स्त्रियां ङीष्प्रत्ययो न भवति । (कल्याणक्रोडा । कल्याणखुरा । कल्याणगुदा । कल्याणशफा । कल्याणवाला । कल्याणभाला । कल्याणगला । कल्याणभगा । कल्याणोखा । कल्याणघोणा । आदिग्रहणात् पृथुजघना महाललाटा इत्यादि) ॥

सहनञ्विद्यमानयोः ॥ १०३ ॥

.... ....सकेशा । अकेशा । विद्यमानकेशा । स्वाङ्गादुपसर्जनादिति प्राप्तौ प्रतिषेधः । योऽपि नासिकोदरोष्ठादीनां बह्वच्संयोगोपधलक्षणप्रतिषेधप्राप्तौ विकल्पः, सोऽप्यनेन परत्वाद् बाध्यते । सनासिका अनासिका विद्यमाननासिका । सोष्ठा अनोष्ठा विद्यमानोष्ठा इति ॥

नखमुखात् संज्ञायाम् ॥ १०४ ॥

नखान्तान्मुखान्ताच्च प्रातिपदिकात् संज्ञायां विषये स्त्रियां ङीष् न भवति । शूर्पणखा । वज्र(ण)खा । गौरमुखा । कालमुखा । संज्ञायामिति किम् । ताम्रनखी कन्या । चन्द्रमुखी युवतिः ॥

सख्यशिश्वी ॥ १०५ ॥

सखी अशिश्वी इत्येतौ ङीष्प्रत्ययान्तौ स्त्रियां निपात्येते । सखी वयस्या । निपातनसामर्थ्यात् पुंयोगेऽपि भवति । सख्युः स्त्री सखी । तेन ह्यनदन्तत्वाद् न स्यात् । अविद्यमानः शिशुरस्या इत्यशिश्वी ॥

अस्त्रीविषयादयोपधाज्जातेः ॥ १०६ ॥

जातिवाचिनः प्रातिपदिकाद् अस्त्रीविषयादयकारोपधात् स्त्रियां ङीष्प्रत्ययो भवति। तत्र भिन्नेष्वप्यभिन्नप्रत्ययाभिधानहेतुः सकृदाख्यातनिर्ग्राह्या संस्थानव्यङ्ग्योपदेशव्यङ्ग्या च ब्राह्मण्यादिगोत्रचरणलक्षणा जातिः। कुक्कुटी। कुमारी। सूकरी। ब्राह्मणी। वृषली। नाडायनी। चारायणी। कठी। बह्वृची। जातेरिति किम्। मुण्डा। जटिला। अस्त्रीविषयादिति किम्। खट्वा। मक्षिका। अयोपधादिति किम्। क्षत्रिया। वैश्या। अत इत्येव। तित्तिरिः। कोयष्टिः। अनुपसर्जनादित्येव। बहुसभाकरा मथुरा। बहुब्राह्मणापकर्षा। कथं सुपर्णी। अस्ति ह्यस्मिन्नुपसर्जनं पर्णशब्दः। नैवं विज्ञायते (अ)विद्यमानमुपसर्जनमस्मिन् सोऽयमनुपसर्जन इति। कथं तर्हि। न उपसर्जनमनुपसर्जनम्। समासश्चात्रानुपसर्जनम्। स च जातिवचन इति॥

पाककर्णपर्णपुष्पफलमूलवालान्ताच्च ॥ १०७ ॥

पाकाद्यन्तात् प्रातिपदिकात् जातिवाचिनः स्त्रियां ङीष्प्रत्ययो भवति। ओदनपाकी। आ(ख? खु)कर्णी मुद्गपर्णी। शङ्खपुष्पी। (वा? दा)-सीफली। दर्भमूली। गोवाली। नित्यस्त्रीविषत्वादेषां पूर्वेणाप्राप्तौ वचनम्॥

इतो मनुष्यजातेः ॥ १०८ ॥

इकारान्तान्मनुष्यजातिवाचिनः प्रातिपदिकात् स्त्रियां ङीष्प्रत्ययो भवति। अवन्ती। कुन्ती। दाक्षी। प्लाक्षी। तैकायनी। ग्लचुकायनी॥

इञः ॥ १०९ ॥

इञन्तात् प्रातिपदिकात् स्त्रियां ङीष्प्रत्ययो भवति। अजात्यर्थ आरम्भः। सुतङ्गमेन निर्वृत्ता नगरी सौतङ्गमी। मौनिचित्ती॥

ऊङुतः ॥ ११० ॥

उकारान्तान्मनुष्यवाचिनः प्रातिपदिकात् स्त्रियामूङ्प्रत्ययो भवति। कुरूः। ब्रह्मबन्धूः। मनुष्यजातेरिति किम्। आखुः। कृकवाकुः। अयोपधादित्येव। अध्वर्युः। मृगयुः। 'ङकारः ङ्याप्लुन्योऽगि'ति विशेषणार्थः। दीर्घोच्चारणं किम्। श्वश्रूरित्यत्र श्वशुरस्योदन्त्यलोपयोर्दीर्घश्रवणं यथा स्यात्॥

बाह्वन्तकद्रुकमण्डलुभ्यः संज्ञायाम् ॥ १११ ॥

बाह्वन्तात् प्रातिपदिकात् कद्रुकमण्डलुभ्यां च संज्ञायां विषये स्त्रियामूङ्प्रत्ययो भवति । भद्रबाहूः । मद्रबाहूः । कद्रूः । कमण्डलूः । संज्ञायामिति किम् । वृत्तौ बाहू अस्या वृत्तबाहुः ॥

पङ्गोः ॥ ११२ ॥

पङ्गुशब्दात् स्त्रियामूङ्प्रत्ययो भवति । पङ्गूः । अजात्यर्थं वचनम् ॥

श्वशुरस्योदन्तलोपश्च ॥ ११३ ॥

श्वशुरशब्दस्य स्त्रियामूङ्प्रत्यय उकारान्तलोपश्च भवति । श्वश्रूः ॥

ऊरोरुपमानसंहितसहितसह(स ? श)फवामलक्षणादेः ॥ ११४ ॥

उपमानाज्जातेरूर्वन्तात् प्रातिपदिकात् स्त्रियामूङ्प्रत्ययो भवति । करभोरूः । नागनासोरूः । संहितोरूः । सहितोरूः । सहोरूः । (स ? श)-फोरूः । वामोरूः । लक्षणोरूः । उपमाना(दादे ? ज्जाते)रिति किम् । वृत्तोरुः । पीनोरुः ॥

अरज्ज्वादेरप्राणिनो वा ॥ ११५ ॥

उकारान्तादप्राणिवाचिनोऽरज्ज्वादिवाचिनः प्रातिपदिकात् स्त्रियामूङ्प्रत्ययो भवति वा । उडुः उडूः । चञ्चुः चञ्चूः । तन्तुः तन्तूः । अलाबुः अलाबूः । कर्कन्धुः कर्कन्धूः । अरज्ज्वादेरिति किम् । रज्जुः । हनुः । अप्राणिवाचिन इति किम् । मङ्गुः कृकवाकुः । जातेरित्येव । काकुः स्वरभेदः । शङ्कुः सङ्ख्याविशेषः ॥

अञो ङीन् ॥ ११६ ॥

अञन्ताज्जातिवाचिनः स्त्रियां ङीन्प्रत्ययो भवति । ङीषोऽपवादः । बिदस्यापत्यं स्त्री बैदी । औत्सी । जातेरिति किम् । बैदस्य भार्या बैदी । और्वी । पुंयोगाद् ङीषेव भवति । यस्त्वजातिवचनो(ऽञ् ? ञ्) ततष्टिड्ढाणञिति ङीबेव भवति । औत्सी औदपानी । ङकारः सामान्यग्रहणार्थः ॥

सङ्गरवहतुकपट्गुग्गुलुगोतमब्रह्मभ्योऽणः ॥ ११७ ॥

सङ्गरुप्रभृतिभ्योऽणन्तेभ्यः स्त्रियां ङीन्प्रत्ययो भवति। जातिलक्षणस्य ङीषोऽपवादः। सङ्गरोरपत्यं स्त्री साङ्गरवी। वाहतवी। कापटवी। गौग्गुलवी। गोतमादप्यणन्ताद् गौतमी। गौरादिपाठाद् ङीषपि भवति। ब्रह्मणोऽपत्यं स्त्री ब्राह्मणी। यस्त्वव्युत्पन्नो ब्राह्मणशब्दो जातिवचनः ततो ङी(बे?षे)व भवति। ब्राह्मणी॥

कमण्डल्वानिधिब्रह्मकृताशोकाकैकसीभ्यो ढकः॥११८॥

कमण्डल्वादिभ्यो जातिवाचिभ्यो ढगन्तेभ्यः स्त्रियां ङीन्प्रत्ययो भवति। कमण्डल्वा अपत्यं स्त्री कामण्डलेयी। आनिधेयी। ब्राह्मकृतेयी। आशोकेयी। कैकसेयी। 'कमण्डलूकैकसीभ्यां (मा?ङ्या)प्यू(ङि?ङ' इ) ति ढक्। अन्येभ्यस्तु शुभ्रादित्वात्॥

मुञ्जवात्स्याभ्यां फकः॥११९॥

मुञ्जवात्स्याभ्यां यः फक् तदन्तात् प्रातिपदिकात् स्त्रियां ङीन्प्रत्ययो भवति। मौञ्जायनी वात्स्यायनी। नडादित्वा(त् न?द् य)ञन्तत्वात् फक्॥

शिबिकपिभ्यां ञ्यङः॥१२०॥

शिबिकपिभ्यां परो यो ञ्यङ् तदन्तात् स्त्रियां ङीन्प्रत्ययो भवति। चापोऽपवादः। शिबेः क्षत्रियस्यापत्यं स्त्री शैबी। 'वृद्धेत्कोसलाजादिभ्यो ञ्यङ्'। एवं कापी। यस्तु ब्राह्मणवचनः कपिशब्दः, तस्मादाङ्गिरसोऽपत्ये यञन्ताल्लोहितादिपाठात् काप्यायनी। अनाङ्गिरसे तु ढगन्तात् कापेयी॥

अश्मरथाद्यञः॥१२१॥

अश्मरथात् परो यो यञ् तदन्तात् प्रातिपदिकात् स्त्रियां ङीन्प्रत्ययो भवति। अश्मरथस्यापत्यं स्त्री आश्मरथी। 'यञो षावटादि'ति ङीपापि सिद्धे ङीन्विधानात् पक्षेऽपि ष्फो न भवति॥

आङ्पर्याङ्भ्यामीहेरिनः॥१२२॥

आङ्पर्याङ्पूर्वादीहेर्य इन् तदन्तात् प्रातिपदिकात् स्त्रियां ङीन्प्रत्ययो भवति। एही पर्येही। औणादिक इन्। 'इतक्तिन' इति ङीषोऽपवादः॥

वतण्डारालचण्डालेभ्यः ॥ १२३ ॥

वतण्डादिभ्यो जातिवचनेभ्यः स्त्रियां ङीन्प्रत्ययो भवति । वतण्ड-स्यापत्यम् आङ्गिरसं स्त्री 'वतण्डाच्चे'ति यञ् । तस्य 'स्त्रियां लुगि'ति लुक् । वतण्डी । प्रत्ययलोपलक्षणेन यञन्तलक्षणयोः ष्फङीषोरपवादः । अराली । चण्डाली । जातिलक्षणङीषोऽपवादः ॥

भोगवद्गौरिमतोः संज्ञायाम् ॥ १२४ ॥

भोगवद्गौरिमदित्येतयोः संज्ञायां विषये स्त्रियां ङीन्प्रत्ययो भवति-उगिल्लक्षणस्य ङीपोऽपवादः । भोगवती । गौरिमती । ननु च भोगवद्गौ-रिमद्भ्यां घञन्तादिञन्ताच्च मतुप्याद्युदात्ताभ्यां स्वरे रूपे वा विशेषो नास्तीति किमर्थमिदमुच्यते । 'घरूपकल्पे'त्यादिना भोगवतितरा गौरिमति-तरेत्यादौ नित्यं ह्रस्वो यथा स्यात् । ङीपि तु उगित इत्युगित्संशब्द-नेन विहितस्य ङ्यो विकल्पेन ह्रस्वः स्यात् । संज्ञायामिति किम् । भोग-वतीतरा भोगवतितरा । गौरिमतीतरा गौरिमतितरा ॥

नृनरयोर्वृद्धिश्च ॥ १२५ ॥

नृनरशब्दयोः स्त्रियां ङीन्प्रत्ययो वृद्धिश्च भवति । सा च नृशब्दे ऋकारस्य नरशब्दे चान्त्यलोपे कृते आन्तरतम्या(न्ना ? न्न)काराकारस्य भवति । नारी । नारी । ऋकारान्तलक्षणे ङीपि जातिलक्षणे ङीषि च प्राप्ते वचनम् ॥

यङश्चाप् ॥ १२६ ॥

यङ इति ष्यङ्क्यङोः सामान्येन ग्रहणम् । तदन्तात् प्रातिपदिकात् स्त्रियां चाप्प्रत्ययो भवति । ङीपोऽपवादः । कारिषगन्ध्या । वाराह्या । असौवीर्या । पकारः सामान्यग्रहणार्थः । चकारः स्वरार्थः ॥

यञश्च षावटात् ॥ १२७ ॥

षान्तादवटशब्दाच्च परो यो यञ् तदन्ताच्च प्रातिपदिकात् स्त्रियां चा-प्प्रत्ययो भवति । टापोऽपवादः । शार्कराक्ष्या । पौतिमाष्या । गौकक्ष्या । ष्यङः सम्प्रसारणे गौकक्ष्यप्रतिषेधमाचक्षते । तेषां पक्षे गौकक्ष्यापुत्रः (गो? गौ)-कक्ष्यापतिरिति भवति । ननु किमर्थमत्रोदाह्रियते गौकक्ष्यशब्दः । (कौस्या ?

क्रौड्या)दिषु पठ्यते । ततश्च ष्यङन्तत्वात् यङश्चाबिति चापि गौकक्ष्येति सिध्यति । ष्यङः सम्प्रसारणे च कृते गौकक्षीपुत्रः गौकक्षीपतिरिति च सिध्यतीति गोनर्दीयाः (ये त्वन्ये से ?) ।

यूनस्तिः ॥ १२८ ॥

युवन्शब्दात् स्त्रियां तिप्रत्ययो भवति । नान्तलक्षणस्य ङीपोऽपवादः । युवतिः । कथं युवती । यौतेरौणादिकात् (क्तिन् ? ति)प्रत्ययान्ताद् 'एरक्तिन' इति ङीष् भवति ॥

[1]बह्वज्गुरूपान्तानार्षगोत्राणिञोरन्त्यस्य ष्यङ् ॥ १२९ ॥

बह्व(चो ? चौ) गुरूपान्तावनार्षगोत्रविहिताणिञौ यौ प्रातिपदिकशब्दौ तयोरन्त्यस्यालः स्थाने स्त्रियां ष्यङादेशो भवति । करीषस्येव गन्धोऽस्य करीषग(न्धी ? न्धिः ।) तस्यापत्यं स्त्री, औत्सर्गिकोऽण्, कारीषगन्ध्या । कौमुदगन्ध्या । वराहाया अपत्यं स्त्री, अत इञ्, वाराह्या । बलाकाया अपत्यं स्त्री, बाह्वादीञ्, बालाक्या । बह्वज्ग्रहणं किम् । भैमी । दाक्षी । गुरूपान्तग्रहणं किम् । औपगवी । (औपगवा । ? कापट)वी । अनार्षग्रहणं किम् । वासिष्ठी । वैश्वामित्री । गोत्रग्रहणं किम् । आहिच्छत्री । कान्यकुब्जी । अणिञोरिति किम् । आर्त्तभागी । आर्ष्टिषेणी । बिदादित्वादञ् । ङीनेव भवति । ङकारः सामान्यग्रहणार्थः । षकारस्तदविघातार्थः ॥

कुलाख्यानाम् ॥ १३० ॥

पुणिकभुणिकमुखरप्रभृतयो लोके कुलानीत्याख्यायन्ते । तेषां गोत्रे विहिताणिञन्तानामन्त्यस्यालः स्थाने स्त्रियां ष्यङादेशो भवति । अगुरूपान्तार्थ आरम्भः । पौणिक्या । भौणिक्या । मौखर्या । आख्याग्रहणादनन्तरापत्ये न भवति । पौणिकी भौणिकी ॥

क्रौडिलाडिव्याड्यापक्षित्यापिशलिसौधातकिभौरिकिभौलिकिशाल्मलिशालास्थलिकापिष्ठलिदैवदत्त्यादीनाम् [॥ १३१ ॥

क्रौड्यादीनामिञः स्त्रियां ष्यङादेशो भवति । अबह्वजर्थमगुरूपान्तार्थं च वचनम् । क्रौड्या । लाड्या । व्याड्या । आपक्षित्या । आपि-

1. 'बह्वल्गु' ख. ग. पाठः.

शल्या । सौधातक्या । भौरिक्या । भौलिक्या । शाल्मल्या । शाला-स्थल्या । कापि(स्थ ? ष्ठ)ल्या । दैवदत्त्या । आदिग्रहणाद् याज्ञदत्त्यादयो भवन्ति ॥

**चौपयतचैकयतचैटयतबैल्वयतसैकयतानां च ॥ १३२ ॥**

चौपयतादीनां शतृप्रकृतिकाणन्तानां स्त्रियामणः ष्यङादेशो भवति । अगुरूपान्तार्थ आरम्भः । चौपयत्या । चैकयत्या । चैटयत्या । बैल्वयत्या । सैकयत्या ॥

**भोजस्य क्षत्रियायाम् ॥ १३३ ॥**

भोजशब्दान्त्यस्यालः स्थाने क्षत्रियायां स्त्रियामभिधेयायां ष्यङादेशो भवति । भोज्या । क्षत्रियायामिति किम् । भोजा । भोजापत्यमप्यभेदोपचाराद् भोजेत्युच्यते यथा बभ्रुः । अजादित्वात् ङीष् भवति(?) ॥

**सूतस्य युवत्याम् ॥ १३४ ॥**

सूतशब्दस्यान्त्यस्यालः स्थाने प्राप्तयौवनायां स्त्रियामभिधेयायां ष्यङादेशो भवति । सूत्या । युवत्यामिति किम् । सूता ॥

**दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकण्ठेविद्धीनां वा ॥ १३५ ॥**

दैवयज्ञि (या ? इत्या)दीनामिञन्तानां स्त्रियामिञः ष्यङादेशो वा भवति । योगद्वयेन व्यवहाराद् गोत्र इति न सम्बध्यते । तेनापत्यमात्रे विधानं भवति । तत्र पौत्रादौ प्राप्ते, अनन्तरापत्ये त्वप्राप्ते विभाषा भवति । दैवयज्ञ्या दैवयज्ञी । शौचिवृक्ष्या शौचिवृक्षी । सात्यमुग्र्या सात्यमुग्री । कण्ठेविद्ध्या कण्ठेविद्धी ॥

इति श्रीदण्डनाथनारायणभट्टसमुद्धृतायां सरस्वतीकण्ठाभरणस्य

वृत्तौ हृदयहारिण्यां तृतीयस्याध्यायस्य चतुर्थः पादः ॥

तृतीयाध्यायः समाप्तः ।

---

## अथ चतुर्थोऽध्यायः ।

### प्राग् जितादण् ॥ १ ॥

जयति दीव्यति खनति संस्कृतमिति वक्ष्यति । ततः प्राग् येऽर्थास्तेष्वण्प्रत्ययो भवति । अधिकारः परिभाषाविधिर्वा । अयं त्रिष्वपि दर्शनेष्वपवादविषयं परिहृत्य प्रवर्तते । वक्ष्यति तस्यापत्यं औपगवः । आश्वपतः ॥

### दित्यदित्यादित्ययमेभ्यो ण्यः ॥ २ ॥

दित्यादिभ्यः प्राग्जितीयेष्वर्थेषु ण्यप्रत्ययो भवति । (कर्तरि ? अर्थवि)शेषलक्षणाणपवादानयं पूर्वविप्रतिषेधेन (बाधते) । दितिर्देवता अस्येति दैत्य इति ण्यस्यावकाशः । अर्थविशेषलक्षणस्याणपवादस्य ढकोऽवकाशः आत्रेय इति । इहोभयं प्राप्नोति दितेरपत्यमिति । पूर्वविप्रतिषेधेन ण्य एव भवति । दैत्यः । कथं दैतेयः । 'एरक्तिनः' इति ङीष्प्रत्यये दितिशब्दात् स्त्रीलक्षणढक्प्रत्ययो भवति । न चायं प्रातिपदिकग्रहणपरिभाषाविषयः । दितिशब्दस्य स्त्रियां नियतत्वात् । एवमदितेरादित्यः । आदित्यस्यादित्यः । यमस्य याम्यः ॥

### पत्युत्तरपदाच्च ॥ ३ ॥

पतिशब्दोत्तरपदाच्च प्रातिपदिकात् प्राग्जितीयेष्वर्थेषु ण्यप्रत्ययो भवति । बार्हस्पत्यम् । वानस्पत्यम् । कथमौष्ट्रपतमिति । उष्ट्रपतिर्नाम पत्रं तस्येदमित्यर्थे पत्रा(द्व ? द्वाह्य इ)त्यञेव भवति ॥

### अश्वशतधनगणराष्ट्रकुलगृहपशुधान्यधर्मधन्वन्सभाप्राणसेनाक्षेत्रादिपूर्वादण् ॥ ४ ॥

अश्वादिपूर्वात् पतिशब्दात् प्राग्जितीयेष्वर्थेष्वण्प्रत्ययो भवति । पूर्वस्य ण्यस्यापवादः । आश्वपतम् । (शातपतम् ।)धानपतं, गाणपतं, राष्ट्रपतं, कौलपतं, गार्हपतं, पाशुपतं, धान्यपतं, धार्मपतं, धान्वपतं, साभापतं, प्राणपतं, सैनापतं, क्षैत्रपतम् । (पूर्वस्यापवादः ?) ॥

अः स्थाम्नः ॥ ५ ॥

स्थामन्शब्दात् प्राग्जितीयेष्वर्थेषु अप्रत्ययो भवति । स्थाम(श ? न्श)ब्दस्य सामर्थ्यवचनत्वादपत्याद्यर्थैरशेषैः केवलस्य न योग इति तदन्तस्य ग्रहणम् । अश्वस्येव स्थामा यस्य अश्वत्थामा । तस्यापत्यादि अश्वत्थामः ॥

लोम्नोऽपत्येषु ॥ ६ ॥

लोमान्ताद् बहुष्वपत्येषु अः प्रत्ययो भवति । .... .... ॥

पृथिव्या ञः ॥ ७ ॥

.... ... पार्थिवः पार्थिवी ॥

अञुत्सोदपानविकरविनदतरुणतलुनधेनुपीलुकुणसुवर्णपृषदंशेभ्यः ॥ ८ ॥

उत्सादिभ्यः प्राग्जितीयेष्वर्थेष्वञ्प्रत्ययो भवति । अणस्तदपवादानां च बाधकः । औत्सः । औदपानः । वैकरः । वैनदः । तारुणः । तालुनः । धैनवः । पैलुकुणः । सौवर्णः । पृषदंशः इति गणसूत्रमेवात्र पठितम् । तस्यायमर्थः— पृषदित्यं (सेस ? शेऽ)भिधेये अञमुत्पादयति । पार्षदोंऽशः । अन्यत्रापि पार्षदः । अणेव भवति । स्वरे विशेषः ॥

भरतकुरुसत्त्वदिन्द्रावसानजनपदपञ्चालोशीनरेभ्यः [॥ ९ ॥

भरतादिभ्यः प्राग्जितीयेष्वर्थेष्वञ्प्रत्ययो भवति । भारतः । कौरवः । सात्त्वतः । ऐन्द्रावसानः । जानपदः । पाञ्चालः । औशीनरः ॥

त्रिष्टुबनुष्टुप्ककुबुष्णिक्पङ्क्तिजगतीबृहतीभ्यः ॥ १० ॥

त्रिष्टुबादिभ्यः प्राग्जितीयेष्वर्थेष्वञ्प्रत्ययो भवति । त्रैष्टुभः । आनुष्टुभः । काकुभः । औष्णिहः । पाङ्क्तः । जागतः । बार्हतः ॥

बृहन्महद्रथन्तरमध्यन्दिनभल्लकीयमहानदमहानसमहाप्राणेभ्यः ॥ ११ ॥

बृहदादिभ्यः प्राग्जितीयेष्वर्थेष्वञ्प्रत्ययो भवति । बार्हतः । माहतः । राथन्तरः । माध्यन्दिनः । माल्लकीयः । माहानदः । माहानसः । माहाप्राणः । इञादीनामपवादोऽयम् ॥

बष्कयादसमासे ॥ १२ ॥

बष्कयशब्दादसमासे प्राग्जितीयेष्वर्थेषु अञ्प्रत्ययो भवति । बाष्कयः । समासे तु सौबाष्कयिः । अत इञ् भवति ॥

उदस्थानाद् देशे ॥ १३ ॥

उदस्थानशब्दाद् देशेऽभिधेये अञ्प्रत्ययो भवति । उदस्थाने भव औदस्थानः । अन्यत्रोदस्थानो नाम कश्चित्, तस्यापत्यमौदस्थानिः । पूर्ववदिञ् ॥

ग्रीष्मादच्छन्दसि ॥ १४ ॥

ग्रीष्मशब्दादच्छन्दसि प्राग्जितीयेष्वर्थेष्वञ्प्रत्ययो भवति । ग्रैष्मः । अच्छन्दसीति किम् । ग्रैष्मी त्रिष्टुप् । अणेव भवति ॥

देवाद् यञ् च ॥ १५ ॥

देवशब्दात् प्राग्जितीयेष्वर्थेषु यञ्प्रत्ययो भवति । चकारादञ् । दैव्यः (दैवम्) ॥

ब(र्हि ? हि)षष्टीकक् च ॥ १६ ॥

ब(र्हि ? हि)श्शब्दात् प्राग्जितीयेष्वर्थेषु टीकक्प्रत्ययश्चकाराद् यञ् च भवति । 'अव्ययानाराात्' इति टिलोपो वक्ष्यते । बहिर्भवो बाहीकः बाह्यः । टकारो ङीबर्थः । बाहीकी ॥

द्विगोरनपत्येऽजादेर्लुगद्विः ॥ १७ ॥

अपत्यादन्यस्मिन् प्राग्जितीयेऽर्थे द्विगोरुत्पन्नस्याजादेस्तद्धितस्य सकृल्लुग् भवति, नतु द्विः । पञ्चसु कपालेषु पञ्चकपाल्यां वा संस्कृतं पञ्चकपालम् । तस्मात्त्वणि पाञ्चकपालम् । त्रीन् बेदान् त्रिवे(दिं ? दी) वा अधीते त्रिवेदः । द्विगोरिति किम् । पूर्वस्यां शालायां भवः पौर्वशालः ।

त्र्यवयवा विद्या त्रिविद्या तामधीते त्रैविद्यः । अनपत्य इति किम् । द्वै-
मातुरः । अजादेरिति किम् । पञ्चभ्यो गर्गेभ्य आगतः पञ्चगर्गरूप्यः ।
अद्विरिति किम् । पञ्चकपालस्य पुरोडाशस्येदं पाञ्चकपालम् । प्राग्जितीय
इत्येव । द्वाभ्यां नौभ्यां तरन् द्विनाविकः ॥

प्राग्वतेरग्निकलिभ्यां ढक् ॥ १८ ॥

'तेन तुल्यं क्रिया चेद्वतिः' इति वक्ष्यति । प्राग् वतिसंशब्दनाद्येऽर्था-
स्तेष्वग्निकलिभ्यां ढक्प्रत्ययो भवति । आग्नेयः कालेयः । एवमग्निर्देवता
अस्य, अग्नेः स्वं निमित्तमुत्पातः संयोगो वा आग्नेयः । प्राग्वतेरिति किम् ।
अग्निवत् कलिवत् । अग्नित्वं कलित्वम् । अणादिबाधार्थं वचनम् ॥

स्त्रीपुंसाभ्यां नञ्स्नञौ ॥ १९ ॥

स्त्रीपुंसाभ्यां प्राग्वतेरर्थेषु यथासङ्ख्यं नञ्स्नञौ प्रत्ययौ भवतः ।
स्त्रीणां समूहः स्त्रैणम् । पौंस्नम् । एवं स्त्रीषु भवं स्त्रीभ्यो हितमित्यादौ ।
प्राग्वतेरित्येव । स्त्रीवत् । पुंवत् ॥

भावे वा ॥ २० ॥

स्त्रीपुंसाभ्यां नञ्स्नञौ भावे वा भवतः । स्त्रैणम् । स्त्रीत्वम् । पौंस्नम् ।
पुंस्त्वम् । त्वतलावेव प्राप्तौ ॥

गोरचि यत् ॥ २१ ॥

गोशब्दादजादिप्रत्ययप्रसङ्गे यद् भवति । गवि भवं गोः स्वं वा
गव्यम् । अचीति किम् । गोरागतो गोरूप्यः ॥

तस्यापत्यम् ॥ २२ ॥

अर्थनिर्देशार्थं पूर्वोत्तरैः प्रत्ययैरभिसम्बध्यते । तस्येति षष्ठ्यन्ताद-
पत्यमित्येतस्मिन्नर्थे प्रागुक्ता अणादयो भवन्ति । उपगोरपत्यमौपगवः ।
दितेरपत्यं दैत्यः । एवं बार्हस्पत्यः । आश्वपतः । पार्थिवः । औत्सः ।
आग्नेयः । कालेय इत्यादि ॥

आद्यात् ॥ २३ ॥

अपत्ये येऽणादयस्ते गोत्रादिपुरुषेभ्य एव भवन्ति । यस्य यस्य

यदपत्यं तत्र तत्र भेदेन विधेः प्रसङ्गे नियमोऽयं क्रियते । सर्व एव हि पूर्वजा व्यवहितेनापि पुन्नाम्नि नरके न पतन्ति इत्याप्रकृतीनां सर्वमपत्यं भवति । उपगोरपत्यमौपगवः । तस्याप्यौपगवः । देवदत्तस्यापत्यं दैवदत्तिः । तस्यापि दैवदत्तिः । गर्गस्यापत्यं गार्ग्यः । तस्यापि गार्ग्य इत्यादिषु (च १ प)रमप्र(कृ)तिवाचिनोऽणादयो भवन्ति, न तु यथास्वं जनकात् ॥

## पौत्रादेरस्त्रियां गुर्वायत्ते ॥ २४ ॥

पित्रादिवंश्यो ज्यायान् भ्राता अन्योऽपि वा सपिण्डः स्थविरतरो गुरुः । पौत्रादेरपत्याद् गुर्वायत्ते स्त्रीवर्जितेऽपत्ये अणादयो भवन्ति । गर्गस्यापत्यं पौत्रादिर्गार्ग्यः । तस्यापत्यं गार्ग्यायणः गुर्वायत्तश्चेत् । अस्त्रियामिति किम् । गार्गी । गुरुग्रहणादन्यायत्ते गार्ग्यः । आयत्तग्रहणाद् यो गुरौ सत्यपि स्वतन्त्रो व्यवहरति स कुत्सायां गार्ग्यः । कथं गार्ग्यायणो जाल्मः । पदान्तरसामानाधिकरण्यादत्र कुत्सा । यस्तु गुरावसत्यपि तदादिष्टमाचरति, स मृतस्यापि गुरोस्तदादिष्टाचरणादायत्त एवेति प्रशंसार्थे गार्ग्यायणः । असगोत्रगुर्वायत्तेऽपि प्रशंसास्पदत्वात् गार्ग्यायण एव । मृतस्तु न कस्यचिदायत्त इति गार्ग्य इत्युच्यते । पूर्वं गुर्वायत्त इति गार्ग्यायणव्यपदेशेऽपि न दोषः । सर्वथा गार्ग्यशब्दो विशेषविवक्षायामपरिहार्यः ॥

## अत इञ् ॥ २५ ॥

तस्यापत्यमित्येव । अकारान्तात् प्रातिपदिकादपत्यमात्रे इञ्प्रत्ययो भवति । अणोऽपवादः । दक्षस्य अपत्यं दाक्षिः । प्लाक्षिः । तपरकरणं किम् । कीलालपा ब्राह्मणी इत्य(तो) मा भूत् । कथं 'प्रदीयतां दाशरथाय मैथिली' इति । शेषविवक्षायामण् भविष्यति ॥

## प्रागणो बिदादिभ्यः शेषे ॥ २६ ॥

शिवादिभ्योऽण् विधास्यते । ततः प्राग् यत्रार्थे प्रत्यया विहितास्ततोऽन्यत्र शेषेऽपत्ये बिदादिभ्यः शिवादिगणात् प्रागुक्तेभ्य इञ्प्रत्ययो भवति । बिदस्यापत्यं बैदिः । और्विः । गर्गस्यापत्यं गार्गिः । वात्सिः । अश्वस्यापत्यमाश्विः । शाङ्गिः । कुञ्जस्यापत्यं कौञ्जिः । ब्राध्निः । नडस्यापत्यं नाडिः ।

चारिः । हारीतस्यापत्यं हारीतिः । प्रागण इति किम् । शिवस्यापत्यं शैवः । शेष इति किम् । बिदस्यापत्यं पौत्रादि बैदः । गार्ग्यः ॥

उदङ्कादिभ्यश्च ॥ २७ ॥

उदङ्कादिभ्योऽपत्यमित्येतस्मिन्नर्थे इञ्प्रत्ययो भवति । ऋष्यणोऽपवादः । औदङ्किः । औद्दालकिः । आरुणिरित्यादयः ॥

बाहूपबाहूपबिन्दुजधेनुशटाकुशिवाकुभ्यो गोत्रादिभ्यः ॥ २८ ॥

बाह्वादिभ्यो गोत्रादिभूतेभ्योऽपत्ये इञ्प्रत्ययो भवति । बाहविः । औपबाहविः । औपबिन्दविः । आजधेनविः । (च ? शा)टाकविः । शैवाकविः । गोत्रादिभ्य इति किम् । बाहुर्नाम कश्चित् । तस्यापत्यं बाहवः ॥

वृकलाकृकलाचूडाबलाकाजङ्घाछगलाभगलालहकाध्रुवकाधुवकामूषिकासुमित्रादुर्मित्राभ्यः ॥ २९ ॥

वृकलादिभ्यो गोत्रादिभूतेभ्योऽपत्येऽभिधेये इञ्प्रत्ययो भवति । वार्कलिः । कार्कलिः । चौडिः । बालाकिः । जाङ्घिः । छागलिः । (भागलिः)। लाहकिः । ध्रौवकिः । धौवकिः । मौषिकिः । सौमित्रिः । दौर्मित्रिः । गोत्रादिभ्य इति किम् । वार्कलः ॥

युधिष्ठिरार्जुनरामसङ्कर्षणकृष्णगदप्रद्युम्नसाम्बसत्यकशूरासुराजीगर्तेभ्यः ॥ ३० ॥

युधिष्ठिरादिभ्यो गोत्रादिभूतेभ्यः इञ्प्रत्ययो भवति । यौधिष्ठिरिः । आर्जुनिः । रामिः । साङ्कर्षणिः । कार्ष्णिः । गादिः । प्राद्युम्निः । साम्बिः । सात्यकिः । शौरिः । आसुरिः । आजीगर्तिः । गोत्रादिभ्य इति किम् । यौधिष्ठिरः ॥

सुधावत्पुष्करसदनुरहदनडुत्पञ्चसप्ताष्टक्षेमवृद्धिमाषशराविशृंखलातोदिखरनादिभ्यः ॥ ३१ ॥

सुधावदादिभ्यो गोत्रादिभूतेभ्य इञ्प्रत्ययो भवति अपत्येऽभिधेये । सुधा विद्यते यस्यासौ सुधावान् । तस्यापत्यं सौधावतिः । पौष्करसादिः । उभयपदवृद्धिः । आतुरहतिः । आनडुहिः । पाङ्क्तिः । सात्तिः । श्राष्टिः । क्षैमवृद्धिः । माषिः । शाराविः । शार्ङ्गलिः । तौदिः । स्वारनादिः । गोत्रादिभ्य इत्येव । सौधावतः ॥

## प्राकारनगराभ्यां मर्दिनः ॥ ३२ ॥

प्राकारनगराभ्यां परस्मान्मर्दिन्शब्दादपत्य इञ्प्रत्ययो भवति । प्राकारमर्दिः । नागरमर्दिः ॥

## इन्द्राग्निदेवेभ्यः शर्मणः ॥ ३३ ॥

इन्द्रादिभ्यः परस्माच्छर्मन्शब्दादपत्ये इञ्प्रत्ययो भवति । ऐन्द्रशर्मिः । आग्निशर्मिः । दैवशर्मिः ॥

## उदञ्चः संज्ञायाम् ॥ ३४ ॥

उदञ्चोऽपत्ये संज्ञायां गम्यमानायामिञ्प्रत्ययो भवति । औदञ्चिः । संज्ञात्वादेव नलोपाभावः । संज्ञायामित्येव । औदीचः ॥

## कुसुभ्यां नाम्नः ॥ ३५ ॥

कु सु इत्येताभ्यां परान्नामन्शब्दादपत्ये इञ् भवति । कौनामिः । सौनामिः ॥

## शिरोलोमभ्याम् ॥ ३६ ॥

शिरोलोमशब्दाभ्यामपत्येऽभिधेये इञ्प्रत्ययो भवति । केवलयोरपत्यार्थेन योगाभावादेतौ शिरोलोमशब्दौ तदन्तौ गृह्येते । (हास्तिशीर्षिः) 'शीर्षस्तद्धिते च' इति शीर्षभावः । शारलोमिः ॥

## सम्भूयोम्भोमितौजश्शलङ्कूनां लोपश्च ॥ ३७ ॥

सम्भूयप्रभृतीनामपत्येऽर्थे इञ्प्रत्ययो भवति । अन्तलोपश्च । साम्भूयिः । आम्भिः । आमितौजिः । शालङ्किः । भूयसोऽपि केचित् । भौयिः । बाह्वादीनामनकारान्तार्थः, क्वचिद् बाधकबाधनार्थ आरम्भः ॥

**व्याससुधातृवरुटनिषादचण्डालबिम्बानामकङ् च [॥ ३८ ॥**

(बिम्बा ? व्यासा)दीनामपत्यमात्रेऽभिधेय इञ्प्रत्ययो भवति। तत्सन्नियोगेन चान्त्यस्याकङादेशः। व्यासस्यापत्यं वैया(सिकः ? सकिः)। सौधातकिः। वारुटकिः। नैषादकिः। चाण्डालकिः। बैम्बकिः। नैषाद इति शिवादिपाठात् ॥

**पुनर्भूपुत्रदुहितृननान्दृनिषादेभ्योऽनन्तरेऽञ् ॥ ३९ ॥**

पुनर्भूप्रभृ यो ऽनन्तरेऽपत्येऽञ्प्रत्ययो भवति। पुनर्भ्वोऽपत्यं पौनर्भवः। पौत्रः। : हत्रः। नानान्द्रः। नैषादः ॥

**परस्त्रि ः परशुश्च ॥ ४० ॥**

परस्त्रीशब्दादनन्तरापत्ये अञ्प्रत्ययो भवति। परशुश्चास्यादेशो भवति। परस्त्रिया अपत्यं पारशवः। ब्राह्मणोढायाः शूद्राया अपत्यमित्यर्थः। तथा च स्मृतिः—

"विप्राच्छूद्रा निषादाख्यं
सूते पारशवं तथा।"

इति ॥

**बिदोर्वकश्यपकुशिकभरद्वाजोपमन्युकिलातविदर्भविश्वानरर्ष्टिषेणेभ्यः पौत्रादौ ॥ ४१ ॥**

बिदादिभ्यः पौत्रादावपत्ये अञ्प्रत्ययो भवति। बिदस्यापत्यं पौत्रादि (बैदः।) एवमौर्वः। (काश्यपः।) कौशिकः। भारद्वाजः। औपमन्यवः। कैलातः। वैदर्भः। वैश्वानरः। आर्ष्टिषेणः। पौत्रादाविति किम्। बैदिः। अनन्तर इञ् ॥

**ऋतभागहर्यश्वप्रियकापस्तम्बकुचवारशरद्वच्छुनकधेनुभ्यः ॥ ४२ ॥**

ऋतभागादिभ्यः पौत्रादावपत्ये अञ्प्रत्ययो भवति । ऋतभागस्यापत्यम् आर्तभागः । एवं हार्यश्वः । प्रैयकः । आपस्तम्बः । कौचवारः । शारद्वतः । शौनकः । धैनवः ॥

**गोपवनशिग्रुबिन्दुभाजनाश्वावतानश्यामाकशम्बकश्यापर्णेभ्यः ॥ ४३ ॥**

गोपवनादिभ्यः पौत्रादावपत्ये अञ्प्रत्ययो भवति । गौपवनः । शैग्रवः । बैन्दवः । (भाजनः । आ)श्वावतानः । श्यामाकः । शाम्बकः । श्यापर्णः ॥

**हरितकिन्दासबह्यस्कार्कलूषवध्योगविष्णुवृद्धप्रतिबोधरथीतररथन्तरगविष्ठिरगविष्ठिलनिषादशबरमठरसृदारुपृदाकुभ्यश्च ॥ ४४ ॥**

हरितादिभ्यः पौत्रादावपत्येऽञ्प्रत्ययो भवति । हरितस्यापत्यं पौत्रादि हारीतः । एवं कैन्दासः । बाह्यस्कः । आर्कलूषः । वाध्योगः । वैष्णुवृद्धः । प्रातिबोधः । राथीतरः । राथन्तरः । गाविष्ठिरः । गाविष्ठिलः । नैषादः । शाबरः । माठरः । सार्दारवः । (पार्दाकवः) । त एते बिदादयः ॥

**गर्गवत्साजव्याघ्रपात्(सन्त्य ?)संस्कृतिप्राचीनयोगपुलस्तिरेभशटशङ्खाग्निवेशेभ्यो यञ् ॥ ४५ ॥**

गर्गादिभ्यो गोत्रादिभूतेभ्यः पौत्रादावर्थे यञ्प्रत्ययो भवति । गार्ग्यः । वात्स्यः । आज्यः । वैयाघ्रपाद्यः । सांस्कृत्यः । प्राचीनयोग्यः । पौलस्त्यः । रैभ्यः । शाट्यः । शाङ्ख्यः । आग्निवेश्यः । गोत्रादीति किम् । गर्गो नाम कश्चित् , तस्यापत्यं गार्गिः । पौत्रादाविति किम् । गार्गिः ॥

**धूमावटचमसनमसधनञ्जयतृक्षविश्वावसुजरमाणकुरुकतानडुद्भ्यः ॥ ४६ ॥**

धूमादिभ्यो गोत्रादिभूतेभ्यः पौत्रादावपत्ये यञ् भवति । धौम्यः । आवट्यः । चामस्यः । नामस्यः । धानञ्जय्यः । तार्क्ष्यः । वैश्वावसव्यः । जारमाण्यः । कौरुकत्यः । आनडुह्यः ॥

१. 'सरकृतसंकृति' ख. पाठः.

लोहितशंशितबभ्रुवल्गुमण्डुमङ्क्षुशङ्कुलिगुजिगीषुगुहलुमन्तुतन्तुभ्यः ॥ ४७ ॥

लोहितादिभ्यो गोत्रादिभूतेभ्यः पौत्रादावपत्ये यञ्प्रत्ययो भवति। लोहितस्यापत्यं पौत्रादिर्लौहित्यः। शांशित्यः। बाभ्रव्यः (कौशिक) एवेत्यर्थः। विशेषो वक्ष्यते। वाल्गव्यः। माण्डव्यः। माङ्क्षव्यः। शाङ्कव्यः। लैगव्यः। जैगीषव्यः। गौहलव्यः। मान्तव्यः। तान्तव्यः। स्त्रियां तु लौहित्यायनी शां(शि)त्यायनीति 'लोहितादिभ्यः शकलान्तेभ्यो नित्यमि'ति ङीष्प्रत्ययः॥

मनुमनाय्य[1]सूनुस्रुकषर्ककथकाक्षतरुक्षतलुक्षतण्डवतण्डकविकतेभ्यः ॥ ४८ ॥

मन्वादिभ्यः प्रातिपदिकेभ्यः पौत्रादावपत्ये यञ् भवति। मनोरपत्यं पौत्रादिर्मानव्यः। कथं मानवी प्रजा। लोहितादित्वान्नित्यं स्त्रियां ङीष्प्रत्ययेन भवितव्यम्। नैवम्। अत्रानन्तरापत्ये ऋषिवचनत्वादण्। मानायी। मानाय्यः। तथा सौनव्यः। स्राव्यः। कार्षक्यः। का-(थ्यः? थक्यः)। आक्ष्यः। तारुक्ष्यः। तालुक्ष्यः। ताण्ड्यः। वातण्ड्यः। आङ्गिरस एवेत्यर्थविशेषो वक्ष्यते। तथा काव्यः आङ्गिरस एवेत्यत्राप्यर्थविशेषः। कात्यः॥

शकलकण्वगोकक्षागस्त्यकुण्डिनीयज्ञवल्कवर्णवल्काभयजातविरोहितवृषगणरहूगणशण्डिलमुद्गलेभ्यः [॥ ४९ ॥

शकलादिभ्यो गोत्रादिभूतेभ्यः पौत्रादावपत्ये यञ् भवति। शकलस्यापत्यं शाकल्यः। एवं काण्व्यः। गौकक्ष्यः। आगस्त्यः। कौण्डिन्यः। याज्ञवल्क्यः। वार्णवल्क्यः। आभयजात्यः। वैरोहित्यः। वार्षगण्यः। राहूगण्यः। शाण्डिल्यः। मौद्गल्यः॥

---

1. 'यि' ख, ग. पाठः.

मुसलोलूकजतुकर्णमन्त्रिताश्मरथशर्कराक्षपूतिमाषस्थूरारगतापिङ्गलकृष्णगोलन्देभ्यः ॥ ५० ॥

मुसलादिभ्यो गोत्रादिभूतेभ्यः पौत्रादावपत्ये यञ् भवति । मुसलस्यापत्यं पौत्रादिर्मौसल्यः । एवमौलूक्यः । जातुकर्ण्यः । मान्त्रित्यः । आश्मरथ्यः । शार्कराक्ष्यः । पौतिमाष्यः । स्थौर्यः । आरगत्यः । पैङ्गल्यः । कार्ष्ण्यः । गौलन्द्यः ॥

भिषक्तितिक्षाभडितभण्डितचिकितेन्द्रहूदेवहूपिप्पल्वेकलूबृहदग्निजमदग्निपराशरेभ्यः ॥ ५१ ॥

भिषगादिभ्यो गोत्रादिभूतेभ्यः पौत्राद्यावपत्ये यञ् भवति । भिषजोऽपत्यं पौत्रादि भैषज्यः । तैतिक्ष्यः । भाडित्यः । भाण्डित्यः । चैकित्यः । ऐन्द्रहव्यः । दैवहव्यः । पैप्पलव्यः । ऐकलव्यः । बार्हदग्न्यः । (जामदग्न्यः ।) पाराशर्यः । कथम(न)न्तरापत्ये रामो जामदग्न्यः व्यासः पाराशर्य इति । पौत्रादिकार्यकरत्वात् पुत्रोऽप्यभिधीयते । जामदग्नः पाराशर इति च प्रथमापत्यविवक्षायामणपि ॥

दल्भकुलटकुटीगुचणकचुलुकोजकर्कटालपिन्सवर्णसुवर्णसुलाभिद्विदहृदादिभ्यः ॥ ५२ ॥

दल्भादिभ्यः पौत्रादावपत्ये यञ् भवति । दल्भस्यापत्यं पौत्रादिर्दाल्भ्यः । कौलट्यः । कौटीगव्यः । चाणक्यः । चौलुक्यः । औज्यः । कार्कट्यः । आलाप्यः । सावर्ण्यः । सौवर्ण्यः । सौलाभ्यः । वैदह्यः । आकृतिगणोऽयं गर्गादिः । एवमन्येऽपि यथादर्शनमवगन्तव्याः ॥

वाजादसमासे ॥ ५३ ॥

वाजशब्दादसमासे वर्तमानादपत्ये पौत्रादौ यञ् भवति । वाजस्यापत्यं पौत्रादिर्वाज्यः । समासे तु सौवाजिः ॥

मघोर्ब्राह्मणे ॥ ५४ ॥

१. 'क्ष' ख, ग, पाठः.

मधुशब्दात् पौत्रादावपत्ये यञ् भवति ब्राह्मणे वाच्ये । माधव्यः ब्राह्मणश्चेत् । माधवोऽन्यः ॥

बभ्रोः कौशिके ॥ ५५ ॥

बभ्रुशब्दात् पौत्रादावपत्ये यञ् भवति कौशिके वाच्ये । बाभ्रव्यः कौशिकश्चेत् । बाभ्रवोऽन्यः । बभ्रुशब्दो गर्गादिषु पठित एव । ततः सिद्धे यञि कौशिके नियमार्थं वचनम् । गर्गादिषु पाठोऽन्तर्गणकार्यार्थः । तेन 'लोहितादिभ्य' इत्यादिना स्त्रियां ष्फप्रत्ययः । बाभ्रव्यायणी ॥

कवेराङ्गिरसे[1] ॥ ५६ ॥

कविशब्दादङ्गिरसोऽपत्यविशेषे पौत्रादौ यञ् भवति । काव्यः । आङ्गिरस इति किम् । कावेयः । कविशब्दो गर्गादिषु पठ्यते । तस्य नियमार्थं वचनम् । आङ्गिरस एव यथा स्यात् । लोहितादिकार्यार्थो गणे पाठः । काव्यायनी ॥

बोधात् ॥ ५७ ॥

बोधशब्दादाङ्गिरसे पौत्रादावपत्ये यञ् भवति । बौध्यः । आङ्गिरस इति किम् । बौधिः ॥

वतण्डात् ॥ ५८ ॥

वतण्डशब्दादाङ्गिरसे पौत्रादावपत्यविशेषे यञ् भवति । वातण्ड्यः । किमर्थमिदम् । गर्गादिष्वयं पठित एव शिवादिष्वपि पठ्यते । तत्राङ्गिरसे शिवाद्यणो बाधनार्थं पुनर्वचनम् । अनाङ्गिरसे तूभयत्र पाठसामर्थ्यात् प्रत्ययद्वयमपि भवति । वातण्ड्यः । वातण्डः ॥

स्त्रियां लुक् ॥ ५९ ॥

आङ्गिरस इत्येव । वतण्डशब्दादाङ्गिरसस्य यञ्प्रत्ययस्य लुग् भवति । लुकि कृते 'वतण्डारालचण्डालेभ्य' इति ङीन् । वतण्डी । अनाङ्गिरस्यां तु वातण्ड्यायनी । शिवाद्यणि कृते वातण्डी ॥

---

१. 'सः' क. पाठः.

अश्वाश्मशङ्खपुटकुटरोहिणखर्जूरपिण्डूरभडिलभण्डिल[1]भडितभण्डितेभ्यः फञ् ॥ ६० ॥

आङ्गिरस इति निवृत्तम्। अश्वादिभ्यः पौत्रादावपत्ये फञ् भवति। आश्वायनः। (आश्मायनः।) शङ्खशब्दो गर्गादावुक्तः। कुञ्जादिषु च वक्ष्यते। तेन त्रैरूप्यम्। शाङ्खायनः। शाङ्खायन्यः। शाङ्ख्यः। पौ(गा? टा)यनः। कौटायनः। रौहिणायनः। खार्जूरायणः। पैण्डूरायणः। भाडिलायनः। भाण्डिलायनः। भाडितायनः। भाण्डितायनः॥

प्रहृतरामोदक्षान्तकालकाशकुलगोबा[2]ह्वार्कस्वनध्वनपादचक्रेभ्यः ॥ ६१ ॥

प्रहृतादिभ्यः पौत्रादावपत्ये फञ् भवति। प्राहृतायनः। रामोदायनः। क्षान्तायनः। कालायनः। काशायनः। कौलायनः। गौबाह्वायनः। आर्कायणः। सौवनायनः। ध्वानायनः। पादायनः। चाक्रायणः॥

ग्रीवाश्रविष्ठापवित्रापविन्दागोमिन्वाग्मिन्श्यामधूमधूम्रब[3]स्तविश्वानरविदेभ्यः ॥ ६२ ॥

ग्रीवादिभ्यः पौत्रादावपत्ये फञ् भवति। ग्रैवायणः। श्राविष्ठायनः। पावित्रायणः। आपविन्दायनः। गोमायनः। वाग्मायनः। श्यामायनः। धौमायनः। धौम्रायणः। बास्तायनः। वैश्वानरायणः। वैदायनः॥

जडखडार्हग्रीष्मवीक्षविशम्पविशालगिरिचपलनमदासकानडुह्येभ्यः ॥ ६३ ॥

जडादिभ्यः पौत्रादावपत्ये फञ् भवति। जाडायनः। खाडायनः। मू? आ(र्हा)यणः। ग्रैष्मायणः। वैक्षायणः। वैशम्पायनः। वैशालायनः। गैरायणः। चापलायनः। नामदासकायनः। आनडुह्यायनः॥

धन्यधर्मा[4]र्जुनबैल्योत्सातवकितवशूद्रखादिरसुमनोदुर्मनोभ्यः ॥ ६४ ॥

---

१. 'लभाण्डिकभण्डिते' ख., 'लभडिकभण्डिते' ग. पाठः. २. 'ला' ख, ग. पाठः. ३. 'वस्तुवि', ४. 'र्म्या' क, पाठः.

धन्यादिभ्यः पौत्रादावपत्ये फञ् भवति .... ... ... ॥

**जातात् पुंसि ॥ ६५ ॥**

.... .... .... .... ....

... ... .... .... ....

जातस्य अपत्यं जातायनः । पुंसीति किम् ! जाताया अपत्यं जातेयः ॥

**शपभरद्वाजाभ्यामात्रेये ॥ ६६ ॥**

.... .... .... .... .... अपत्यविशेषेऽभिधेये फञ् भवति । शापायनः आत्रेयश्चेत् । शापिरन्यः । भारद्वाजायनः आत्रेयश्चेत् । भारद्वाजोऽन्यः । बिदादित्वादञ् ॥

**आत्रेयाद् भारद्वाजे ॥ ६७ ॥**

आत्रेयशब्दाद् भारद्वाजेऽपत्यविशेषे फञ् भवति । आत्रेयायणः भारद्वाजश्चेत् । आत्रेयिरन्यः ॥

**भर्गात् त्रैगर्ते ॥ ६८ ॥**

भर्गशब्दात् त्रैगर्तेऽपत्यविशेषे फञ् भवति । भार्गायणः त्रैगर्तश्चेत् भार्गिरन्यः । अश्वादिगणसूत्राण्येतानि ॥

**कुञ्जब्रध्नशङ्खभस्मगणलोमशटशाकशुण्डाशुभस्कन्दस्कम्भविशाभ्यः[2] फ्यञ् ॥ ६९ ॥**

कुञ्जादिभ्यो गोत्रादिभूतेभ्यः पौत्रादावपत्ये फ्यञ्प्रत्ययो भवति । कौञ्जायन्यः । कौञ्जायन्यौ । एवं ब्राध्नायन्यः । शाङ्खायन्यः । भास्मायन्यः । गाणायन्यः । लौमायन्यः । शाटायन्यः । शाकायन्यः । शौण्डायन्यः । शौभायन्यः । स्कान्दायन्यः । स्काम्भायन्यः । वैशायन्यः । पौत्रादावित्येव । कौञ्जिः । अनन्तरापत्ये इञ् ॥

**स्त्रीबहुषु फक् १२ ॥ ७० ॥**

---

१. 'दः दशप', २. 'विपाड्भ्यः' ख. ग. पाठः.

कुञ्जादिभ्यः स्त्रियां बहुषु च फक्प्रत्ययो भवति । कौञ्जायना स्त्री । कौञ्जायना बहवः । एवं ब्राध्नायना स्त्री ब्राध्नायना बहवः इत्यादि । स्त्रियामिति किम् । कौञ्जायन्यः पुमान् । बहुष्विति किम् । कौञ्जायन्यः कौञ्जायन्यौ ॥

नडचरबकमुञ्जेतिकेतिशोपकलमकसस्लवाजप्यतिकाग्निशर्मभ्यः ॥ ७१ ॥

नडादिभ्यः प्रातिपदिकेभ्यः पौत्रादावपत्ये फक्प्रत्ययो भवति । नाडायनः । चारायणः । (पा ? बा)कायनः । मौञ्जायनः । ऐतिकायनः । ऐतिशायनः । औपकायनः । लामकायनः । सास्लायनः । वाजप्यायनः । तैकायनः । आग्निशर्मायणः । अग्निशर्मन्शब्दाद् वृषगण एवेत्यर्थविशेषो वक्ष्यते । पौत्रादावित्येव । नाडिः । चा(मि ? रिः) ॥

वृषगणप्राणनरसायकदासकमित्रपिङ्गरपिङ्गलकिङ्करकिङ्कलकातरकातलेभ्यः ॥ ७२ ॥

वृषगणादिभ्यः पौत्रादावपत्ये फक् भवति । वार्षगणायनः । प्राणायनः । नारायणः । सायकायनः । दासकायनः । मैत्रायणः । पैङ्गरायणः । पैङ्गलायनः । कैङ्करायणः । कैङ्कलायनः । कातरायणः । कातलायनः । पौत्रादावित्येव । वार्षगणिः ॥

द्वीपाजकाश्यकाश्यपकाव्यामुष्यामित्रचित्रलिङ्गकुमारलोहदुर्गेभ्यः ॥ ७३ ॥

द्वीपादिभ्यः प्रातिपदिकेभ्यः पौत्रादावपत्ये फक् भवति । द्वैपायनः । आजायनः । काश्यायनः । काश्यपायनः । काव्यायनः । आमुष्यायणः । आमित्रायणः । (चैत्रायणः) । लै(ङ्गला ? ङ्गा)यनः । कौमारायणः । लौहायनः । दौर्गायणः ॥

**स्तम्बाग्रशिंशपातृणशकटसुमतमिमतर्छजगन्धरयुगन्धरहंसकपञ्चालेभ्यः ॥ ७४ ॥**

स्तम्बादिभ्यः पौत्रादावपत्ये फक् भवति । स्ताम्बायनः । आग्रायणः । शैंशपायनः । तार्णायनः । शाकटायनः । सौमतायनः । मैमतायनः । आर्च्छायनः । जागन्धरायणः । यौगन्धरायणः । हांसकायनः । पाञ्चालायनः ॥

**दण्डिन्हस्तिन्चमसिन्सुगत्यस्थिरकब्राह्मणाश्वलचटकबदराध्वरखरपकामुकेभ्यः ॥ ७५ ॥**

दण्डिन्नित्येवमादिभ्यः पौत्रादावपत्ये फक् भवति । दाण्डिनायनः । हास्तिनायनः । दण्डिहस्तिनोः फकि टिलोपो नास्तीति वक्ष्यते । चामसायनः । तथा सौगत्यायनः । स्थैरकायनः । ब्राह्मणायनः । आश्वलायनः । चाटकायनः । बादरायणः । आध्वरायणः । खारपायणः । कामुकायनः ॥

**ब्रह्मदत्तोदुम्बरशणशोणाश्रबालिशभण्डपेभ्यश्च ॥ ७६ ॥**

ब्रह्मदत्तादिभ्यः पौत्रादावपत्ये फक् भवति । ब्राह्मदत्तायनः । औदुम्बरायणः । शाणायनः । शोणायनः । आश्रायणः । बालिशायनः । भाण्डपायनः ॥

**कृष्णरणाभ्यां ब्राह्मणवासिष्ठयोः ॥ ७७ ॥**

कृष्णरणशब्दाभ्यां ब्राह्मणवासिष्ठयोरपत्याद्यर्थविशेषणयोरभिधेययोः फक्प्रत्ययो भवति यथासंख्यम् । कार्ष्णायनो भवति ब्राह्मणश्चेत् । कार्ष्णिरन्यः । राणायनो भवति वासिष्ठश्चेत् । राणिरन्यः ॥

**शलङ्कुक्रोष्ट्वोर्लोपश्च ॥ ७८ ॥**

शलङ्कुक्रोष्टुशब्दाभ्यामपत्ये पौत्रादौ फक्प्रत्ययो भवति तत्सन्नियोगेन चानयोरन्त्यस्य च लोपो भवति । शालङ्कायनः । क्रौष्टायनः ॥

हरितादिभ्योऽञः[1] ॥ ७९ ॥

ह(मि ? रि)तादयः प्रदाकुपर्यन्ता बिदाद्यन्तर्गणाः । ह(मि ? रि)-तादिभ्योऽञन्तेभ्योऽपत्ये फक् भवति । इञोऽपवादः । हरितस्यापत्यं हारितायनः । कैन्दासायन इत्यादि ॥

यञिञ्भ्याम् ॥ ८० ॥

यञन्तादिञन्ताच्च प्रातिपदिकादपत्ये फक् भवति । गार्ग्यस्यापत्यं गार्ग्यायणः । वात्स्यायनः । इञन्ताद् दाक्षायणः । 'द्वीपादनुसमुद्रं यञ्' । 'सुतङ्गमादिभ्य इञि'त्यतो न भवति, पौत्रादिग्रहणे(न) यञिञोर्विशेषणात् । गुर्वायत्तो वायं प्रत्ययः ॥

शरद्वच्छुनकदर्भेभ्यो[2] भार्गववात्स्याग्रायणेषु ॥ ८१ ॥

शरद्वच्छुनक दर्भ इत्येतेभ्यः पौत्रादावपत्ये फक्प्रत्ययो भवति यथासंख्यं भार्गववात्स्याग्रायणेषु वाच्येषु । शारद्वतायनो भवति भार्गवश्चेत् । शारद्वतोऽन्यः । शौनकायनो वात्स्यश्चेत् । शौनकोऽन्यः । दार्भायणो भवति आग्रायणश्चेत् । दार्भिरन्यः । पौत्रादावित्येव । शारद्वतः । शरद्वच्छुनकशब्दौ बिदादी । ताभ्यामञोऽपवादः फक्प्रत्ययो (वा ?) भवति ॥

जीवन्तपर्वताभ्यां वा ॥ ८२ ॥

जीवन्तपर्वतशब्दाभ्यां पौत्रादावपत्ये फक्प्रत्ययो वा भवति । इञोऽपवादः । जैवन्तायनः जैवन्तिः । पार्वतायनः पार्वतिः ॥

द्रोणात् ॥ ८३ ॥

द्रोणशब्दात् अपत्ये फक्प्रत्ययो (वा) भवति । द्रौणायनः द्रौणिः । कथमनन्तरापत्ये द्रौणायनः । पृथग्योगादपत्यमात्रे ॥

शिवप्रोष्ठप्रोष्ठिकचण्डजम्भकुठारानभिम्लानककूथोरलविरलै[3]पिष्गसुपिष्गेभ्योऽण् ॥ ८४ ॥

---

१. 'मि' क. पाठः. २. 'भ्योऽणःभा', ३. 'द्यपिष्टसुपिष्टेभ्यो' ख. ग. पाठः.

पौत्रादावविति निवृत्तम् । अतः प्रभृति सामान्येनापत्यमात्रे विज्ञायन्ते । शिवादिभ्यः प्रातिपदिकेभ्योऽपत्येऽण्प्रत्ययो भवति । यथायथमिञादीनामपवादः । शैवः । प्रौष्ठः । प्रौष्ठिकः । चाण्डः । जाम्भः । कौठारः । आनभिम्लानः । काहू(तः ? थः) । औरलः । वैरलः । पैष्पः । सौपिष्पः ॥

**पिटकपीटाकमृक्षाकवर्तनाक्षविरूपाक्षखदूरकरेखलेखसुखलेखनेखञ्जनखञ्जेरमञ्जमिकेभ्यः ॥ ८५ ॥**[1]

पिटकादिभ्यः प्रातिपदिकेभ्योऽपत्येऽणप्रत्ययो भवति । पैटकः । पैटाकः । मार्क्षाकः । वार्तनाक्षः । (वैरूपाक्षः) । खादूरकः । रैखः । लैखः । सौखः । लैखनः । खाञ्जनः । खाञ्जेरः । माञ्जमिकः ॥

**पर्णकर्णकोहडकहोडककुभोर्णनाभनभागहेहयककुत्स्थवृष्णिकक्षीरह्रदजलह्रदेभ्यः ॥ ८६ ॥**

पर्णादिभ्योऽपत्येऽणप्रत्ययो भवति । पार्णः । कार्णः । कौहडः । काहोडः । काकुभः । और्णनाभः । नाभागः । हैहयः । काकुत्स्थः । वार्ष्णिकः । । क्षैरह्रदः । जालह्रदः ॥

**यस्कलह्यद्रुह्यायःस्थूणतृणकर्णभलन्दनकुरुपाण्डुवतण्डर्ष्टिषेणतृणतक्षभ्यः ॥ ८७ ॥**

यस्कादिभ्यः प्रातिपदिकेभ्योऽपत्येऽणप्रत्ययो भवति । यस्कस्यापत्यं यास्कः । एवं लाह्यः । द्रौह्यः । आयःस्थूणः । तार्णकर्णः । भालन्दनः । कौरवः । पाण्डवः । वातण्डः । आर्ष्टिषेणः । तार्णः । ताक्षणः । तक्षन्शब्दोऽत्र पठ्यते का(रि)लक्षणमुदीचामिञं बाधितुम् । ण्यप्रत्ययस्य तु बाधा नेष्यते । ताक्षण्यः ॥

**गोपिकागोपालिकाकपिलिकाजगिलिकाबधिरिकारोहितिकार्यश्वेतोत्क्षिपावर्षिकापृथेलासपत्नीभ्यः ॥ ८८ ॥**[2]

---

१. 'नयञ्जनखञ्जनमञ्जीरमञ्जेकेभ्यः', २. 'रि' ख. ग. पाठः

गोपिकाप्रभृतिभ्योऽपत्येऽण्प्रत्ययो भवति। गौपिकः। गौपालिकः। कापिलिकः। जागिलिकः। बाधिरिकः। रौहितिकः। आर्यश्वेतः। औत्क्षिपः। वार्षिकः। पार्थः। ऐलः। सापत्नः॥

भूमि[1]भूरिमुनिसन्धिजरत्कारूत्कारुहस्तिपादकपिञ्जलकुण्डोपरथब्रह्मगुप्तखर्जूरकर्णमयूरकर्णेभ्यः॥ ८९॥

भूम्यादिभ्यः प्रातिपदिकेभ्योऽपत्येऽण् भवति। भूमेरपत्यं भौमः। (भौरः।) मौनः। सान्धः। जारत्कारवः। औत्कारवः। अत्र जरत्कारू(पका? त्का)रुशब्दाभ्या(मु)दन्ताभ्यामयं प्रत्ययः (जरत्कारुषुन्निशब्दः?।) ततः प्राग्जितीय एवाणास्ति। हास्तिपादः। कापिञ्जलः। कौण्डोपरथः। ब्राह्मगुप्तः। खार्जूरकर्णः। मायूरकर्णः॥

नै[2]श्च विश्रवसो विश्लोपश्च वा॥ ९०॥

विश्रवश्शब्दादपत्यमात्रेऽण्प्रत्ययो भवति। तत्सन्नियोगेन सस्य नकारागमो भवति। पक्षे विश् इत्येतस्याद्यवयवस्य लोपो भवति। विश्रवसोऽपत्यं वैश्रवणः। विश्लोपपक्षे रावणः॥

द्व्यचो नद्याः॥ ९१॥

नदीवाचका ये द्व्यचस्तेभ्योऽपत्यमात्रेऽण् भवति। सन्ध्या सान्ध्यः। कुला कौलः। ढग्बाधनार्थं वचनम्॥

विपाशगङ्गाभ्याम्॥ ९२॥

विपाशगङ्गाभ्यामपत्येऽण् भवति। विपाशशब्दस्य कुञ्जादित्वात् फ्यञा, गङ्गाशब्दस्य शुभ्रादित्वाड्ढका तिकादिफिञा च समावेशार्थं वचनम्। वैपाशः। वैपाशायन्यः। गाङ्गः। गाङ्गेयः। गाङ्गायनिः॥

त्रिवेण्यास्त्रिवि[3]णं च॥ ९३॥

---

१. 'मिसु' क. पाठः. २. 'ण', ३. 'वणश्च।' ख. ग. पाठः

त्रिवेणीशब्दादपत्येऽण् भवति। त्रिवेणीशब्दस्त्रिविणं चादेशं प्राप्नोति। त्रैविणः॥

मानुष्याश्चावृद्धनाम्नः॥ ९४॥

मानुष्याश्च नद्याश्च यानि नामानि अवृद्धानि तेभ्योऽपत्यमात्रेऽण् भवति। ढकोऽपवादः। मानुषीनाम्नस्तावत्—शिक्षिताया अपत्यं शैक्षितः। चैकिकः। नदीनाम्नः—यमुनाया अपत्यं यामुनः। ऐरावतः। नार्मदः। अवृद्धादिति किम्। चान्द्रभाग्याया अपत्यं चान्द्रभागेयः। जाह्नवेयः। मानुष्याश्चेति किम्। सौ(व?प)र्णेयः। वैनतेयः। मानुष्या नद्याश्च नाम्न इति किम्। शोभनाया अपत्यं शौभनेयः॥

[1]क्रुञ्चाकोकिलाभ्याम्॥ ९५॥

क्रुञ्चाकोकिलाशब्दाभ्यामपत्येऽण् भवति। (फ? ढ)कोऽपवादः। क्रौञ्चः। कौकिलः॥

ऋषिकुरुवृष्ण्यन्धकेभ्यः॥ ९६॥

ऋषयो वसिष्ठादयः। कुरवः वृष्णयः अन्धकाश्चेति वंशाख्याः। ऋष्यादिवचनेभ्योऽण्प्रत्ययो भवत्यपत्ये। इञोऽपवादः। (शुभ्रा? अन्या)-दिभ्यः परत्वात् ढगादिभिरेव भवितव्यम्। ऋषिभ्यस्तावद्—वासिष्ठः वैश्वामित्रः। कुरुभ्यः—नाकुलः साहदेवः। वृष्णिभ्यो वासुदेवः आनिरुद्धः। अन्धकेभ्यः—श्वाफल्कः माधकः॥

मातुरुत् सङ्ख्यासंभद्रपूर्वायाः॥ ९७॥

मातृशब्दात् सङ्ख्यापूर्वात् सम्पूर्वाद् भद्रपूर्वाच्च अपत्येऽण् भवति, उकारश्चान्तादेशः। द्वयोर्मात्रोरपत्यं द्वैमातुरः। त्रैमातुरः। सांमातुरः। भाद्रमातुरः। उकारादेशार्थं वचनम्। प्रत्ययः पुनरौत्सर्गिकः सिद्ध एव।

---

1. ?. 'क्रौ' क. पाठः.

स्त्रीलिङ्गनिर्देशोऽर्थापेक्षः । तेन धान्यादिमा(त्रग्र ? तुर्ग्र)हणं न भवति । सङ्ख्यासम्भद्रपूर्वाया इति किम् । सौमात्रः । शुभ्रादिपाठाद् वैमात्रेयः ॥

## कन्यायाः कनीन च ॥ ९८ ॥

कन्याशब्दादपत्येऽण् भवति । ढकोऽपवादः । तत्सन्नियोगेन चास्य कनीनशब्द आदेशो भवति । कन्याया अपत्यं कानीनः ॥

## शुङ्गच्छगलविकर्णेभ्यो भारद्वाजात्रेयवात्स्येषु ॥ ९९ ॥

शुङ्गच्छगलविकर्णशब्देभ्यो यथासङ्ख्यं भारद्वाजात्रेयवात्स्येष्वपत्यविशेषेष्वण् भवति । शौङ्गो भवति भारद्वाजश्चेत् । शौङ्गिरन्यः । छागलो भवत्यात्रेयश्चेत् । छागलिरन्यः । वैकर्णो भवति वात्स्यश्चेत् । वैकर्णिरन्यः । शुङ्गाशब्दादपि ये मन्यन्ते ढकं, ते प्रत्युदाहरन्ति शौङ्गेय इति । द्वयमपि प्रमाणम् ॥

## शाल्वापीलाभ्यां वा ॥ १०० ॥

शाल्वापीलाशब्दाभ्यामपत्येऽण् भवति वा । 'द्व्यच' इति ढकि प्राप्ते पक्षेऽण् विधीयते । शाल्वः शाल्वेयः पैलः । पैलेयः ॥

## मण्डूकाड्ढक् च ॥ १०१ ॥

मण्डूकशब्दादपत्ये ढक् भवति । चकारादण् वा । तेन त्रैरूप्यम् । माण्डूकेयः । माण्डूकः । माण्डूकिः ॥

## ङ्याबूङः ॥ १०२ ॥

ङ्यन्तादावन्तादूङन्ताच्च प्रातिपदिकादपत्ये ढग् भवति । भागीरथेयः । वैनतेयः । यौवतेयः । कामण्डलेयः । ङ्याबूङ इति विशेषणादन्यत्र दरदोऽपत्यं दारदः । ऐडविडः ॥

## द्व्यचः ॥ १०३ ॥

ङ्यन्तादावन्तादूङन्ताच्च द्व्यचः प्रातिपदिकादपत्ये ढग् भवति । 'मानुष्याश्चावृद्धनाम्नः' इति प्राप्तस्याणोऽपवादः । नादेयः । दात्तेयः । गौसेयः ॥

---

१. 'सचापि' ख. ग. पाठः.

इतोऽनिञः ॥ १०४ ॥

ङ्याबूङ इति निवृत्तम् । इत इत्यस्य विशेषणं द्व्यच इति वर्तते । इकारान्तात् प्रातिपदिकादनिञन्तादपत्ये ढक्प्रत्ययो भवति । आत्रेयः । दैतेयः । इत इति किम् । दाक्षिः । प्लाक्षिः । अनिञ इति किम् । दाक्षायणः । द्व्यच इत्येव । मरीचेरपत्यं मारीचः ॥

शुभ्रविष्टपुरब्रह्मकृतशरद्वतशला(म ? म्यला)णीवप्रवाहणभरत[2]भरमकर्पूरेतर[3]ान्यतराजिराश्वतुर्द[4]गोदन्तेभ्यः ॥ १०५ ॥

शुभ्रादिभ्यः प्रातिपदिकेभ्योऽपत्ये ढग् भवति । इञोऽपवादः । शुभ्रस्यापत्यं शौभ्रेयः । वैष्टपुरेयः । ब्राह्मकृतेयः । शारद्वतेयः । शालाम्यलेयः । आणीवेयः । प्रावाहणेयः । भारतेयः । भारमेयः । कार्पूरेयः । ऐतरेयः । (आन्यतरेयः) । आजिरेयः । आश्वेयः । तौ(मे ? देयः) । गौदन्तेयः ॥

कुशाम्बविभ्रविशशालूकदेवतरालीढसुदत्तसुदक्षवायुदत्ताक[5]शापशकलखदूरकशु[6]कशुक्रो[7]ग्रजीवेभ्यः ॥ १०६ ॥

कुशाम्बादिभ्योऽपत्ये ढग् भवति । इञोऽपवादः । कौशाम्बेयः । वैभ्रेयः । वैशेयः । शालूकेयः । दैवतरेयः । आलीढेयः । सौदत्तेयः । सौदक्षेयः । वायुदत्तेयः । आकशापेयः । शाकलेयः । खादूरकेयः । शौकेयः । शौक्रेयः । औग्रेयः । जैवेयः ॥

कद्रुपाण्डुमृकण्डुयमष्टुमकष्टुकर्षूलेखाभ्रूशलाकाभ्रूशकुनिशकन्ध्यानिधिपरिधिविश्रयतिथ्यनुदृष्टयजवस्तिभ्यः ॥ १०७ ॥

कद्रुप्रभृतिभ्योऽपत्ये ढग् भवति । कद्रोरपत्यं काद्रवेयः । यस्तु संज्ञायाम् ऊङन्तः कद्रूशब्दस्ततो 'ङ्याबूङ' इत्यनेनैव ढक् । पाण्डोरपत्यं पाण्डवेयः । शुभ्रादेराकृतिगणत्वात् पाण्डवशब्दादपीष्यते । पाण्डवेयः । मार्कण्डेयः । कथं मार्कण्डः । मृकण्ड इति प्रकृत्यन्तरमस्ति । तस्मादण्याणि

१. 'शतद्वारशलथलावणी' ख. ग. पाठः. २. 'मकभ', ३. 'राजि' क. पाठः. ४. 'न्द'. ५. 'कं' ख. ग. पाठः, ६. 'कि', ७. 'को', ८. 'भ्रूव' क. पाठः.

भवति । यामष्टेयः । माकष्टेयः । कार्पेयः । लैखाभ्रेयः । शालाकाभ्रेयः । शाकुनेयः । शाकन्धेयः । आनि(से ? धे)यः । पारि(से ? धे)यः । वैश्रेयः । आतिथेयः । आनुदृष्टेयः । आजवस्तेयः ॥

गङ्गागोधाविधवाशलाकाकुमारिकाकिशोरिकाकुबेरिकाम्बिकाशोकाकुकसाकुकलासाखडोन्मत्तागन्धपिङ्गलाधर्मिणीरुक्मिणीरोहिणीभ्यः ॥ १०८॥

गङ्गादिभ्योऽपत्ये ढग् भवति । गङ्गाया अपत्यं गाङ्गेयः । गोधाशब्दोऽत्र पठ्यते वक्ष्यमाणेन ढ्रकास्य बाधो मा भूदिति । गौधेयः । गौधेरः । विधवाशब्दस्य पाठः अनियतपुंस्कत्वेन प्राप्तस्य ढ्रकोऽपवादार्थः । वैधवेयः । शालाकेयः । कौमारिकेयः । कैशोरिकेयः । कौबेरिकेयः । आम्बिकेयः । आशोकेयः । कार्कसेयः । कार्कलासेयः । खाडोन्मत्तेयः । गान्धपिङ्गलेयः । धार्मिणेयः । रौक्मिणेयः । रौहिणेयः ॥

श्वन्नश्मन्सुनामन्सुदामञ्जरतिन्बलीवर्दिञ्जिह्वाशिन्दिक्सुवक्षोविमातृमृन्मृद्वादिभ्यः ॥ १०९ ॥

श्वन्नित्येवमादिभ्योऽपत्ये ढग् भवति । शुनोऽपत्यं शौनेयः । आश्मेयः । सौनामेयः । सौदामेयः । जारतेयः । बालीवर्देयः । जैह्वाशिनेयः । अत्र टिलोपाभावः । दैशेयः । सौवक्षसेयः । वैमात्रेयः । मार्देयः । तथा मृदोर्मार्देयः ॥

लक्षणश्यामयोर्वासिष्ठे[2] ॥ ११० ॥

लक्षणश्यामशब्दयोर्वासिष्ठेऽपत्यविशेषे ढग् भवति । लाक्षणेयो भवति वासिष्ठश्चेत् । लाक्षणिरन्यः । श्यामेयो भवति वासिष्ठश्चेत् । श्यामायनोऽन्यः ॥

बडबाया वृषे ॥ १११ ॥

बडबाशब्दादपत्योत्पादनसमर्थे अपत्यविशेषे अभिधेये ढग् भवति । वाडवेयो भवति वृषश्चेत् । अपत्यमात्रे तु बाडवः । आबन्तत्वाद् ढकि सिद्धे वृष एवेति नियमादन्यत्राणेव भवति ॥

---

१. 'व' ख. ग. पाठः. २. 'व' ख. ग. पाठः.

विकर्णकुषीतकात् काश्यपे ॥ ११२ ॥

विकर्णशब्दात् कुषीतकशब्दाच्च काश्यपेऽपत्यविशेषे ढग् भवति । वैकर्णेयः, कौषीतकेयः काश्यपः । काश्यप इति किम् । वैकर्णिः। कौषीतकिः ॥

भ्रुवो वुक् च ॥ ११३ ॥

भ्रूशब्दादपत्ये ढग् भवति। तत्सन्नियोगेन चास्य वुगागमः। भ्रौवेयः॥

कल्याणिसुभगादुर्भगाबन्धकीजरतीबलीबर्दीज्येष्ठा-कनिष्ठामध्यमापरस्त्र्यनुसृष्ट्यनुदृष्टीनामिनङ् च ॥ ११४ ॥

कल्याण्यादीनां शब्दानामपत्ये ढक्प्रत्ययो भवति । तत्सन्नियोगेनै-तेषामन्त्यस्येनङादेशः । ङीप्प्रत्ययान्तानामिनङादेशार्थं वचनं, प्रत्ययस्य सिद्धत्वात् । अन्येषामुभयार्थम्। काल्याणिनेयः । सौभागिनेयः । दौर्भागि-नेयः । अनयोरुभयपदवृद्धिः। बान्धकिनेयः । जारतिनेयः। बालीवर्दिनेयः। ज्यैष्ठिनेयः । कानिष्ठिनेयः । माध्यमिनेयः । पारस्त्रैणेयः । उभयपदवृद्धिः । आनुसृष्टिनेयः । आनुदृष्टिनेयः ॥

कुलटाया वा ॥ ११५ ॥

कुलान्यटतीति कुलटा। कुलटाशब्दादपत्ये ढग् भवति । तत्सन्नियो-गेन चास्येनङादेशो वा भवति । आदेशार्थं वचनम् । प्रत्यय(स्यात्?)-स्त्वाबन्तत्वादेव सिद्धः। कौलटिनेयः कौलटेयः । (यत्तु? या) तु कुला-न्यट(न्ति? न्ती) शीलं भिनत्तीति कुलटा, ततः शीलहीनत्वेनाङ्गहीनत्वे परत्वाद् ढ्रक् । कौलटेरः ॥

चटकादैरक् ॥ ११६ ॥

चटकशब्दादपत्ये ऐरक्प्रत्ययो भवति । चटकस्यापत्यं पुमान् चाटकैरः । तथा लिङ्गविशिष्टग्रहणाच्चटकाया अपत्यं चाटकैरः ॥

लुक् स्त्रियाम्॥ ११७॥

चटकाशब्दादुत्पन्नस्यैरक्प्रत्ययस्य स्त्रियां लुग् भवति । चटकाया अपत्यं स्त्री चटका। 'लुक् तद्धितलुकि' इति स्त्रीप्रत्ययस्य लुकि कृते पु(न)-ष्टाप् कर्तव्यः ॥

## जाण्डपाण्डादारक् ॥ ११८ ॥

जाण्डपाण्डशब्दाभ्यामारक्प्रत्ययो भवत्यपत्ये । जाण्डारः । पाण्डारः ॥

## गोधाया ढ्रक् च ॥ ११९ ॥

गोधाशब्दादपत्ये ढ्रक्प्रत्ययो भवति । चकारादारक् च । गौधेरः । गौधारः । शुभ्रादिपाठाद् गौधेय इत्यपि भवति ॥

## अनियतपुंस्काङ्गहीनाभ्यो वा ॥ १२० ॥

ढ्रगनुवर्तते, नारक् । अर्थधर्मेण तदभिधायिन्यः प्रकृतयो निर्दिश्यन्ते । अनियतपुंस्काभ्योऽङ्गहीनाभ्यश्चापत्ये ढ्रक्प्रत्ययो भवति । शलिहीना अप्यङ्गहीना उच्यन्ते । दासेरः दासेयः । काणेरः काणेयः । कौलटे(यः ? रः) । कौलटेयः ढकोऽपवादः ॥

## भ्रातुर्व्यत् ॥ १२१ ॥

भ्रातृशब्दादपत्ये व्यत्प्रत्ययो भवति । भ्रातृव्यः । तकारः स्वरार्थः ॥

## व्यन् सपत्ने ॥ १२२ ॥

सपत्नः शत्रुः । भ्रातृशब्दात् सपत्नेऽभिधेये व्यन्प्रत्ययो भवति । समुदा(यो ? ये)न चेदमित्रः सपत्न उच्यते । अपत्यार्थोऽत्र नास्त्येव । भ्रातृव्यः कण्टकः ॥

## छश्च ॥ १२३ ॥

अपत्य इत्येवानुवर्तते, प्रकृतत्वात् । भ्रातृशब्दादपत्ये छप्रत्ययो भवति । अणोऽपवादः । भ्रात्रीयः ॥

## स्वसुः ॥ १२४ ॥

स्वसृशब्दादपत्ये छप्रत्ययो भवति । स्वस्रीयः । योगविभाग उत्तरार्थः ॥

## पितृमात्रादेश्छण् ॥ १२५ ॥

पितृपूर्वान्मातृपूर्वाच्च स्वसृशब्दादपत्ये छण्प्रत्ययो भवति । पैतृष्वस्रीयः । मातृष्वस्रीयः ॥

ढग् लोपश्च ॥ १२६ ॥

पितृमात्रादेः स्वसृशब्दादपत्ये ढक्प्रत्ययो भवति। तत्सन्नियोगेन चान्त्यस्य लोपः। पैतृष्वसेयः। मातृष्वसेयः। 'पितृमातृभ्यां स्वसुश्च' इति षत्वम् ॥

क्षत्राज्जातौ घः ॥ १२७ ॥

क्षत्रशब्दादपत्ये जातौ घप्रत्ययो भवति। क्षत्रियो भवति जातिश्चेत्। क्षात्रिरन्यः ॥

राज्ञो यत् ॥ १२८ ॥

राजन्छब्दादपत्ये जातौ यत्प्रत्ययो भवति। (जातिश्चेत्?) राजन्यो भवति क्षत्रियजातिश्चेत्। ये 'चाभावकर्मणोः' इति प्रकृतिभावः। अन्यो राजनः। 'अन्' इति प्रकृतिभावः ॥

श्वशुरात् ॥ १२९ ॥

पृथग्योगात् जाताविति न वर्तते। श्वशुरशब्दादपत्ये यत्प्रत्ययो भवति। श्वशुर्यः। मातृस्वस्रादिवत् श्वशुरशब्दः सम्बन्धिवचनो गृह्यते। तेनेह न भवति—श्वशुरो नाम कश्चित्। तस्यापत्यं श्वाशुरिः ॥

कुलाड्ढकञ् च ॥ १३० ॥

कुलशब्दादपत्येऽभिधेये ढकञ्प्रत्ययो भवति। चकाराद् यच्च। कुल्यः। कौलेयकः ॥

खः सपूर्वाच्च ॥ १३१ ॥

कुलशब्दात् सपूर्वशब्दाच्चकारात् केवलाच्च खप्रत्ययो भवति। आढ्यकुलीनः। क्षत्रियकुलीनः। कुलीना ॥

दुष्कुलाड्ढग् वा ॥ १३२ ॥

दुष्कुलशब्दादपत्ये ढक्प्रत्ययो वा भवति। पक्षे खश्च। दौष्कुलेयः। दुष्कुलीनः ॥

महाकुलादञखञौ ॥ १३३ ॥

महाकुलशब्दादपत्ये ञञ् खञ् इत्येतौ प्रत्ययौ भवतः । वाग्रहणा-नुवृत्तेः खश्च । माहाकुलः । माहाकुलीनः । महाकुलीनः ॥

चतुष्पाद्भ्यो ढञ् ॥ १३४ ॥

चत्वारः पादा आसामिति चतुष्पादः । तदभिधायिनीभ्यः प्रकृतिभ्योऽपत्ये ढञ्प्रत्ययो भवति । अणादीनामपवादः । कमण्डलोरपत्यं कामण्डलेयः । शैतिबाहेयः । जाम्बेयः । सौरभेयः ॥

गृष्टिहृष्टिहलिबलिविश्रिकुद्रथजवस्तिमित्रयुभ्यः ॥ १३५ ॥

गृष्ट्यादिभ्यः शब्देभ्योऽपत्ये ढक्प्रत्ययो भवति । अणादीनामपवादः । गार्ष्टेयः । हार्ष्टेयः । हालेयः । वालेयः । वैश्रेयः । कौद्रेयः । आजवस्तेयः । मैत्रेयः । गृष्टिशब्दः चतुष्पाद्वचनः । पूर्वेणैव सिद्धे अचतुष्पादर्थं वचनम् ॥

रेवतीकुक्कुटाक्षवृकबन्धिभ्यष्ठक् ॥ १३६ ॥

रेवत्यादिभ्योऽपत्ये ठक्प्रत्ययो भवति । यथायोगं ढगादीनामपवादः । रैवतिकः । कौक्कुटाक्षिकः । वार्कबन्धिकः ॥

अश्वमणिद्वारेभ्यः पाल्याः ॥ १३७ ॥

अश्वादिभ्यः परस्मात् पालिशब्दादपत्ये ठक्प्रत्ययो भवति । आश्वपालिकः । माणिपालिकः । दौवारपालिकः ॥

(व्रत ? वृक)कर्णदण्डेभ्यो ग्रा(ह्या ? हा)त् ॥ १३८ ॥

वृकादिभ्यः परस्माद् ग्रा(ह्या ? ह)शब्दादपत्ये ठक्प्रत्ययो भवति । वार्कग्राहिकः । कार्णग्राहिकः । दा(ण्डि ? ण्ड)ग्राहिकः ॥

पौत्रादेः स्त्रियाः कुत्सिते णश्च ॥ १३९ ॥

पौत्रादपत्यप्रत्ययान्तात् स्त्र्यभिधायिनः शब्दाद् अपत्ये कुत्सिते णप्रत्ययो भवति । चकारात् ठक् च । पितुरप्रसिद्धौ मात्रा व्यपदेशो अपत्यस्य कुत्सा । गार्ग्या अपत्यं गुर्वायत्तं कुत्सितं गार्गः जाल्मः । गार्गिको जाल्मः । (ग्लौ ? ग्लु)चुकायन्या अपत्यं ग्लौचुकायनः । ग्लौचुकायनिकः । पौत्राद् गुर्वायत्त एवेमौ प्रत्ययौ । पौत्रादेरिति किम् । कार्मिकेयो जाल्मः । स्त्रिया इति किम् । औपगविर्जाल्मः । कुत्सित इति किम् । गार्गेयो माणवकः ॥

---

१ 'श्र' क. पाठः. २. 'पडे बाकयापे' ख. पाठः.

भागवित्तितार्णबिन्दवाकशापेयेभ्यः सौवीरेषु ठग्वा ॥ १४० ॥

सौवीरेष्विति प्रकृतिविशेषणम् । भागवित्त्यादिभ्यः सौवीरविषयेभ्यः कुत्सितेऽपत्ये ठक्प्रत्ययो (वा) भवति । भागवित्तिरिञन्तः, तस्यापत्यं भागवित्तिको जाल्मः । पक्षे भागवित्तायनः । 'यञिञ्भ्याम्' इति फक् । तृणबिन्दोरपत्यं तार्णबिन्दविः । तस्यापत्यं तार्णबिन्दविको जाल्मः । पक्षे तार्णबिन्दविः । अकशापः शुभ्रादिः । आकशापेयस्तस्यापत्यमाकशापेयिको जाल्मः । पक्षे आकशापे(यः ? यिः) । सौवीरेभ्यः कुत्सितादन्यत्र भागवित्तायनो माणवकः । पुनष्ठग्ग्रहणं णप्रत्ययनिवृत्त्यर्थम् ॥

यामुन्दायनिसौयामायनिवार्ष्यायणिभ्यश्छश्च ॥ १४१ ॥

यामुन्दायन्यादिभ्यः सौवीरविषयेभ्यः कुत्सितेऽपत्ये छप्रत्ययो भवति । चकारात् ठक् च । यामुन्दायनेरपत्यं यामुन्दायनीयो जाल्मः, यामुन्दायनिकः । सौयामायनीयो जाल्मः, सौयामायनिकः । वार्ष्यायणीयो जाल्मः, वार्ष्यायणिकः । सौवीरेभ्यः कुत्सितादन्यत्राणेव । तस्य लुक् । यामुन्दायनेरपत्यं यामुन्दायनिः ॥

फाण्टाहृतेर्णफिञौ ॥ १४२ ॥

सौवीरेष्वित्येव । कुत्सित इति निवृत्तम् । फाण्टाहृतिशब्दात् सौवीरविषयादपत्ये णफिञौ प्रत्ययौ भवतः । फकोऽपवादः । फाण्टाहृतेरपत्यं फाण्टाहृतः । फाण्टाहृतायनिः । सौवीरेष्विति किम् । फाण्टाहृतायनः । 'यञिञ्भ्यामि'(ञि ? ति) फक् ॥

मिमतात् ॥ १४३ ॥

मिमतशब्दात् सौवीरविषयादपत्ये णफिञौ भवतः । फकोऽपवादः । मैमतः मैमतायनिः । सौवीरेष्वित्येव । मैमतायनः । नडादित्वात् फक् ॥

कुरुशकन्धुशङ्कुकर्तृभर्तृपितृमद्वाक्तक्षन्कापिञ्जलादिधार्तकीन्द्रजालिदामोष्णीषिभ्यो ण्यः ॥ १४४ ॥

सौवीरेष्विति निवृत्तम् । कुरुप्रभृतिभ्यः शब्देभ्योऽपत्ये ण्यप्रत्ययो भवति । कौरव्यः । ननु । 'कुरुनकारादिभ्यो ण्यः' इति कुरुशब्दादपत्येऽपि ण्यप्रत्ययो भवति । सत्यम् । स तु क्षात्रियात् तद्राजसंज्ञकस्तस्य च बहुषु लुक् कुरवः इति । अयं तु बहुषु श्रूयत एव कौरव्या इति । कौरव्यशब्दस्य क्षात्रियवचनस्य तिकादिपाठात् फिञपि भवति । कौरव्यायणिः । शकन्धोः शाकन्धव्यः । शङ्कोः शाङ्कव्यः । बहुषु शाङ्कव्याः । शाङ्कव्या स्त्री । पौत्रादौ तु य इञ् तस्य बहुषु लुक् । शङ्कवः । तदन्तात् स्त्रियां ष्फः । शाङ्क(ल्या ? व्या)यनी । कर्तुः कार्त्यः । भर्तुः भार्त्यः । (यौ ? पै)तृमत्यः । वाच्यः । ताक्षण्यः । कापिञ्जलाद्यः । धातक्यः । ऐन्द्रजाल्यः । दामोष्णीष्यः ॥

कविमतिपीलाशलाकैरकेज्येहिकेशिनीभ्यः ॥ १४५ ॥

कविप्रभृतिभ्योऽपत्ये ण्यप्रत्ययो भवति । कवेरपत्यं काव्यः । मात्यः । पैल्यः । शैलाक्यः । ऐरक्यः । ऐज्यः । ऐह्यः । केशिन्या अपत्यं कैशिन्यः । स्त्रीप्रत्ययनिर्देशसामर्थ्यात् (न) पुंवद्भावः ॥

शुभ्राभ्रदभ्रमुरपुरकिशोरगर्गराजमारमद्गुषचपथद्दकेनवेनमूढकुडहृदिकशालीनेभ्यः[2] ॥ १४६ ॥

शुभ्रादिभ्योऽपत्ये ण्यप्रत्ययो भवति । शुभ्रस्यापत्यं शौभ्र्यः । आभ्र्यः । दाभ्र्यः । मौर्यः । पौर्यः । कैशोर्यः । गार्ग्यः । भाजमार्यः । माद्गुष्यः । चा(फक ? पथ) द्दक्यः । ऐन्यः । वैन्यः । मौढ्यः । कौड्यः । हार्दिक्यः । शा(लि ? ली)न्यः ॥

कर्णरथपथिसत्यंबडभीबृहतीभ्यः कारात् ॥ १४७ ॥

कर्णादिभ्यः परस्मात् कारशब्दादपत्ये ण्यप्रत्ययो भवति । कार्णकार्यः । राथकार्यः । रथकारशब्दोऽत्र जातिवचनः । त्रैवर्णिकेभ्यः किञ्चि-

---

१, 'तु' क. पाठः. २. 'भ्यः बोच्छन्दस्योदन्येकर्ण' ख. पाठः.

न्न्यूना रथकारजातिः । कारुवचनाद् रथकारशब्दाद् वक्ष्यमाणसूत्रेणैव ण्यः । पाथिकार्यः । सात्यंकार्यः । वाडभीकार्यः । बार्हतीकार्यः ॥

वान्तार्द्राभ्यां वृक्षात् ॥ १४८ ॥

वान्तार्द्रशब्दाभ्यां परस्माद् वृक्षशब्दादपत्ये ण्यप्रत्ययो भवति । वान्तवृक्ष्यः । आर्द्रवृक्ष्यः ॥

श्यावात् पुत्ररथाभ्याम् ॥ १४९ ॥

श्यावशब्दात् पराभ्यां पुत्ररथशब्दाभ्यामपत्ये ण्यप्रत्ययो भवति । श्यावपुत्र्यः । श्यावरथ्यः ॥

शूर्पाच्च नायात् ॥ १५० ॥

शूर्पशब्दाच्छ्यावशब्दाच्च परस्मान्नायशब्दादपत्ये ण्यप्रत्ययो भवति । शौर्पणाय्यः । श्यावनाय्यः ॥

विराजकादिञः ॥ १५१ ॥

विराजकशब्दादिञन्तादपत्ये गुर्वायत्ते स्त्रीवर्जिते ण्यप्रत्ययो भवति । फिञोऽपवादः । वैराजकेरपत्यं वैराजक्यः ॥

सम्राजः क्षत्रिये ॥ १५२ ॥

संरा(ज ? ट्)शब्दादपत्ये क्षत्रिये ण्यप्रत्ययो भवति । साम्राज्यः क्षत्रियश्चेत् । सांराजोऽन्यः ॥

वामरथा(वश ? च्छ)कलादियञ्वत् स्वरवर्जम् ॥ १५३ ॥

वामरथशब्दादपत्ये ण्यप्रत्ययो भवति । तस्य शकलादियञ इव सर्वं कार्यं लुगादिकमतिदिश्यते, स्वरं वर्जयित्वा । वामरथ्यः । बहुषु लुक् । वामरथाः । स्त्रियां ङीष् । वामरथी । ष्फो वा । वामरथ्यायनी । वामरथस्यापत्यं गुर्वायत्तं वामरथ्यायनः । 'यञिञ्भ्याम्' इति फक् । वामरथस्य छात्राः वामरथाः । (वामरथानि) सङ्घाङ्कघोषलक्षणानि । स्वरस्तु प्रत्ययस्यैव भवति नातिदेशिकमाद्युदात्तत्वम् ॥

**सेनान्तकारुलक्षणेभ्य इण् च ॥ १५४ ॥**

सेनान्तात् प्रातिपदिकात् कारुवचनेभ्यो लक्षणशब्दाच्चापत्ये इण् प्रत्ययो भवति । चशब्दाण्ण्यश्च । हारिषेणिः । हारिषेण्यः । तान्तुवायिः । तान्तुवाय्यः । वार्धकिः । वार्धक्यः । लाक्षणिः । लाक्षण्यः ॥

**तिककितवसैन्धवशुभामित्रदेवरथनीडयज्ञयमुन्दोरसारथ्यलङ्कवेभ्यः फिञ् ॥ १५५ ॥**

तिकादिभ्योऽपत्ये फिञ्प्रत्ययो भवति । तैकायनिः । कैतवायनिः । सैन्धवायनिः । शौभायनिः । (आमित्रायणिः) । दैवरथायनिः । नैडायनिः । याज्ञायनिः । यामुन्दायनिः । उरसस्यापत्यम् औरसायनिः । आरथ्यायनिः । लाङ्कवायनिः ॥

**बालभीतग्राम्यरूप्यवरेण्योतथ्योदन्योरश्चन्द्रमस्सुयामन्सुपामन्ध्वजवद्भ्यः ॥ १५६ ॥**

बालादिभ्यः शब्देभ्योऽपत्ये फिञ्प्रत्ययो भवति । बालायनिः । भैतायनिः । ग्राम्यायणिः । रौप्यायणिः । वारेण्यायनिः । औत(स्या ? थ्या)-यनिः । औदन्यायनिः । उरसोऽपत्यम् औरसायनिः । चान्द्रमसायनिः । सौयामायनिः । सौपामायनिः । ध्वाजवतायनिः ॥

**तैतिलजाजलक्षैजयतसैकयतचौपयतचैटयतौरसकौरव्यगौकक्ष्यशाट्यभौरिकिभौलिकेभ्यः ॥ १५७ ॥**

तैतिलादिभ्योऽपत्ये फिञ् भवति । तैतिलायनिः । जाजलायनिः । क्षैजयतायनिः । सैकयतायनिः । चौपयतायनिः । चैटयतायनिः । औरसस्यापत्यम् औरसायनिः । कौरव्यायणिः । कौरव्यशब्दोऽत्र क्षत्रियवचनः, औरसशब्देन क्षत्रियप्रत्ययान्तेन साहचर्यात् । यस्तु कुर्वादिण्यप्रत्ययान्तस्तत इञेव भवति । तस्य च लुक् । कौरव्यः पिता । कौरव्यः पुत्रः । गौकक्ष्यायणिः । शाट्यायनिः । भौरिकायनिः । भौलिकायनिः ॥

**गङ्गासंज्ञाखाशिखावह्यकाखल्वकाशल्यकालोमकाबसुकुरुभ्यः ॥ १५८ ॥**

गङ्गादिभ्योऽपत्ये फिञ् भवति । गाङ्गायनिः । साङ्गायनिः । औखायनिः । शैखायनिः । वाह्यकायनिः । खाल्वकायनिः । शाल्यकायनिः । लौमकायनिः । वासवायनिः । कौरवायणिः ॥

दगुकोसलकर्मारच्छागवृषेभ्यो युट् च ॥ १५९ ॥

दग्वादिभ्योऽपत्ये फिञ् भवति युडागमश्च । दागव्यायनिः । कौसल्यायनिः । (अ)क्षत्रियवचनोऽयं कोसलशब्दः । क्षत्रियवचनात्तु 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' इति ञ्यङेव भवति । कार्मार्यायणिः । कारुविहितमिञं ण्यञ्च बाधते । छाग्यायनिः । वा(र्षभ्या ? र्ष्या)यणिः ॥

द्व्यचोऽणः ॥ १६० ॥

द्व्यच्कादणन्तादपत्ये फिञ् भवति । इञोऽपवादः । कर्तुरपत्यं कार्त्रः, तस्यापत्यं कार्त्रायणिः । शिवाद्यण् । अण इति किम् । दाक्षायणः । द्व्यच इति किम् । औपगविः ॥

त्यदादिभ्यो वा ॥ १६१ ॥

त्यदादिभ्यः शब्देभ्योऽपत्ये फिञ्प्रत्ययो वा भवति । त्यादायनिः । त्यादः । यादायनिः । यादः । अणेव प्राप्तः ॥

वृद्धादगोत्रात् ॥ १६२ ॥

गर्गादिवत् प्रसिद्धं गोत्रम् । ततोऽन्यस्माद् वृद्धसंज्ञकादपत्ये फिञ्प्रत्ययो वा भवति । आम्रगुप्तायनिः । आम्रगुप्तिः । ग्रामरक्षायणिः । ग्रामरक्षिः । रैवन्तायनिः । रैवन्तिः । नौवाहायनिः । नौवाहिः । कारुवाचिनोऽ(ना ?)नेन स्वविषये परत्वात् फिञ् । नापितायनिः । नापितिः । वृद्धादिति किम् । याज्ञदत्तिः । अगोत्रादिति किम् । औपगविः ॥

वाकिनगारेधकार्कट्यकाकलङ्कचर्मिवर्मिभ्यः कुट् च ॥ १६३ ॥

वाकिनादिभ्योऽपत्ये वा फिञ् भवति । कुट् चास्यागमः । यदिह वृद्धमगोत्रं (श)ब्द(कूप ? रूपं) तस्यागमार्थमेव ग्रहणम् । अन्येषामुभयार्थम्

वाकिनकायनिः वाकिनिः । गारेधकायनिः । कार्कव्यकायनिः । का(र्क ?-ककाय)निः । लाङ्ककायनिः । चार्मिकायाणिः । वार्मिकायणिः । पक्षे गारे-धिरित्यादि ॥

पुत्रान्ताद्वा ॥ १६४ ॥

पुत्रान्तं च न गोत्रमिति पूर्वेणैव प्रत्ययः सिद्धः । तस्मिन्ननेन कुडागमो वा विधीयते । पुत्रान्तात् (प्रत्ययाद् ? प्रातिपदिकात्) यः फिञ्-प्रत्ययः तस्मिन् परभूते वा कुडागमो भवति । पु(त्रः त ? त्रान्त)स्य त्रैरूप्यम् । गार्गीपुत्रकायणिः गार्गीपुत्रायणिः गार्गीपुत्रिः ॥

अवृद्धात् फिन् बहुलम् ॥ १६५ ॥

अ(पुत्र ? वृद्ध)शब्दरूपादगोत्रादपत्ये फिन्प्रत्ययो बहुलं भवति । ग्लुचुकायनिः । ग्लौचुकिः । अवृद्धादिति किम् । राजदन्तिः । बहुलग्रहणं वैचित्र्यार्थम् । तेन क्वचिन्न भवत्येव । दाक्षिः । प्लाक्षिः ॥

मनोरण् ॥ १६६ ॥

मनुशब्दाज्जातावण्प्रत्ययो भवति । मानवः । मान(वि ? वी) ॥

नश्च णः कुत्सायाम् ॥ १६७ ॥

(अ ? म)नुशब्दादपत्ये कुत्सायाम(न् ? ण्)प्रत्ययो नकारस्य च णकार आदेशो भवति । माणव(क ?)ः । अनधीतवेदत्वादज्ञो मूढः प्रतिषिद्धा-चारो वा कुत्सितो यः स ब्राह्मणजातीयो माणव इत्युच्यते ॥

जातौ यत् षुक् च ॥ १६८ ॥

(अ ? म)नुशब्दाद् यत्प्रत्ययो भवति षुक् चागमः समुदायेन चेज्जातिर्गम्यते । मनुष्यः ॥

अञ् ॥ १६९ ॥

जातौ षुक् चेत्यनुवर्तते । मनुशब्दाज्जातावञ्प्रत्ययो भवति । षुक् चागमः । मानुषः । मनुष्यमानुषौ जातिशब्दौ । अपत्यार्थोऽत्र नास्त्येव । ततश्च मानुषाः इति बहुत्वे लुङ् न भवति ॥

## तुल्यनामभ्यः क्षत्रियजनपदेभ्यो राजनि च ॥ १७० ॥

क्षत्रियवृत्तिशब्दोऽपि क्षत्रियः । जनपदवृत्तिशब्दोऽपि जनपदः । अभिधानेऽभिधेयोपचारात् । क्षत्रियवचना जनपदवचनाश्च ये तुल्यनामभूतास्तेभ्यो राजन्यभिधेये चशब्दादपत्ये अञ्प्रत्ययो भवति । इक्ष्वाकूणामपत्यं राजा च ऐक्ष्वाकः । एवं वैदेहः । मागधः । पाञ्चालः । अवृद्धादपि बहुवचनविषयादपि प्राप्तस्य वुञोऽपवादः ॥

## साल्वेयगान्धारिभ्यां च ॥ १७१ ॥

साल्वेयगान्धारिशब्दाभ्यामपत्ये राजनि चाञ्प्रत्ययो भवति । जनपदशब्दावेतौ क्षत्रियाभिधायिनौ । गान्धारेरपत्यं गुर्वायत्तं गान्धारीणां वा राजा गान्धारः । एवं साल्वेयः । 'वृद्धेद्' इति ञ्य(नि ? ङि) प्राप्ते पुनरञ् विधीयते ॥

## वृद्धेत्कोसलाजादाञ् ञ्यङ् ॥ १७२ ॥

क्षत्रियजनपदेभ्य इत्येव । वृद्धात् प्रातिपदिकादिकारान्तात् कोसलाजादशब्दाच्च राजनि चापत्ये ञ्यङ्प्रत्ययो भवति । अञोऽपवादः । वृद्धात् तावद् आम्बष्ठ्यः । सौवीर्यः । इकारान्तात् आवन्त्यः । कौन्त्यः । कोसलाजादयोरवृद्धार्थं ग्रहणम् । कौसल्यः । आजाद्यः । तपरकरणं किम् । कुमारी नाम जनपदसमानशब्दः क्षत्रियः । तस्यापत्यं राजा कौमारः । अञेव भवति ॥

## द्व्यञ्मगधकलिङ्गशूरमसेभ्योऽण् ॥ १७३ ॥

क्षत्रियजनपदवचनेभ्यस्तुल्यनामभ्यो द्व्यञ्मगधकलिङ्गशूरमसशब्देभ्यो राजनि चापत्ये अण्प्रत्ययो भवति । (आ ?अ)ञोऽपवादः । आङ्गः । वाङ्गः । सौह्मः । पौण्ड्रः । मागधः । कालिङ्गः । शौरमसः ॥

## कुरुनादिभ्यो ण्यः ॥ १७४ ॥

क्षत्रियजनपदेभ्यस्तुल्यनामभ्य इत्येव । कुरुशब्दान्नकारादिभ्यश्च राजनि चापत्ये ण्यप्रत्ययो भवति । अञणोरपवादः । कौरव्यः । नैषध्यः ॥

## पाण्डोर्ड्यण् ॥ १७५ ॥

पाण्डोः क्षत्रियजनपदवचनात् तुल्यनामधेयादपत्ये राजनि च ड्यण्प्रत्ययो भवति । पाण्डोरपत्यं राजा वा पाण्ड्यः । अन्यः पाण्डव एव । इकारश्छिलोपार्थः ॥

उदुम्बरतिलखलमद्रकारयुगन्धरभुलिङ्गशरदण्डप्रत्यग्रथकलकूटाश्मकेभ्य इञ्[1] ॥ १७६ ॥

क्षत्रियजनपदेभ्य इत्येव । उदुम्बरादिभ्यः शब्देभ्यो राजनि चापत्ये इञ्प्रत्ययो भवति । अञोऽपवादः । औदुम्बरिः । तैलखलिः । माद्रकारिः । यौगन्धरिः । भौलिङ्गिः । शारदण्डिः । प्रात्यग्रथिः । कालकूटिः । आश्मकिः ॥

कम्बोजमुरलकेरलचोलशकखसादिभ्यो लुक् ॥ १७७ ॥

'तुल्यनामभ्यः क्षत्रियजनपदेभ्य' इत्यनेन विहितस्याञो लुगुच्यते । कम्बोजादिभ्यः समुत्पन्नस्य प्रत्ययस्य लुग् भवति । कम्बोजानामपत्यं राजा वा कम्बोजः । मुरलः । केरलः । चोलः । शकः । खसः ॥

स्त्रियां कुरुकुन्त्यवन्तिभ्यः ॥ १७८ ॥

कुरुकुन्त्यवान्तिशब्देभ्यो राजनि चापत्ये विहितस्य स्त्रियां लुग् भवति । कुरोर्ण्यस्य कुन्त्यवन्तिभ्यां ञ्यङः । कुरोरपत्यं स्त्री कुरूः । 'ऊङुत' इत्यूङ् । अवन्ती । कुन्ती । 'इतो मनुष्यजातेः' इति ङीष् । स्त्रियामिति किम् । कौरव्यः । कौन्त्यः । आवन्त्यः ॥

अञणोरप्राच्यभर्गकरूषकेकयकश्मीरकौरव्यौरससाल्वसुस्थलेभ्यः ॥ १७९ ॥

अञणोः स्त्रियामपत्ये विहितयोर्लुग् भवति' न चेत् प्राच्यादिभ्यो भर्गादिभ्यश्च (कौ ? तौ) विहितौ भवतः । शूरसेनस्यापत्यं स्त्री शूरसेनी । मद्री । 'जातेरस्त्रीविषयादयोपधाद्' इति ङीष् । अप्राच्यभर्गादिभ्य इति किम् । प्राच्येभ्यस्तु पाञ्चाली । वैदर्भी । आङ्गी । वाङ्गी । मागधी । भर्गादिभ्यः खल्वपि भार्गी । कारूषी । कैकेया । काश्मीरी । कौरवी । औरसी । साल्वी । सौस्थली ॥

1. 'ञ् साल्वयेभ्यः । कम्बो' ख. पाठः.

## अञादीनामस्त्रियां बहुषु ॥ १८० ॥

क्षत्रियजनपदेभ्यस्तुल्यनामभ्यो राजनि चापत्ये स्त्रीवर्जिते समुत्पन्नानामञादीनां बहुषु लुग् भवति । अञ्—पञ्चालस्यापत्यानि राजानो वा पञ्चालाः । इक्ष्वाकवः । ञ्यः—आम्बष्ठाः । अश्मकाः । सौवीराः । अ-(न् । ण्)—अङ्गाः । वङ्गाः । कलिङ्गाः । मगधाः । ण्यः—कुरवः । निषधाः । ड्यण्—पाण्डवः । इञ्—उदुम्बराः । तिलखलाः । क्षत्रियजनपदेभ्यस्तुल्यनामभ्य इति किम् । औपगवाः । पाञ्चाला वा ब्राह्मणा अपत्यानि । बहुष्विति किम् । कालिङ्गः । राजनि चापत्य इत्येव । पञ्चालानां भृत्याः पाञ्चालाः ॥

## यञञोरपुनर्भूपरस्त्रीपुत्रदुहितृननान्दृभ्यः ॥ १८१ ॥

क्षत्रियजनपदेभ्य इति निवृत्तम् । अस्त्रियां बहुष्विति वर्तते । यञञोः प्रत्यययोरस्त्रियामपत्ये समुत्पन्नयोर्बहुषु लुग् भवति । पुनर्भूप्रभृतिभ्यो विहितस्य लुङ् न भवति । गर्गादिभ्यो यञ् । गर्गाः । वत्साः । बिदादिभ्योऽञ् । बिदाः । उर्वाः । बहुष्वित्येव । गार्ग्यः । वैदः । अस्त्रियामित्येव । गार्ग्यः स्त्रियः । अपत्ये इत्येव । द्वीपादनुसमुद्रं यञ् । द्वैप्याः । उत्सादिभ्योऽञ् । औत्साः छात्राः । अपुनर्भ्वादिभ्य इति किम् । पौनर्भवाः । पारस्त्रवाः । पौत्राः । दौहित्राः । नानान्द्राः ॥

## एकद्वयोः षष्ठीतत्पुरुषे वा ॥ १८२ ॥

यञञोरपत्ययोरेकत्वे द्वित्वे च वर्तमानयोः षष्ठीतत्पुरुषे वा लुग् भवति । गार्ग्यस्य गार्ग्ययोर्वा कुलं गार्ग्यकुलं गर्गकुलं वा । एवं वैदस्य वैदयोर्वा कुलं वैदकुलं (बिदकुलं) वा । यञञोरित्येव । आङ्गकुलम् । एकद्वयोरिति किम् । गर्गाणां कुलं गर्गकुलम् । तत्पुरुष इति किम् । गार्ग्यस्य समीपमुपगार्ग्यम् । षष्ठीति किम् । परमगार्ग्यः ॥

## कौण्डिन्यस्य कुण्डिनच्च ॥ १८३ ॥

कौण्डिन्यशब्दस्यापत्यादिप्रत्ययान्तस्य यञो बहुष्वस्त्रियां विहितस्य लुग् भवति । परिशिष्टस्य प्रकृतिभागस्य कुण्डिनजित्ययमादेशो भवति । कुण्डिनाः । चकारः स्वरार्थः ॥

यस्कलभ्यद्रुह्यायस्स्थूणतृणकर्णभलन्दनमित्रयुखरपभडिलभण्डिलभडितभण्डितेभ्यः ॥ १८४ ॥

अस्त्रियां बहुष्विति वर्तते। यस्कादिभ्यः परस्यापत्यप्रत्ययस्य बहुषु वर्तमानस्यास्त्रियां विहितस्य लुग् भवति। यस्कादयो नानापत्यप्रत्ययान्ताः। यस्कस्यापत्यानि यस्काः। एवं लभ्याः। द्रुह्याः। अयस्स्थूणाः। तृणकर्णाः। भलन्दनाः। एतेभ्यः शिवाद्यणो लुक्। मित्रयोरपत्यानि मित्रयवः। गृष्ट्यादिढञो लुक्। खरपस्यापत्यानि खरपाः। नडादिफक्को लुक्। भडिलाः। (भण्डिलाः)। भडिताः। (भण्डिताः।) अश्वादिफञो लुक्। बहुष्वित्येव। यास्क्यः। अस्त्रियामित्येव। यास्क्याः स्त्रियः। अपत्य इत्येव। यास्काः (शा ? छा)त्राः॥

सदामत्तकम्बलभारकर्णाटपिण्डीजङ्घबकसक्थरक्षोमुखजङ्घारथोत्काशकह्वमन्थकविषपुटेभ्यः ॥ १८५ ॥

सदामत्तादिभ्यः शब्देभ्यः परस्यापत्यप्रत्ययस्यास्त्रियां बहुषु लुग भवति। सदामत्तस्यापत्यानि सदामत्ताः। कम्बलभाराः। कर्णाटाः। पिण्डीजङ्घाः। बकसक्थाः। रक्षोमुखाः। जङ्घारथाः। उत्काशाः। कह्वाः। मन्थकाः। विषपुटाः। एभ्यः सदामत्तादिभ्य इञो लुक्॥

वर्षुकोपरिमेखलकडरकृषवटाकपुष्करसत्कुन्द्रिविश्रयजवस्तिभ्यः ॥ १८६ ॥

वर्षुकादिभ्यः शब्देभ्यो विहितस्यापत्यप्रत्ययस्यास्त्रियां बहुषु लुग् भवति। वर्षुकस्यापत्यानि वर्षुकाः। एवमुपरिमेखलाः। कडरकृषाः। वटाकाः। एभ्य इञो लुक्। पुष्करसदोऽपत्यानि पुष्करसदः। बाह्वादित्वादिञो लुक्। कुन्द्रयः। विश्रयः। अजवस्तयः। एभ्यो गृष्ट्यादिढञो लुक्॥

क्रोष्टुः पादमानाभ्याम् ॥ १८७ ॥

क्रोष्टुशब्दात् पराभ्यां पादमानशब्दाभ्यामुत्पन्नस्यापत्यप्रत्ययस्यास्त्रियां बहुषु लुग् भवति। क्रोष्टुपादाः। क्रोष्टुमानाः। आभ्यामिञो लुक्॥

शीर्षाच्च मायात् ॥ १८८ ॥

शीर्षशब्दात् क्रोष्टुशब्दाच्च परस्मान्मायशब्दाद् विहितस्यापत्यप्रत्ययस्य बहुष्वस्त्रियां लुग् भवति । शीर्षमायाः । क्रोष्टुमायाः । अत्रापीञो लुक् ॥

अत्रिभृगुकुत्सवसिष्ठाङ्गिरोगोतमेभ्यः ॥ १८९ ॥

अत्र्यादिभ्यः परस्यापत्यप्रत्ययस्य बहुष्वस्त्रियां लुग् भवति । अत्रिशब्दाद् 'इतोऽनिञ' इति ढको लुक् । इतरेभ्यस्तु ऋष्यणः । अत्रयः । भृगवः । कुत्साः । वसिष्ठाः । अङ्गिरसः । गोतमाः । बहुष्वित्येव । आत्रेयः । भार्गवः । अस्त्रियामित्येव । आत्रेय्यः स्त्रियः ॥

अगस्तयः ॥ १९० ॥

आगस्त्यशब्दस्याणन्तस्य बहुष्वस्त्रियामगस्तय इति पात्यते । अगस्तयः । ऋष्यणो लुक् । अबहुत्वे आगस्त्यः आगस्त्यौ । अस्त्रियामित्येव । आगस्त्यः स्त्रियः ॥

बह्वचः प्राच्यादिञः ॥ १९१ ॥

बह्वचः प्रातिपदिकात् प्राच्यगोत्रादिभूताद् य इञ् विहितस्तस्य बहुषु लुग् भवति । पन्नागाराः । मन्थरेषणाः । युधिष्ठिराः । अर्जुनाः । उद्दालकाः । प्राच्यभरतानामपि प्राच्यग्रहणेन ग्रहणम् । बह्वच इति किम् । वै(ज?)कयः । प्राच्यादिति किम् । बालाकयः । हास्तिदासयः । बहुष्वित्येव । मान्थरेषणिः । ये शरावत्याः सरितः पूर्वोत्तरेण वहन्त्याः पूर्वतो दक्षिणतो वा भवन्ति ते प्राच्याः । ये पश्चिमत उत्तरतो वा भवन्ति ते उदीच्याः ॥

उपकलमकभ्रष्टककपिष्ठलकृष्णाजिनकृष्णसुन्दरपिङ्गलकृष्णपिङ्गलककलशीकण्ठदामकण्ठजटिलकबधिरकेभ्यो वा [॥ १९२ ॥

उपकादिभ्यः परस्यापत्यप्रत्ययस्य बहुषु वा लुग् भवति । उपकाः । औपकायनाः । लमकाः । (ल?ला)मकायनाः । आभ्यां नडादित्वात् फक् । भ्रष्टकाः । भ्राष्टकयः । कपिष्ठलाः । का:पिष्ठलयः । कृष्णाजिनाः । कार्ष्णाजिनयः । कृष्णसुन्दराः । कार्ष्णसुन्दरयः । पिङ्ग(लक?लाः।) पैङ्गल(कि:?)यः । (कृष्णपिङ्गलकाः । कार्ष्णपिङ्गलकयः ।) कलशीकण्ठाः ।

काळशीकण्ठयः । दामकण्ठाः दामकण्ठयः । जटिलकाः जाटिलकयः । (बधिरकाः । बाधिरकयः ॥)

**जतुगडुकनिदाघापजग्धाधारकावधारक*प्रतिलोमानुलोमप्रतानानुपदानभिहितकरिजङ्घेभ्यः ॥ १९३ ॥**

.... .... .... .... .... .... ....

अडारकाः । आडारकयः । चडारकाः । चाडारकयः । प्रतिलोमाः । प्रातिलोमयः । अनुलोमानः । आनुलोमयः । प्रतानाः । प्रातानयः । अ(र-?नु)पदाः । आ(र ? नु)पदयः । अनभिहिताः । आनभिहितयः । करिजङ्घाः कारिजङ्घयः । एतेभ्यः अपत्य इञ् ॥

**कशकृत्स्नसुधायुककर्णकपर्णककुशीतकलेखाभ्रुशलाथलपिष्टसुपिष्टमसूरकर्णकठेरणिपतञ्जलिभ्यः ॥ १९४ ॥**

कशकृत्स्नादिभ्यः परस्यापत्यप्रत्ययस्य बहुषु लुग् भवति । कशकृत्स्नाः । काशकृत्स्नयः । सुधायुकाः । सौधायुकयः । कर्णकाः । कार्णकयः । पर्णकाः । पार्णकयः । कुशीतकाः । कौशीतकयः । एभ्य इञ् । लेखाभ्रुवः । लैखाभ्रेयाः । शलाथलाः । शालाथलेयाः । आभ्यां शुभ्रादित्वात् ढक् । पिष्टाः । पैष्टाः । सुपिष्टाः । सौपिष्टाः । मसूरकर्णाः । मासूरकर्णाः । एभ्यः शिवादित्वादण् । कठेरणयः । काठेरणा(य?)ः । पतञ्जलयः । पातञ्जलाः । आभ्यामौत्सर्गिकोऽण् ॥

**तिककितवोब्जककुभवङ्खरभण्डीरथप्रहितनरकाग्निवेशदसेरकबकनखश्वगुदपरिणद्धलङ्कशान्तमुखोरसलङ्कटेभ्यो द्वन्द्वे ॥ १९५ ॥**

तिकादिभ्यः कितवादिभ्यश्च द्वन्द्वे समासे गोत्रप्रत्ययस्य बहुषु लुग् भवति । वेति न वर्त्तते । तैकायनश्च कैतवायनश्च । तिकादिभ्यः फिञ् । तस्य लुक् । तिककितवाः । उब्जादत इञ् । ककुभाच्छिवाद्यण् । तयोर्लुक् । उब्जककुभाः । वाङ्खरयश्च भाण्डीरथयश्च । अत इञ् । वङ्खरभण्डीरथाः । प्राहितयश्च नारकयश्च । अत्राप्यत इञ् । प्रहितन-

* वृत्त्यनुसारेण तु 'अडारकचडारक' इति पाठः स्यात् ।

रकाः । अग्निवेशाद् गर्गादित्वाद्यञ् । दसेरकादत इञ् । अग्निवेशदसेरकाः । बाकनखयश्च (गौतम ? श्वागुद)परिणद्धयश्च । अत इञ् । बकनखश्वगुदपरिणद्धाः । लाङ्कयश्च शान्तमुखयश्च । अत्राप्यत इञ् । लङ्कशान्तमुखाः । उरसशब्दात् तिकादित्वात् फिञ् । लङ्कटशब्दादिञ् । औरसायनयश्च लाङ्कटयश्च उरसलङ्कटाः ॥

षड्भ्यश्चोपकादिभ्यः ॥ १९६ ॥

उपक लमक भ्रष्टक कपिष्ठल कृष्णाजिन कृष्णसुन्दर इत्येतेभ्यः षड्भ्यो विहितस्यापत्यप्रत्ययस्य द्वन्द्वे लुग् भवति । औपकायनाश्च लामकायनाश्च उपकलमकाः ॥

वा भ्रष्टकपिष्ठलाभ्याम् ॥ १९७ ॥

.... .... .... .... ... ... .... ....

... भ्राष्टकयश्च कापिष्ठलयश्च भ्रष्टककपिष्ठलाः । कार्ष्णाजिनयश्च कार्ष्णसुन्दरयश्च कृष्णाजिनकृष्णसुन्दराः ॥

न गोपवनादिभ्योऽष्टभ्यः[1] ॥ १९८ ॥

गोपवनादिभ्यः शब्देभ्योऽष्टभ्यः परस्यापत्यप्रत्ययस्य लुङ् न भवति । (दिवा ? बिदा)द्यन्तर्गणोऽयम् । तत्राञोऽपत्यप्रत्ययस्य 'यञञोः' इत्यादिना लुक् प्राप्तः प्रतिषिध्यते । गौपवनाः । शैग्रवाः । बैन्दवाः । भाजनाः । आश्वातानाः । श्यामाकाः । श्याम्बकाः । श्वापर्णाः । एतावन्त एवाष्टौ गोपवनादयः । अष्टभ्य इति किम् । हरिताः । किन्दासाः ॥

प्राग्जितीयेऽचि ॥ १९९ ॥

यस्यापत्यप्रत्ययस्य लुग्विहितस्तस्य प्राग्जितीयेऽजादौ विषये लुङ् न भवति । पञ्चालानामिमे पाञ्चालीयाः । ऐक्ष्वाकीयाः । भार्गवीयाः । आगस्तीयाः । प्राग्जितीय इति किम् । गर्गेभ्यो हितं गर्गीयम् । अचीति किम् । गर्गेभ्य आगतः गर्गरूप्यः । गर्गमयः ॥

गोत्राल्लुक् ॥ २०० ॥

अपत्यप्रत्ययान्ताद् गुर्वायत्तविहितस्य प्राग्जितीयेऽजादौ विषयभूते लुग् भवति । कपिञ्जलादस्यापत्यं कापिञ्जलादिः । तस्यापत्यं गुर्वा-

१. 'भ्यः ॥ गर्गभार्गविका प्रा' ख. पाठः.

यत्तं कापिञ्जलाद्यः। कुर्वादित्वाण्ण्यः। तस्य छात्रा इति ण्यप्रत्यये निवृत्ते (उ? इ)ञन्तादण्। कापिञ्जलादाः। भगवित्तस्यापत्यं भागवित्तिः। तस्यापत्यं गुर्वायत्तमिति सौवीरेषु ठक्। भागवित्तिकः। तस्य छात्राः गुर्वायत्तप्रत्यये निवृत्तेऽण् भागवित्ताः। अजादाविति किम्। भागवित्तिकमयः। प्राग्जितीय इत्येव। भागवित्तिकाय हितः भागवित्तिकीयः॥

फक्फिञोर्वा॥ २०१॥

गोत्रादित्येव। पूर्वेण नित्यं लुकि प्राप्ते विकल्प उच्यते। फक्फिञोरपत्यप्रत्यययोः प्राग्जितीये अजादौ प्रत्यये विवक्षिते वा लुग् भवति। गर्गादिभ्यो यञ्। कृते (यञि) 'यञिञ्भ्याम्' इति गुर्वायत्ते फक्। गार्ग्यायणः। तस्य छात्राः गार्ग्यायणीयाः। गार्गीयाः। वात्सीयाः। वात्स्यायनीयाः। फिञः खल्वपि—यस्कस्यापत्यं शिवादिभ्योऽण् यास्कः। तस्यापत्यं गुर्वायत्तम्। 'द्व्यचोऽण' इति फिञ्। यास्कायनिः। तस्य छात्राः यास्कायनीयाः यास्कीयाः। फक्फिञोरिति किम्। अत्रेरपत्यमात्रेयः। तस्यापत्यमात्रेयीयाः। 'आत्रेयाद् भरद्वाजे' इति फक्(?)। तस्य पूर्वेण नित्यं लुक्॥

अब्राह्मणात्॥ २०२॥

अब्राह्मणगोत्रप्रत्ययान्ताद् गुर्वायत्तेऽपत्ये विहितस्य प्रत्ययस्य लुग् भवति। उदुम्बरस्यापत्यम् औदुम्बरिः। 'उदुम्बरातिलखले'त्यादिना इञ्। औदुम्बरेरपत्यं गुर्वायत्तमिति यञिञोः फक्। तस्य लुक्। औदुम्बरिः पिता पुत्रश्च। तथा भाण्डीजङ्घिः पिता पुत्रश्च। अत्रापि इञन्तात् फको लुक्। अब्राह्मणगोत्रादपि 'गोत्राल्लुक्' इत्यनेन सिद्धे पुनर्वचनात् 'प्राग्जितीयेऽची'ति निवृत्तम्। तेनायमनिमित्तको लुग् भवति। अब्राह्मणादिति किम्। औपगवस्यापत्यम् औपगविः। दाक्षेरपत्यं दाक्षायणः। एकयोगनिर्दिष्टत्वे(न) युगपत् फक्फिञोर(नुवृत्ति? नु)वृत्त व(प्यु)त्तरत्र पैलग्रहणादिह फक एव लुग् विधीयते। तेन साल्वः पिता साल्वायनिः पुत्र इति फिञो लु(ङ? क् न) भवति॥

पैलशालङ्किसात्यकिसात्यङ्कामौदमञ्ज्यौदमञ्ज्यौदमेघ्यौदशुद्धिदैवस्थानपैङ्गलादायनिराणिराहक्षतिभौलिङ्गयौद्गाहमान्यौञ्जिहानिभ्यः॥ २०३॥

पैलादिभ्यो गोत्रप्रत्ययान्तेभ्यो गुर्वायत्ते विहितस्यापत्यप्रत्ययस्य लुग् भवति । 'साल्वापी(ली? ला)भ्यां वा' इति पीलाशब्दात् अण् । तदन्ताद् 'द्व्यचोऽणः' इति फिञ् । तस्य लुक् । पैलः पिता । पैलः पुत्रः । शलङ्कोरपत्यं पौत्रादि (श? शा)लङ्किः । यञिञ्भ्याम् इति फक् । तस्य लुक् । सत्यकस्यापत्यं सात्यकिः । तस्यापत्यमपि सात्यकिः । फको लुक् । तथा सात्यङ्कामिः पिता । सात्यङ्कामिः पुत्रः । तथौदम-(ञ्जि? जि): । औदमज्जिः । औदमेधिः । औदशुद्धिः । दैवस्थानिः । पैङ्गलादायनिः । राणिः । राहक्षतिः । भौलिङ्गिः । औद्वाहमानिः । औज्जिहानिः । पिता पुत्रश्चेति सर्वत्र सम्बन्धः । इहेञन्तानामप्राच्यार्थः । प्राच्याद्वक्ष्यमाणेन सिद्धः ॥

## जनपदनाम्नः क्षत्रियादणः ॥ २०४ ॥

जनपदनामधेयात् क्षत्रियवचनात् योऽसावण् विहितस्तदन्ता(द)पत्ये गुर्वायत्ते विहितस्य प्रत्ययस्य लुग् भवति । आङ्गः पिता पुत्रश्च । तथा वाङ्गः । जैह्वः । 'द्व्यञ्मगधकलिङ्गशूरमसेभ्योऽण्' इत्यण् । ततो 'द्व्यचोऽणः' इति फिञ् । तस्य लुक् । जनपदनाम्नः क्षत्रियादिति किम् । साल्वः पिता साल्वायनिः पुत्रः । यद्यपि साल्वशब्दो जनपदसमानक्षत्रियवचनस्तथापि यस्मात् साल्वशब्दादण् नासौ क्षत्रियवचन इति लुङ् न भवति ॥

## मगधकलिङ्गशूरमसकुरुवृष्ण्यन्धकेभ्यश्च ॥ २०५ ॥

फक्फिञोरिति निवृत्तम् । मगधादिभ्यः परो योऽण् तदन्तादपत्ये गुर्वायत्ते विहितस्य प्रत्ययस्य लुग् भवति । मागधः पिता मागधः पुत्रः । कालिङ्गः पिता कालिङ्गः पुत्रः । तथा शौरमसः पिता पुत्रश्च । एभ्यो 'द्व्यञ्मगधे'त्यादिना अण् । तदन्तादिञो लुक् । नाकुलः पिता पुत्रश्च । एवं रन्ध्रकः । श्वाफल्कः । कुरुवृष्ण्यन्धकेभ्यश्च इत्यण् । तत इञो लुक् । एभ्य इति किम् । राघविः पिता राघविः पुत्रः ॥

## प्राच्यादिञः ॥ २०६ ॥

प्राच्यगोत्रादिञन्तादपत्ये गुर्वायत्ते विहितस्य प्रत्ययस्य लुग् भवति ।

पान्नागारेरपत्यं पान्नागारिः पिता पुत्रश्च । माठरेषणिः पिता पुत्रश्च । फको लुक् । प्राच्यादिति किम् । दाक्षिः पिता दाक्षायणः पुत्रः ॥

**न तौल्वलिधारणिवारणिरावणिदैलीपिदैवतिदैवमतिदैवयज्ञिप्रादोहनिचाफग्दक्यासुरिपौष्करसाद्यानुराहतिभ्यः ॥ [२०७॥**

तौल्वलादिभ्य इञन्तेभ्यः प्राच्यगोत्रेभ्यः परस्यापत्यप्रत्ययस्य पूर्वसूत्रेण प्राप्तो लुङ् न भवति । तौल्वलिः पिता तौल्वलायनः पुत्रः । धारणिः पिता । धारणायनः पुत्रः । वारणिः पिता वारणायनः पुत्रः । रावणिः पिता रावणायनः पुत्रः । दैलीपिः पिता दैलीपायनः पुत्रः । दैवतिः पिता दैवतायनः पुत्रः । दैवमतिः पिता दैवमतायनः पुत्रः । दैवयज्ञिः पिता दैवयज्ञायनः पुत्रः । प्रादोहनिः पिता प्रादोहनायनः पुत्रः । चाफग्दकिः पिता चाफग्दकायनः पुत्रः । ननु चफग्दकशब्दः कुर्वादिषु पठ्यते । ततश्चास्माण्ण्यप्रत्ययेन भवितव्यम् । नैवम् । क्षत्त्रियवचनस्य तत्र ग्रहणात् । ब्राह्मणवचनादुदङ्कादिदर्शनादिञेव भवति । आसुरिः पिता आसुरायणः पुत्रः । पौष्करसादिः पिता पौष्करसादायनः पुत्रः । आनुराहतिः पिता आनुराहतायनः पुत्रः ॥

**आनुतिनैमिश्यासिबन्धकिचैङ्किपैष्ट्याहिंसिपैरकिपैसीतिवैहतिवैकर्णिकार्करिकारेणुपालिभ्यः ॥ २०८ ॥**

आनुत्यादिभ्य इञन्तेभ्यः प्राच्यगोत्रेभ्यः परस्यापत्यप्रत्ययस्य लुङ् न भवति । अत्रापि पूर्वेण प्राप्ते प्रतिषेधः । आनुतिः पिता आनुतायनः पुत्रः । नैमिशिः पिता नैमिशायनः पुत्रः । आसिबन्धकिः पिता । आसिबन्धकायनः पुत्रः । चैङ्किः पिता चैङ्कायनः पुत्रः । पैष्टिः पिता पैष्टायनः पुत्रः । आहिंसिः पिता आहिंसायनः पुत्रः । पैरकिः पिता । पैरकायणः पुत्रः । पैसीतिः पिता पैसीतायनः पुत्रः । वैहतिः पिता वैहतायनः पुत्रः । वैकर्णिः पिता वैकर्णायनः पुत्रः । (क ? का)र्करिः पिता (क ? का)र्करायणः पुत्रः । कारेणुपालिः पिता कारेणुपालायनः पुत्रः ॥

**भरतगोत्राच्च ॥ २०९ ॥**

भरतगोत्राच्च प्राच्याद् य इ(न्?ञ्) विहितस्तदन्तादपत्ये गुर्वायत्ते विहितस्य प्रत्ययस्य लुङ् न भवति। भरतानामपि (वा?प्रा)च्यत्वात् 'प्राच्यादिञ' इत्यनेन प्राप्तस्य प्रतिषेधः। यौधिष्ठिरिः पिता यौधिष्ठिरायणः पुत्रः। आर्जुनिः पिता आर्जुनायनः पुत्रः। 'अब्राह्मणादि'त्यनेनापि लुङ् न भवति॥

ञिदार्षण्येभ्योऽणिञोः ॥ २१० ॥

ञिदादयो गोत्रप्रत्ययाः। ञिदन्तादार्षात् ण्यन्ताच्च परयोरणिञोरपत्ये विहितयोर्लु(ङ्न?ग्) भवति। ञितस्तावत्—'बिदोर्व' इत्यादिनाञ्। तस्माद् गुर्वायत्ते इञ्। तस्य लुक्। बैदः पिता बैदः पुत्रः। आर्षः ऋष्यण्। तस्माद् गुर्वायत्ते इञ्। तस्य लुक्। वासिष्ठः पिता वासिष्ठः (पुत्रः।) ण्यः, 'कुरुशकन्धु' इत्यादिना ण्यः। तस्माद् गुर्वायत्ते इञ्। तस्य लुक्। कौरव्यः (पिता। कौरव्यः) पुत्रः। (अ?न)नु च कौरव्यशब्दः तिकादिषु पठ्यते। ततः फिञा भवितव्यं कौरव्यायणिरिति। क्षत्रियगोत्रस्य तत्र तिकादौ ग्रहणं 'कुरुनादिभ्यो ण्यः' इत्यनेन विहितस्य। (व?इ)दन्तु ब्राह्मणगोत्रं 'कुर्वादिभ्यो ण्य' इति। अणः खल्वपि — तिकादिभ्यः फिञ्। ततो गुर्वायत्ते प्राग्जितीयोऽण्। तस्य लुक्। तैकायनिः पिता तैकायनिः पुत्रः। एभ्य इति किम्। शिवादिभ्योऽण्। ततो गुर्वायत्ते इञ्। तस्य लुङ् न भवति। कौह(लिः?लः) पिता कौहलिः पुत्रः। अपत्ये गुर्वायत्ते इत्येव। वामर(थ?थ्य)स्य छात्राः वामरथाः। 'कुर्वादिभ्यो ण्यः'। तस्मात् 'कण्वादिभ्यो गोत्र' इति शैषिकोऽण्। तस्य लु(ग्?लुङ् न) भवति। अणिञोरिति किम्। दाक्षेरपत्यं दाक्षाय(णि?णः)॥

द्व्येकयोर्बहुषुलोपिनो बहुषु लुकि लुक् ॥ २११ ॥

बहुषु लो(प?पोऽ)स्यास्तीति बहुषुलोपी अञादिः। तस्य द्व्येकयोरुत्पन्नस्य तदन्ताद् गुर्वायत्तेषु बहुष्वपत्येषु विहितस्य लुकि लुग् भवति। बिदस्यापत्यं बैदः। बैदस्य बैदयोर्वा अपत्यानि गुर्वायत्तानि। तस्मादत इञ्। तस्य 'ञिदार्षण्येभ्योऽणिञोः' इति लुक्। तस्मिन् सति अनेनाञो लुक्। बिदाः। पञ्चालाः। न ह्यत्राञ् बहुषूत्पन्न इति 'यञञोः' इत्यादिना न प्राप्नोतीति लुग् विधीयते। एवमङ्गस्यापत्यम् आङ्गः। तस्य तयोर्वा

अपत्यानि 'द्व्यचोऽणः' इति फिञ्। तस्य 'जनपदनाम्नः क्षत्रियादणः' इति लुक्। तस्मिन् सत्यनेन लुक्। अङ्गाः। वङ्गाः। एवमन्येऽपि। बहुषुलोपिन इति किम्। वसिष्ठस्यापत्यं वासिष्ठः। तस्यापत्यानि वासिष्ठाः। इञो लुकि ऋष्यणो लुङ् न भवति। बहुषु लुकीति किम्। बैदः पिता बैदः पुत्रः॥

## बहुषु द्व्येकयोरलुक्॥ २१२॥

बहुषुलोपिन इति वर्तते। तदन्ताद् बहुषु वर्तमाना(द्) द्वयोरेकस्मिन् वापत्ये गुर्वायत्ते विहितस्य प्रत्ययस्य लुकि सति तस्यालुग् भवति। बिदस्यापत्यानि बहूनि बिदाः। तेषामपत्यम् 'अत इञ्'। तस्य 'ञिदार्षण्येभ्योऽणिञोः' इति लुकि सति बहुषुलोपिनो लुक् (न) भवति। बैदः। अपत्ये बैदौ। पञ्चालानामपत्यानि (पा?प)ञ्चालाः। तेषामपत्यं पाञ्चालः पाञ्चालौ। अत्राञादयो बहुषूत्पन्ना इति अञादीनामस्त्रियां बहुषु 'यञञोः' इत्यादिना लुकि प्राप्ते अनेनालुग् विधीयते॥

इति श्रीदण्डनाथनारायणभट्टसमुद्धृतायां सरस्वतीकण्ठाभरणस्य व्याकरणस्य लघुवृत्तौ हृदयहारिण्यां चतुर्थस्याध्यायस्य प्रथमः पादः॥

---

## अथ द्वितीयः पादः।

## तेन रक्तं रागात्॥ १॥

शुक्लस्य वर्णान्तरापादनं रञ्जेरर्थः। रज्यतेऽनेनेति रागः। तेनेति तृतीयासमर्थाद् रागविशेषवाचिनः प्रातिपदिकाद् रक्तमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। कषायेण रक्तं वस्त्रं काषायम्। माञ्जिष्ठम्। कौसुम्भम्। कौङ्कुमम्। हारिद्रम्। रागादिति किम्। देवदत्तेन रक्तं वस्त्रम्। कथं काषायौ गर्दभस्य कर्णौ, हारिद्रौ कुक्कुटस्य पादाविति। उपमानाद् भविष्यति। काषायाविव काषायौ। हारिद्राविव हारिद्रौ। 'द्वैपवैयाघ्राभ्यां चर्मभ्यामञ्' इति यावत् तृतीयाविभक्तिरनुवर्तते॥

## लाक्षारोचनाभ्यां ठक्॥ २॥

लाक्षारोचनाशब्दाभ्यां रागवचनाभ्यां तृतीयासमर्थाभ्यां रक्त-मित्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । अणोऽपवादः। लाक्षया रक्तं लाक्षिकम्। रौचनिकम् ॥

शकलकर्दमाभ्यां वा ॥ ३॥

शकलकर्दमशब्दाभ्यां रागवचनाभ्यां तृतीयासमर्थाभ्यां रक्तमित्ये-तस्मिन्नर्थे वा ठक्प्रत्ययो भवति । शाकलिकं शाकलम् । कार्दमिकं कार्दमम्॥

नीलपीताभ्यामन्कनौ ॥ ४ ॥

नीलपीतशब्दाभ्यां तृतीयासमर्थाभ्यां रक्तमित्येतस्मिन्नर्थे यथासङ्ख्यम् अन् कनित्येतौ प्रत्ययौ भवतः । नीलेन रक्तं नीलम् । पीतेन रक्तं पीत(क)म्। प्रातिपदिकग्रहणे लिङ्गविशिष्टग्रहणमिति नील्यापि रक्तं नीलम् ॥

पीतकाल्लुक् ॥ ५॥

हरिद्रामहाराजनाभ्यामञ् ॥ ६ ॥

हरिद्रामहाराजनशब्दाभ्यां रागवचनाभ्यां [तृतीयासमर्थाभ्यां][1] रक्त-मित्यस्मिन्नर्थे अञ्प्रत्ययो भवति । हरिद्रया रक्तं हारिद्रम् । माहारा-जनम् ॥

चन्द्रवृत्तेर्नक्षत्राद् युक्तः कालः ॥ ७ ॥

तृतीया समर्थविभक्तिरनुवर्तते । तेनेति तृतीयासमर्थान्नक्षत्रविशेषवा-चिनः शब्दात् समीपस्थे चन्द्रमस्युपचारेण वर्तमानाद् युक्त इत्येतस्मिन्नर्थे यथविहितं प्रत्ययो भवति । योऽसौ युक्तः, कालश्चेत् स भवति । पुष्येण युक्तः कालः । पुष्यसमीपस्थेन चन्द्रमसा युक्त इत्यर्थः । पौषमहः । पौषी रात्रिः । माघमहः । माघी रात्रिः । नक्षत्रादिति किम् । चन्द्रम(स?सा) यु(क्त?क्ता) रात्रिः । काल इति किम् । पुष्येण युक्तश्चन्द्रमाः ॥

लुप् तदविशेषे ॥ ८ ॥

नक्षत्रेण युक्तः काल इति वर्तते । पूर्वेण विहितस्य प्रत्ययस्य लु(क्?ब्) भवति । तस्य नक्षत्रयुक्तस्य कालस्य रात्र्यादिविशेषो न

१. 'र' ख. पाठः.

चे(दिति ? दभि)धीयते । यावान् कालो नक्षत्रेण युज्यते अहोरात्रः, त(स्य ? स्या)विशेषे लुब् भवति । अद्य पुष्यः । अद्य कृत्तिकाः । तदविशेष इति किम् । पौषी रात्रिः । पौषमहः ॥

## संज्ञायां श्रवणाश्वत्थाभ्याम् ॥ ९ ॥

अविशे(ष ? षे) लुब्विहितः पूर्वेण । विशेषार्थोऽयमारम्भः । श्रवणशब्दादश्वत्थशब्दाच्चोत्पन्नस्य प्रत्ययस्य लुब् भवति संज्ञायां विषये । श्रवणा रात्रिः । अश्वत्थो मुहूर्तः । लुपि युक्तवद्भावो न भवति । निपातनात् 'विभाषा फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्य' इति । संज्ञायामिति किम् । श्रावणी रात्रिः । आश्वत्थी रात्रिः । अ(श्विनी ? श्वत्थ)शब्देनाश्विनीनक्षत्रमुच्यते ॥

## द्वन्द्वाच्छः ॥ १० ॥

नक्षत्रद्वन्द्वात् तृतीयासमर्थाद् युक्ते काले छप्रत्ययो भवति विशेषे चाविशेषे च । राधानुराधीया रात्रिः । तिष्यपुनर्वसवीयमहः । अविशेषे अद्य राधानुराधीयः । अद्य तिष्यपुनर्वसवीयम् । लुपं परत्वाद् बाधते ॥

## दृष्टं साम डिद्वा ॥ ११ ॥

तेनेति तृतीयासमर्थाद् दृष्टमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो डिद्वा भवति, यद् दृष्टं साम चेत् तद् भवति । वसिष्ठेन दृष्टं साम वासिष्ठम् । वैश्वामित्रम् । क्रौञ्चम् । एवमग्निना दृष्टं साम आग्नेयम् । उशनसा दृष्टमौशनसम् । डित्त्वेन हलन्तानामेव विशेषः ॥

## वामदेवाड् ड्यड्ड्यौ ॥ १२ ॥

वामदेवशब्दात् तृतीयासमर्थाद् दृष्टं सामेत्येतस्मिन्नर्थे ड्यत् ड्यौ इत्येतौ प्रत्ययौ भवतः । अणोऽपवादौ । वामदेवेन दृष्टं साम वामदेव्यम् । डित्करणं किम् । 'ययतोश्चातदर्थे' इति नञ उत्तरस्यान्तोदात्तत्वे विधीयमाने अनयोर्ग्रहणं मा भूत् । निरनुबन्धकग्रहणपरिभाषया चानयोर्निवृत्तिः क्रियते । अवामदेव्यम् ॥

## गोत्रादङ्कवत् ॥ १३ ॥

लाक्षारोचनाशब्दाभ्यां रागवचनाभ्यां तृतीयासमर्थाभ्यां रक्तमित्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । अणोऽपवादः । लाक्षया रक्तं लाक्षिकम् । रौचनिकम् ॥

शकलकर्दमाभ्यां वा ॥ ३ ॥

शकलकर्दमशब्दाभ्यां रागवचनाभ्यां तृतीयासमर्थाभ्यां रक्तमित्येतस्मिन्नर्थे वा ठक्प्रत्ययो भवति । शाकलिकं शाकलम् । कार्दमिकं कार्दमम् ॥

नीलपीताभ्यामन्कनौ ॥ ४ ॥

नीलपीतशब्दाभ्यां तृतीयासमर्थाभ्यां रक्तमित्येतस्मिन्नर्थे यथासङ्ख्यम् अन् कनित्येतौ प्रत्ययौ भवतः । नीलेन रक्तं नीलम् । पीतेन रक्तं पीत(क)म् । प्रातिपदिकग्रहणे लिङ्गविशिष्टग्रहणमिति नील्यापि रक्तं नीलम् ॥

पीतकाल्लुक् ॥ ५ ॥

हरिद्रामहा[1]राजनाभ्यामञ् ॥ ६ ॥

हरिद्रामहाराजनशब्दाभ्यां रागवचनाभ्यां [तृतीयासमर्थाभ्यां] रक्तमित्यस्मिन्नर्थे अञ्प्रत्ययो भवति । हरिद्रया रक्तं हारिद्रम् । माहाराजनम् ॥

चन्द्रवृत्तेर्नक्षत्राद् युक्तः कालः ॥ ७ ॥

तृतीया समर्थविभक्तिरनुवर्तते । तेनेति तृतीयासमर्थान्नक्षत्रविशेषवाचिनः शब्दात् समीपस्थे चन्द्रमस्युपचारेण वर्तमानाद् युक्त इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । योऽसौ युक्तः, कालश्चेत् स भवति । पुष्येण युक्तः कालः । पुष्यसमीपस्थेन चन्द्रमसा युक्त इत्यर्थः । पौषमहः । पौषी रात्रिः । माघमहः । माघी रात्रिः । नक्षत्रादिति किम् । चन्द्रम(स ? सा) यु(क्त ? क्ता) रात्रिः । काल इति किम् । पुष्येण युक्तश्चन्द्रमाः ॥

लुप् तदविशेषे ॥ ८ ॥

नक्षत्रेण युक्तः काल इति वर्तते । पूर्वेण विहितस्य प्रत्ययस्य लु(क् ? ब्) भवति । तस्य नक्षत्रयुक्तस्य कालस्य रात्र्यादिविशेषो न

---

1. 'र' ख. पाठः.

चे(दिति ? दभि)धीयते। यावान् कालो नक्षत्रेण युज्यते अहोरात्रः, त(स्य ? स्या)विशेषे लुब् भवति। अद्य पुष्यः। अद्य कृत्तिकाः। तदविशेष इति किम्। पौषी रात्रिः। पौषमहः॥

## संज्ञायां श्रवणाश्वत्थाभ्याम्॥ ९॥

अविशे(ष ? षे) लुब्विहितः पूर्वेण। विशेषार्थोऽयमारम्भः। श्रवणशब्दादश्वत्थशब्दाच्चोत्पन्नस्य प्रत्ययस्य लुब् भवति संज्ञायां विषये। श्रवणा रात्रिः। अश्वत्थो मुहूर्तः। लुपि युक्तवद्भावो न भवति। निपातनात् 'विभाषा फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्य' इति। संज्ञायामिति किम्। श्रावणी रात्रिः। आश्वत्थी रात्रिः। अ(श्विनी ? श्वत्थ)शब्देनाश्विनीनक्षत्रमुच्यते॥

## द्वन्द्वाच्छः॥ १०॥

नक्षत्रद्वन्द्वात् तृतीयासमर्थाद् युक्ते काले छप्रत्ययो भवति विशेषे चाविशेषे च। राधानुराधीया रात्रिः। तिष्यपुनर्वसवीयमहः। अविशेषे अद्य राधानुराधीयः। अद्य तिष्यपुनर्वसवीयम्। लुपं परत्वाद् बाधते॥

## दृष्टं साम डिद्वा॥ ११॥

तेनेति तृतीयासमर्थाद् दृष्टमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो डिद्वा भवति, यद् दृष्टं साम चेत् तद् भवति। वसिष्ठेन दृष्टं साम वासिष्ठम्। वैश्वामित्रम्। क्रौञ्चम्। एवमग्निना दृष्टं साम आग्नेयम्। उशनसा दृष्टमौशनसम्। डित्त्वेन हलन्तानामेव विशेषः॥

## वामदेवाड् ड्यड्ड्यौ॥ १२॥

वामदेवशब्दात् तृतीयासमर्थाद् दृष्टं सामेत्येतस्मिन्नर्थे ड्यत् ड्यौ इत्येतौ प्रत्ययौ भवतः। अणोऽपवादौ। वामदेवेन दृष्टं साम वामदेव्यम्। डित्करणं किम्। 'ययतोश्चातदर्थे' इति नञ उत्तरस्यान्तोदात्तत्वे विधीयमाने अनयोर्ग्रहणं मा भूत्। निरनुबन्धकग्रहणपरिभाषया चानयोर्निवृत्तिः क्रियते। अवामदेव्यम्॥

## गोत्रादङ्कवत्॥ १३॥

अपत्यविहितः प्रत्ययो गोत्रम् । यथा तस्याङ्क इत्यर्थे विवक्षिते गोत्रात् प्रत्ययो भवति, तथैव तेन दृष्टं सामेत्यत्रार्थेऽपि भवति । औपगवेन दृष्टं साम औपगवकम् । गार्गकम् । कापटवकम् । गोत्रचरणाद्वुञ् भवति ॥

परिवृतो रथः ॥ १४ ॥

तेनेति तृतीयासमर्थात् परिवृत इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, योऽसौ परिवृतः रथश्चेत् स भवति । वस्त्रेण परिवृतो रथः वास्त्रः । काम्बलः । चार्मणः । रथ इति किम् । वस्त्रेण परिवृतः कायः । समन्ताद्वस्त्रादिभिर्वेष्टितः परिवृत इत्युच्यते । तेनेह न भवति । छात्रैः परिवृतो रथ इति ॥

पाण्डुकम्बलादिनिः ॥ १५ ॥

पाण्डुकम्बलशब्दात् तृतीयासमर्थात् परिवृतो रथ इत्येतस्मिन्नर्थे इनिप्रत्ययो भवति । अणोऽपवादः । पाण्डुकम्बली रथः । पाण्डुकम्बलशब्दो *गजास्तरणस्य वर्णकम्बलस्य वाचकः । मत्वर्थीयेनैव सिद्धे पुनर्वचनमणो निवृत्त्यर्थम् ॥

द्वैपवैयाघ्राभ्यां चर्मभ्यामञ् ॥ १६ ॥

द्वीपिव्याघ्रयोर्विकारभूते चर्माणि द्वैपवैयाघ्रशब्दौ । ताभ्यां चर्मविशेषणाभ्यां तृतीयासमर्थाभ्यां परिवृतो रथ इत्येतस्मिन्नर्थे अञ्प्रत्ययो भवति । अणोऽपवादः । स्वरे विशेषः । द्वैपेन चर्मणा परिवृतो रथः द्वैपः । वैयाघ्रः ॥

कुमारात् प्राथम्ये ॥ १७ ॥

परिवृत इत्यनुवर्तते । परिवरणस्य पाणिग्रहणस्य प्राथम्ये गम्यमाने कुमारशब्दादुपपत्तेरण्प्रत्ययो भवति । उभयतः स्त्रिया एव पाणिग्रहणप्राथम्याद्विशेषणम् । सा प्रथमपाणिग्र(हणात्) कुमारं पतिमुपपन्ना कौमारी भार्या । 'प्रातिपदिकग्रहणे लिङ्गविशिष्टग्रहणमि'ति कुमारीशब्दादपि । प्रथमपाणिग्रहणां कुमारीमुपपन्नः पतिः कौमारः पतिः ॥

---

* 'राजास्तरणस्ये'ति काशिका ।

## तत्रोद्धृतं पात्रेभ्यः ॥ १८ ॥

तत्रेति सप्तम्यर्थेभ्यः पात्रवाचिभ्यः उद्धृतं भुक्तोच्छिष्टमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । शरावे उद्धृत ओदनः शारावः । माल्लः । कार्परः । पात्रेभ्य इति किम् । पाणावुद्धृत ओदनः । सप्तमीसमर्थविभक्तिः 'क्षीराड्ढञि'ति यावदनुवर्तते ॥

## स्थण्डिलाच्छेते व्रती ॥ १९ ॥

स्थण्डिलशब्दात् सप्तमीसमर्थात् शेत इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यः शेते स व्रती चेद् गम्यते । स्थण्डिले शेते स्थाण्डिलो भिक्षुः । व्रतीति किम् । स्थण्डिले शेते शूद्रः ॥

## संस्कृतं भक्ष्यम् ॥ २० ॥

तत्रेति सप्तमीसमर्थात् संस्कृतमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । यत् तत् संस्कृतं भक्ष्यं चेत् तद् भवति । खरविशदमभ्यवहार्यं भक्ष्यम् । सत उत्कर्षाधानं संस्कारः । भ्राष्ट्रे संस्कृता लाजाः भ्राष्ट्राः । कालशाः । भक्ष्यमिति किम् । पुष्प*पदे संस्कृतो मालागुणः ॥

## शूलोखाभ्यां यत् ॥ २१ ॥

शूलशब्दादुखाशब्दाच्च सप्तमीसमर्थात् संस्कृतं भक्ष्यमित्येतस्मिन्नर्थे यत्प्रत्ययो भवति । अणोऽपवादः । शूले संस्कृतं मांसं शूल्यम् । उख्यम् ॥

## दध्नष्ठक् ॥ २२ ॥

दधिशब्दात् सप्तमीसमर्थात् संस्कृतं भक्ष्यमित्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । दध्नि संस्कृतं दाधिकम् । ननु संस्कृतार्थे प्राग्वहतेष्ठकं वक्ष्यति । तेनैव सिद्धम् । नैवम् । दध्ना(पि ? हि) तत् संस्कृतं, यस्य दधिकृतमेवोत्कर्षाधानम् । इह तु दधि केवलमाधारभूतं, द्रव्यान्तरेण लवणादिना संस्कारः क्रियते ॥

## उदश्वितो वा ॥ २३ ॥

उदश्विच्छब्दात् सप्तमीसमर्थात् संस्कृतं भक्ष्यमित्येतस्मिन्नर्थे ठक्-

---

* 'पुटे' इति काशिका ।

प्रत्ययो भवति वा । औदश्वित्कः । 'इसुसुक्तान्तात्कः' । पक्षे ओदश्वितः ॥

क्षीराड्ढञ् ॥ २४ ॥

क्षीरशब्दात् सप्तमीसमर्थात् संस्कृतं भक्ष्यमित्येतस्मिन्नर्थे ढञ्-प्रत्ययो भवति । अणोऽपवादः । क्षी(र ? रे) संस्कृता क्षैरेयी यवागूः ॥

सास्मिन् पौर्णमासी संज्ञायाम् ॥ २५ ॥

सेति प्रथमासमर्थात् अस्मिन्निति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति यत्तत् प्रथमासमर्थं पौर्णमासी चेत् सा भवति । संज्ञायामिति समुदायोपाधिः । प्रत्ययान्तेन चेत् संज्ञा गम्यत इति । मासार्धमाससंवत्सराणां सैषा संज्ञा । पौषी पौर्णमासी अस्मिन् मासे पौषो मासः । पौषोऽर्ध-मासः । पौषः संवत्सरः । इह न भवति — पौषी पौर्णमासी अस्मिन् दशरात्र इति । (ए ? भृत)के मासे च न भवति ॥

अश्वत्थाग्रहायणीभ्यां ठक् ॥ २६ ॥

सास्मिन् पौर्णमासी(ति) सर्वमनुवर्तते । अश्वत्थाग्रहायणीशब्दाभ्यां प्रथमासमर्थाभ्यां पौर्णमास्युपाधिकाभ्यामस्मिन्निति सप्तम्यर्थे ठक्प्रत्ययो भवति । अणोऽपवादः । अश्व( त्थः ? त्थयुक्ता) पौर्णमासी अस्मिन् आश्वत्थिकः । एवमाग्रहायणिको मासः अर्धमासः संवत्सरो वा ॥

फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यो[1] वा ॥ २७ ॥

फाल्गुन्यादयः पौर्णमासीशब्दास्तेभ्यो वा ठक्प्रत्ययो भवति । 'सास्मिन् पौर्णमासी संज्ञायामि'त्येतस्मिन् विषयेऽणि प्राप्ते पक्षे ठक् विधीयते । फाल्गुनो मासः । फाल्गुनिको मासः । श्रावणो मासः । श्रावणिको मासः । कार्त्तिकः कार्त्तिकिकः । चैत्रः चैत्रिकः ॥

सास्य देवता ॥ २८ ॥

सेति प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत्तत् प्रथमासमर्थं देवता चेत् सा भवति । यागसम्प्रदानं देवता देयस्य पुरोडाशादेः स्वामिनी । अस्मिन्नभिधेये प्रत्ययः । इन्द्रो देवता अस्य ऐन्द्रं

---

१. 'त्रिकीभ्यो' क. पाठः.

हविः । आदित्यम् । बार्हस्पत्यम् । देवतेति किम् । कन्या देवतास्य । कथमैन्द्रो मन्त्रः । मन्त्रस्तुत्यमपि देवतेत्युपचरन्ति । कथमाग्नेयो वै ब्राह्मणः । उपमानाद् भविष्यति । 'महाराजप्रोष्ठपदाभ्यामि'ति यावत् सास्य देवतेत्यधिकारः । सेति प्रकृते पुनस्समर्थविभक्तिनिर्देशः संज्ञानिवृत्त्यर्थः ॥

कस्येच्च ॥ २९ ॥

कशब्दो देवतायाः प्रजापतेर्वाचकः । ततः पूर्वेणैव स प्रत्ययः सिद्धः । इकारादेशार्थं वचनम् । कस्येकारादेशो भवति प्रत्ययसन्नियोगेन । कायं हविः । 'कायमेकादशकपालं निर्वपेत्' ॥

शुक्राद् घन् ॥ ३० ॥

शुक्रशब्दात् सास्य देवतेत्यस्मिन् विषये घन्प्रत्ययो भवति । अणोऽपवादः । शुक्रियं हविः । शुक्रियोऽध्यायः ॥

पैङ्गाक्षीपुत्रादिभ्यश्छः ॥ ३१ ॥

पैङ्गाक्षीपुत्रप्रभृतिभ्यः शब्देभ्यः सास्य देवतेत्यस्मिन्नर्थे (ए ? छ)-प्रत्ययो भवति । पैङ्गाक्षीपुत्रीयम् । पैङ्गाक्षीपुत्रादयः प्रयोगानुसारेण द्रष्टव्याः ॥

शतरुद्राद् घश्च ॥ ३२ ॥

शतरुद्रशब्दात् सास्य देवतेत्येतस्मिन्नर्थे घप्रत्ययो भवति । चकारात् छश्च । शतरुद्रियम् । शतरुद्रीयम् ॥

अपोनपादपान्नपातोस्तृ चातः ॥ ३३ ॥

अपोनपाच्छब्दादपान्नपाच्छब्दाच्च सास्य देवतेत्येतस्मिन्नर्थे घछप्रत्ययौ भवतः । तत्सन्नियोगादनयोरातस्तृ इत्ययमादेशो भवति । (अपोनप्त्रियम् ।) अपोनप्त्रीयं हविः । अपान्नप्त्रियम् । अपान्नप्त्रीयम् ॥

महेन्द्राद्वा ॥ ३४ ॥

महेन्द्रशब्दात् सास्य देवतेत्येतस्मिन्नर्थे घछप्रत्ययौ वा भवतः । महेन्द्रियम् । महेन्द्रीयम् । माहेन्द्रम् ॥

[1] स्तृन् चा' ख. पाठ..

सोमाट्ट्यण् ॥ ३५ ॥

सोमशब्दात् सास्य देवतेत्यस्मिन्विषये ट्यण्प्रत्ययो भवति । अणोऽपवादः । णकारो वृद्ध्यर्थः । टकारो ङीबर्थः । सोमो देवतास्य सौम्यं हविः । सौम्यं सूक्तम् । सौम्यी ऋक् ॥

वाय्वृतुपित्रुषसो यत् ॥ ३६ ॥

वाय्वादिभ्यः शब्देभ्यो यत्प्रत्ययो भवति सास्य देवतेत्यस्मिन्विषये । अणोऽपवादः । वायुर्देवतास्य वायव्यं हविः । ऋतव्यम् । पित्र्यम् । उषस्यम् ॥

द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छश्च ॥ ३७ ॥

द्यावापृथिव्यादिभ्यः शब्देभ्यः छप्रत्ययो भवति । चकारात् यच्च सास्य देवतेत्यस्मिन् विषये । अणो ण्यस्य चापवादः । द्यौश्च पृथिवी च द्यावापृथिव्यौ । ते देवते अस्य, द्यावापृथिवीयम् । द्यावापृथिव्यम् । शुनश्च सीरश्च शुनासीरौ । तौ देवते अस्य शुनासीरीयम् । शुनासीर्यम् । शुनो वायुः । सीर आदित्यः । मरुत्वान् देवता अस्य मरुत्वतीयम् । मरुत्वत्यम् । अग्नीषोमीयम् । अग्नीषोम्यम् । वास्तोष्पतीयम् । वास्तोष्पत्यम् । गृहमेधीयम् । गृहमेध्यम् ॥

कालेभ्यो भववत् ॥ ३८ ॥

कालविशेषवाचिभ्यः शब्देभ्यो भववत् प्रत्ययो भवति सास्य देवतेत्यस्मिन्विषये । 'कालेभ्यो ठञि'ति प्रकरणेन भवेऽर्थे ये प्रत्ययास्ते सास्य देवतेत्यस्मिन्नर्थेऽपि तथैव भवन्ति । वद्ग्रहणं सर्वसादृश्यपरिग्रहार्थम् । यथा मासे भवं मासिकम् आर्धमासिकं सांवत्सरिकं वासन्तं प्रावृषेण्यं, तथा मासो देवता अस्य मासिकमित्यादि ॥

महाराजप्रोष्ठपदाभ्यां ठञ् ॥ ३९ ॥

महाराजशब्दात् प्रोष्ठपदशब्दाच्च ठञ्प्रत्ययो भवति सास्य देवतेत्यस्मिन् विषये । महाराजो देवता अस्य माहाराजिकः । प्रौष्ठपदिकः ॥

आदेश्छन्दसः प्रगाथे ॥ ४० ॥

छन्दोविशेषवाचिभ्यः प्रत्ययार्थविशेषणप्रगाथस्यादिभूतेभ्यः प्रगाथेऽर्थे यथाविहितं प्रत्ययो भवति। पङ्क्तिरादिरस्य प्रगाथस्य पाङ्क्तः प्रगाथः। आनुष्टुभः। जागतः। आदेरिति किम्। अनुष्टुप् मध्यमस्य प्रगाथस्य। छन्दस इति किम्। *इदित्यशब्द आदिरस्य प्रगाथस्य। प्रगाथ इति किम्। पङ्क्तिरादिरस्यानुवाकस्य। प्रगाथशब्दः क्रियानिमित्तकः क्वचिदेव मन्त्रविशेषे वर्तते। यत्र द्वे ऋचौ प्रगथनेन प्रगानेन वा तिस्रः क्रियन्ते स प्रगथनात् प्रकर्षगायनाद्वा प्रगाथ इत्युच्यते॥

## योद्धृप्रयोजनेभ्यः सङ्ग्रामे॥ ४१॥

योद्धृवाचिभ्यः प्रयोजनवाचिभ्यश्च शब्देभ्यः प्रथमासमर्थेभ्यः सङ्ग्रामेऽभिधेये यथाविहितं प्रत्ययो भवति। अहिमाला योद्धारोऽस्य सङ्ग्रामस्य आहिमालः। दैवासुरः। भारतः सङ्ग्रामः। प्रयोजनवाचिभ्यः— सुभद्रा प्रयोजनमस्य सौभद्रः सङ्ग्रामः। गौरिमित्रः। योद्धृप्रयोजनेभ्य इति किम्। सुभद्रा प्रेक्षिका अस्य सङ्ग्रामस्य। सङ्ग्राम इति किम्। सुभद्रा प्रयोजनमस्य दानस्य॥ ... ... ...

## प्रहरणादस्यां क्रीडायां णः॥ ४२॥

प्रहरणवाचिनः शब्दात् प्रथमासमर्थात् अस्यां क्रीडायामित्यर्थे णप्रत्ययो भवति। दण्डं प्रहरणमस्यां क्रीडायां दाण्डा क्रीडा। मौष्टा क्रीडा। प्रहरणादिति किम्। माला भूषणमस्यां क्रीडायाम्। क्रीडायामिति किम्। खड्गः प्रहरणमस्यां सेनायाम्॥

## भावघञो ञः॥ ४३॥

अस्यामिति वर्तते। भावार्थविहितघञन्तात् प्रथमासमर्थादस्यामिति सप्तम्यर्थे स्त्रीलिङ्गे ञप्रत्ययो भवति। घञ इति कृद्ग्रहणम्। तत्र गतिकारकपूर्वमपि गृह्यते। श्येनपातोऽस्यां वर्तते श्यैनंपाता। तैलंपाता भूमिः क्रीडा वा। भाव इति किम्। प्राकारोऽस्यां वर्तते। घञ इति किम्। श्येनपतनमस्यां वर्तते॥

## तदधीते तद्वेद॥ ४४॥

---

* 'उदुत्य' इति काशिका।

तदिति द्वितीयासमर्थादधीते वेद इत्येतयोरर्थयोर्यथाविहितं प्रत्ययो भवति । छन्दोऽधीते वेद वा छान्दसः । वैयाकरणः । नैरुक्तः । निमित्तानि वेद नैमित्तिकः । द्विस्तद्ग्रहणमधीयानविदुषोः पृथग्विधानार्थम् । अध्ययनसाहचर्याद्वेदनमपि ग्रन्थविषयं प्रतिपत्तव्यम् । तेन यो- (गः ? गं) वेदेत्यादौ न भवति ॥

ऋतुभ्यष्ठक् ॥ ४५ ॥

ऋतुविशेषवाचिभ्यः शब्देभ्यष्ठक्प्रत्ययो भवति तदधीते तद्वेदेत्येतस्मिन्नर्थे । अणोऽपवादः । (अग्निष्टोममधीते वेद वा आग्निष्टोमिकः वाजपेयिकः) ॥

नोक्थान्यसानि(?) ॥ ४६ ॥

उक्थलोकायतन्यायन्यासपुनरुक्तयज्ञचर्चाक्रमेतरश्लक्ष्णसंहितसङ्घाटपदक्रमेभ्यः ॥ ४७ ॥

... ... ... ... ... ... ... ... ...

उक्थशब्दः केषुचित् सामसु रूढः । यज्ञायज्ञीयात् परेण यानि गीयन्ते, नच तान्यधीयाने प्रत्यय इष्यते । किन्तर्हि, सामलक्षणे औक्थिक्ये वर्तमान उक्थशब्दः प्रत्ययमुत्पादयति । उक्थमधीते औक्थिकः । औक्थिक्यमधीत इत्यर्थः । लौकायतिकः । नैयायिकः । नैयासिकः । पौनरुक्तिकः । याज्ञिकः । चार्चिकः । क्रामेतरिकः । श्लाक्ष्णिकः । सांहितिकः । (साङ्घाटिकः) । पादक्रमिकः ॥

वृत्तिसङ्ग्रहायुर्वेदगुणगणानुपदद्विपदज्योतिषगणितानुसूलक्ष्यलक्षणेभ्यः ॥ ४८ ॥

वृत्त्यादिभ्यः शब्देभ्यष्ठक्प्रत्ययो भवति तदधीत तद्वेदेत्येतस्मिन् विषये । वृत्तिमधीते वेद वा वार्त्तिकः । साङ्ग्रहिकः । आयुर्वेदिकः । गौणिकः । गाणिकः । आनुपदिकः । द्वैपदिकः । ज्यौतिषिकः । गाणितिकः । अनुसूर्नाम ग्रन्थः । तमधीते । आनुसु (त ? कः) । पूर्ववदिकस्य कः । 'केसमानस्ये'ति ह्रस्वः । लाक्षिकः । लाक्षणिकः ॥

वसन्तवर्षाशरद्धेमन्तशिशिरप्रथमचरमानुगुणकल्पाथर्वणेतिहासपुराणेभ्यः ॥ ४९ ॥

वसन्तादिभ्यः शब्देभ्यस्तदधीते तद्वेदेत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति। वसन्तसहचरितो ग्रन्थः वसन्तः। तमधीते तद्वेद वा वासन्तिकः। एवं वार्षिकः। शारदिकः। हैमन्तिकः। शैशिरिकः। प्राथमिकः। चारमिकः। आनुगुणिकः। काल्पिकः। अथर्वणा प्रोक्तमाथर्वणो वेदस्तमधीते वेद वा आथर्वणिकः। पाठसामर्थ्यात् प्रोक्तादपि न लुक्। ऐतिहासिकः। पौराणिकः॥

आख्यानाख्यायिका[1]भ्यः॥ ५०॥

बहुवचनेनार्थग्रहणम्। आख्यानार्थेभ्य आख्यायिकार्थेभ्यश्च शब्देभ्यस्तदधीते तद्वेदेत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति। आख्यानार्थात् तावत् यवक्रीत्याख्यानमधीते यावक्रीतिकः। प्रियङ्गुमधीते प्रैयङ्गविकः। आख्यायिकार्थात् वासवदत्ताख्यायिकामधीते वासवदत्तिकः। सौमनोत्तरिकः॥

लक्षणकल्पसूत्रान्तादकल्पादेः॥ ५१॥

लक्षणान्तात् कल्पान्तात् सूत्रान्ताच्च शब्दात् अकल्पादेष्ठक्प्रत्ययो भवति तदधीते तद्वेदेत्येतस्मिन् विषये। गोलक्षणमधीते गौलक्षणिकः। आश्वलक्षणिकः। मातृकल्पिकः। पाराशरकल्पिकः। वृत्तिसूत्रमधीते वार्त्तिसूत्रिकः। साङ्ग्रहसूत्रिकः। अकल्पादेरिति किम्। काल्पसूत्रः। अणेव भवति॥

विद्यान्तादनङ्गक्षत्रधर्मत्रिपूर्वात्॥ ५२॥

विद्यान्तात् प्रातिपदिकात् अङ्गादिपूर्वपदवर्जितात् ठक्प्रत्ययो भवति तदधीते तद्वेदेत्येतस्मिन् विषये। सार्पविद्यिकः। वायसविद्यिकः। अनङ्गक्षत्रधर्मत्रिपूर्वादिति किम्। अङ्गविद्यामधीते आङ्गविद्यः। क्षात्रविद्यः। धार्मविद्यः। त्रैविद्यः। संसर्गपूर्वादपि केचिन्नेच्छान्ति। सांसर्गविद्यः इति॥

पदोत्तरपदाट्ठन्॥ ५३॥

पदोत्तरपदशब्दात् ठन्प्रत्ययो भवति तदधीते तद्वेदेत्येतस्मिन विषये। पदोत्तरपदिकः। अन्ये तु पदोत्तरात् पदादिति व्याचक्षते। तन्मते पूर्वपदिकः इत्यपि भवति॥

1. 'कार्थेभ्यः' ख. पाठः.

शतषष्ट्यादेः पथः ष्ठन् ॥ ५४ ॥

शतशब्दपूर्वात् षष्टिशब्दपूर्वाच्च पथिन्शब्दात् तदधीते तद्वेदेत्येतास्मिन् अर्थे ष्ठन्प्रत्ययो भवति । शतपथिकः । शतपथिकी । षष्टिपथिकः । षष्टिपथिकी । अणपीति केचित् । शातपथः ॥

अनुब्राह्मणादिनिः ॥ ५५ ॥

अनुब्राह्मणशब्दादिनिप्रत्ययो भवति तदधीते तद्वेदेत्येतस्मिन् विषये । अणपवादः । ब्राह्मणसदृशो ग्रन्थः अनुब्राह्मणः । तदधीते अनुब्राह्मणी अनुब्राह्मणिनौ । 'अत इनिठनौ' इत्यनेनैव सिद्धे अणो निवृत्त्यर्थं वचनम् ॥

क्रमपदशिक्षामीमांसासामभ्यो वुन् ॥ ५६ ॥

क्रमादिभ्यः शब्देभ्यो वुन्प्रत्ययो भवति तदधीते तद्वेदेत्येतास्मिन् विषये । क्रमकः । पदकः । शिक्षकः । मीमांसकः । सामकः ॥

सर्वसादेर्लुक् ॥ ५७ ॥

सर्वश्च सश्च सर्वसौ । तावादी यस्य तस्मात् सर्वसादेः शब्दात् तदधीते तद्वेदेत्येतस्मिन् अर्थे विहितस्य प्रत्ययस्य लुग् भवति । सर्वादेः सर्वतन्त्रमधीते सर्वतन्त्रः । सर्ववेदः । सवार्त्तिकः । ससङ्ग्रहः । कथं द्वौ वेदावधीते द्विवेदः । पञ्चव्याकरणः इत्यादिषु 'द्विगोरनपत्ये' इति लुक् सिद्ध एव ॥

प्रोक्तात् ॥ ५८ ॥

प्रोक्तसहचरितः प्रत्ययः प्रोक्तः । प्रोक्तप्रत्ययान्ताद् अध्येतृवेदित्रोरुत्पन्नस्य प्रत्ययस्य लुग् भवति । पाणिनिना प्रोक्तं पाणिनीयम् । तदधीते वेत्ति वा पाणिनीयः । आपिशलिना प्रोक्तम् । 'इञश्च' इत्यण् । आपिशलम् । तदधीते वेत्ति वा आपिश(ला ? लात्) पुनरण् । तस्य लुक् । आपिशलः । स्त्रियां स्वरे च विशेषः पाणिनीया ब्राह्मणीति । लुक्यणन्तत्वेऽप्युपसर्जनत्वात् स्त्रियां ङीब् न भवति ॥

सङ्ख्याकनः सूत्रवचनात् ॥ ५९ ॥

सङ्ख्यायाः कन् सङ्ख्याकन् तस्मादित्ययमर्थः। सूत्रवाचिनः सङ्ख्याशब्दात् क(न्)प्रत्ययान्तात् तदधीते तद्वेदेत्येतस्मिन्नर्थे समुत्पन्नस्य प्रत्ययस्य लुग् भवति। अप्रोक्तार्थ आरम्भः। अष्टावध्यायाः परिमाणमस्य अष्टकं पाणिनीयम्। तदधी(य)ते अष्टकाः पाणिनीयाः। दशका वैयाघ्रपदीयाः। त्रि(का) काशकृत्स्नाः। संख्येति किम्। (क? का)लापकमधीते कालापकः। कन इति किम्। चतुष्टयमधीते, चातुष्टयः॥

तस्य समूहः॥ ६०॥

तस्येति षष्ठीसमर्थात् समूह इत्येतस्मिन् विषये यथाविहितं प्रत्ययो भवति। कोऽस्य विषयः चित्तवदाद्युदात्तमगोत्रं यस्य च नान्यत् प्रतिपदविधानमस्ति, सोऽस्य विषयः। काकानां समूहः काकम्। शौकं बाकं वा। 'ग्रामजनबन्धुसहायेभ्यस्तलि'ति यावत् समूहाधिकारः॥

भिक्षाक्षेत्रकरीषगर्भिणीदक्षिणाङ्गारसहस्राथर्वञ्चर्मन्युवतिपदातिपद्धतिभ्योऽण्॥ ६१॥

भिक्षादिभ्यः शब्देभ्योऽण्प्रत्ययो भवति तस्य समूह इत्येतस्मिन् विषये। अण्ग्रहणं बाधकबाधनार्थम्। भिक्षाणां समूहो भैक्षम्। क्षैत्रम् कारीषम्। गार्भिणम्। दाक्षिणम्। आङ्गारम्। साहस्रम्। आथर्वणम्। चार्मणम्। युवतिशब्दस्य पाठसामर्थ्यात् पुंवद्भावो न भवति। यौवतम्। पादातम्। पाद्धतम्॥

खण्डिकाहन्हलबन्धयुगवस्त्रबडवाभिक्षुकशुकोलूकश्वानुदात्तादेरञ्॥ ६२॥

खण्डिकादिभ्यः शब्देभ्योऽनुदात्तादिभ्यश्चाञ्प्रत्ययो भवति। खण्डिकादिवचनमाद्युदात्तार्थमचित्तार्थं च। खण्डिकानां समूहः खाण्डिकम्। अह्नां समूहः आह्नम्। हालबन्धम्। युगवस्त्रेति व्यस्तं समस्तं च। यौगम्। वास्त्रम्। यौगवस्त्रम्। बाडवम्। भैक्षुकम्। शौकम्। औलूकम्। श्रौवम्। अनुदात्तादिभ्यः—कापोतम्। मायूरम्। तैत्तिरम्॥

क्षुद्रकमालवात् सेनायाम् ॥ ६३ ॥

क्षुद्रकमालवशब्दात् सेनायामञ्प्रत्ययो भवति तस्य समूह इत्येतस्मिन् विषये । क्षुद्रकाणामपत्यानि इति क्षुद्रकशब्दात् 'तुल्यनामभ्यः क्षत्रियजनपदेभ्यो (का? रा) जनि चे'त्यञ् । मालवानामपत्यानीति मालवात् 'वृद्धेत्कोसला(न्ता? जा)दाञ्ञ्यङ्' इति ञ्यङ् । तयोः 'अञादीनामस्त्रियां बहुषु' इति लुक् । क्षुद्रकाश्च मालवाश्च क्षुद्रकमालवाः । तेषां समूह इति क्षौद्रकमालवी सेना । 'गोत्रोक्षोष्ट्र —' इत्यादिना वुञि प्राप्ते वचनम् । सेनायामिति किम् । क्षौद्रकमालव(क)म् ॥

गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजवृद्धेभ्यो वुञ् ॥ ६४ ॥

गोत्रादिभ्यो वुञ्प्रत्ययो भवति तस्य समूह इत्येतस्मिन्विषये । गोत्रादिभ्योऽपत्यमात्रविहितप्रत्ययान्तं गृह्यते । औपगवानां समूहः औपगवकम् । गार्गायणकम् । औक्षकम् । औष्ट्रकम् । औरभ्रकम् । राजकम् । राजन्यकम् । राजपुत्रकम् । वात्सकम् । मानुष्यकम् । आजकम् । वार्धकम् । राजन्यमनुष्यशब्दयोः 'प्रकृत्याके राजन्यमनुष्ययुवान' इति प्रकृतिभावाद् 'आपत्यस्य च तद्धितेऽनाती'ति यलोपो न भवति ॥

केदाराद्यञ्च ॥ ६५ ॥

केदारशब्दाद् यञ्प्रत्ययो भवति । चकाराद् वुञ् तस्य समूह इत्येतस्मिन् विषये । अचित्तलक्षणस्य ठकोऽपवादः । केदाराणां समूहः कैदार्यं कैदारकम् ॥

कवचिनश्च ठञ् ॥ ६६ ॥

कवचिन्शब्दात् ठञ्प्रत्ययो भवति तस्य समूह इत्येतस्मिन् विषये । कवचिनां समूहः कावचिकम् । चकारः केदारादित्यस्यानुकर्षणार्थः । कैदारिकम् ॥

हस्त्यचित्तेभ्यष्ठक् ॥ ६७ ॥

---

१. 'जाद्युत्' क. ख. पाठः.

हस्तिशब्दादचित्तार्थवाचिभ्यश्च ठक्प्रत्ययो भवति तस्य समूह इत्येतस्मिन् विषये । हस्तिनां समूहः हास्तिकम् । अचित्तार्थेभ्यः — आपूपिकम् । शाष्कुलिकम् । मौदकिकम् ॥

धेनोरनञः ॥ ६८ ॥

नञ्वर्जिताद् धेनुशब्दात् ठक्प्रत्ययो भवति तस्य समूह इत्येतस्मिन् विषये । धैनुकम् । इसुसुक्तान्तात् को वक्ष्यते । अनञ इति किम् । आधेनवम् । अनञ इति ज्ञापयति सामूहिकेषु तदन्तविधिरस्तीति । गौधेनुकम् । वानहस्तिकम् । 'उत्सोदपान —' इत्यादिनाञि प्राप्ते वचनम् ॥

गणिकाब्राह्मणमाणवबाडवेभ्यो यञ् ॥ ६९ ॥

गणिकादिभ्यः शब्देभ्यः समूहे यञ्प्रत्ययो भवति । गणिकानां समूहो गाणिक्यम् । ब्राह्मण्यम् । माणव्यम् । बाडव्यम् । अण् प्राप्तः ॥

केशाद्वा ॥ ७० ॥

केशशब्दात् यञ्प्रत्ययो वा भवति तस्य समूह इत्येतस्मिन् विषये । केशानां समूहः कैश्यम् । कैशिकम् ॥

अश्वाच्छः ॥ ७१ ॥

वेत्यनुवर्तते । अश्वशब्दात् समूहे छप्रत्ययो वा भवति । अश्वीयम् । आश्वम् ॥

पशुपुरुषाभ्यां णढञौ ॥ ७२ ॥

पशुपुरुषाभ्यां णढञौ प्रत्ययौ यथासङ्ख्यं भवतः । पाशवम् । पौरुषेयम् ॥

अह्नः खः क्रतौ ॥ ७३ ॥

अहन्शब्दात् खप्रत्ययो भवति तस्य समूह इत्येतास्मिन् विषये क्रतौ वाच्ये । आह्नां समूहः अहीनः । क्रताविति किम् । आ(हं ? ह्नम्) । खण्डिकादित्वादञ् ॥

पृष्ठाद्यः ॥ ७४ ॥

पृष्ठशब्दाद् यप्रत्ययो भवति समूहे क्रतुविशेषे । पृष्ठानां समूहः पृष्ठ्यः । षडहः क्रतुः ॥

**पाशतृणधूमाङ्गारगलवातपिटकपिटाकशकटहलनडवनेभ्यश्च ॥ ७५ ॥**

पाशादिभ्यः शब्देभ्यो यप्रत्ययो भवति तस्य समूह इत्येतस्मिन् विषये । पाशानां समूहः पाश्या । तृण्या । धूम्या । अङ्गार्या । गल्या । वात्या । पिटक्या । पिटाक्या । शकट्या । हल्या । नड्या । वन्या ॥

**वातादूलश्च[1] ॥ ७६ ॥**

वातशब्दादूलप्रत्ययो भवति । चकाराद्यश्च । वातानां समूहो वातूलः । वात्या ॥

**गोस्त्रश्च ॥ ७७ ॥**

गोशब्दात् समूहे त्रप्रत्ययो भवति । चकाराद्यश्च । गवां समूहो गोत्रा गव्या ॥

**रथात् कड्यच्च ॥ ७८ ॥**

रथशब्दात् तस्य समूह इत्येतस्मिन्नर्थे कड्यच्प्रत्ययो भवति । चकाराद्यश्च । रथकड्या । रथ्या ॥

**खलादिनिश्च ॥ ७९ ॥**

खलशब्दात् समूह इनिप्रत्ययो भवति । चकाराद्यश्च । खलिनी खल्या ॥

**ऊककुन्दुमाभ्याम् ॥ ८० ॥**

ऊककुन्दुमाभ्यामिनिप्रत्ययो भवति समूहे । ऊकिनी । कुन्दुमिनी ॥

**ग्रामजनबन्धुसहायेभ्यस्तल् ॥ ८१ ॥**

ग्रामादिभ्यस्तल्प्रत्ययो भवति तस्य समूह इत्येतस्मिन् विषये । ग्रामाणां समूहो ग्रामता । जनता । बन्धुता । सहायता । समूहाधिकारे पाशादिविहितप्रत्ययान्तानां स्त्रीत्वं, पृष्ठ्योऽहीन इति पुंस्त्वम्, अन्येषां नपुंसकत्वं स्वभावात् ॥

---

1. 'च' ख.ग. पाठः.

पितृमातृभ्यां भ्रातरि व्यड्डुलचौ ॥ ८२ ॥

समूह इति निवृत्तम् । तस्येति षष्ठीसमर्थमात्रमेवानुवर्तते । पितृमातृशब्दाभ्यां भ्रातर्यभिधेये व्य ड्डुलच् इत्येतौ प्रत्ययौ यथासङ्ख्यं भवतः । पितुर्भ्राता पितृव्यः । मातुः भ्राता मातुलः ॥

पितरि डामहच् ॥ ८३ ॥

पितृमातृशब्दाभ्यां डामहच्प्रत्ययो भवति पितर्यभिधेये । पितुः पिता पितामहः । (मातुः पिता मातामहः ।)

मातरि षिच्च ॥ ८४ ॥

पितृमातृभ्यां मातर्यभिधेयायां डामहच्प्रत्ययो भवति । स च षिद् भवति । (पितुर्माता) पितामही । मातुर्माता मातामही । षित्त्वात् ङीष् ॥

अवेर्दुग्धे सोढदूसमरीसचः ॥ ८५ ॥

अविशब्दाद् दुग्धेऽर्थे सोढ दूस मरीसच् इत्येते प्रत्यया भवन्ति । अवेर्दुग्धम् अविसोढम् । अविदूसम् । अविमरीसम् ॥

तिलान्निष्फलात् पिञ्जपेजौ ॥ ८६ ॥

तिलशब्दान्निष्फलत्वोपाधिकेऽर्थे वर्तमानात् पिञ्ज पेज इत्येतौ प्रत्ययौ भवतः । निष्फलस्तिलः तिलपिञ्जः । तिलपेजः ॥

विषयो देशः ॥ ८७ ॥

तस्येति षष्ठीसमर्थविभक्तिरनुवर्तते । षष्ठीसमर्थाद्विषय इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । योऽसौ विषयः स देशश्चेद् भवति । शिबीनां विषयः शैबो देशः । देश इति किम् । देवदत्तस्य विषयोऽनुवाकः । स्वभ्यस्त इत्यर्थः ॥

न बहुवचनविषयात् ॥ ८८ ॥

राजन्यशैलूषदेवयातवसातिवैतिलवसनोदुम्बराम्बरीषपुत्रवैकर्णार्जुनायनजालन्धरायणशालङ्कायनेभ्यो वुञ् ॥ ८९ ॥

राजन्यादिशब्देभ्यो वुञ् भवति विषयो देश इत्यस्मिन् अर्थे । अणोऽपवादः । राजन्यानां विषये देशः राजन्यकः । शैलूषकः । दैवया-

१. 'न' ख. पाठः

तकः । वासातकः । वै(त ? ति)लकः । वासनकः । औदुम्बरकः । आम्बरीषपुत्रकः। वैकर्णकः । आर्जुनायनकः । जालन्धरायणकः । शालङ्कायनकः ॥

बैल्ववनबाभ्रव्यानृतात्मकामेयसांप्रीयदाक्ष्यूर्णनाभमालवत्रैगर्त्तवैराटिभ्यश्च ॥ ९० ॥

बैल्ववनादिभ्यः शब्देभ्यो वुञ्प्रत्ययो भवति विषयो देश इत्येतस्मिन्नर्थे । बैल्ववनानां विषयो देशः बैल्ववनकः । बाभ्रव्यकः । आनृतकः । आत्मकामेयकः । सां(प्र ? प्री)यकः । दा(क्षिणि ? क्ष)कः । और्णनाभकः । मालवकः । त्रैगर्त्तकः । वैराटकः । आदिग्रहणाद् यथादर्शनमन्येऽपि ॥

भौरिकिभौलिकिचौपयतचैटयतसैकयतकाणेयवाणिजकेभ्यो विधल् ॥ ९१ ॥

भौरिक्यादिभ्यः शब्देभ्यो विधल्प्रत्ययो भवति विषयो देश इत्येतस्मिन्नर्थे । अणोऽपवादः । भौरिकीणां विषयो देशः भौरि(कि)विधः । भौलिकिविधः। चौपयतविधः। चैटयतविधः। (सैकयतविधः।) काणेयविधः। वाणिजकविधः ॥

ऐषुकारिसौवीरशयाभ्रशयाण्डशयण्डशौण्डतुण्डदेवदासमित्रेभ्यो भक्तल् ॥ ९२॥

ऐषुकारिप्रभृतिभ्यः शब्देभ्यो भक्तल्प्रत्ययो भवति विषयो देश इत्यस्मिन् विषये । ऐषुकारिणां विषयो देशः ऐषुकारिभक्तः। सौवीरभक्तः। शयाभ्रभक्तः । शयाण्डभक्तः । शयण्डभक्तः । शौण्डभक्तः। तथा तुण्डदेवभक्तः । दासमित्रभक्तः ॥

द्याक्षत्र्याक्षसारस्यदासमित्रचान्द्रशौद्रो[1]स्र[2]खाऽदेरायनात् ॥ ९३ ॥

द्याक्षादिभ्य आयनान्तेभ्यो विषयो देश इत्यस्मिन् अर्थे भक्तल्प्रत्ययो भवति । द्याक्षायणानां विषयो देशः द्याक्षायणभक्तः। त्र्याक्षायणभक्तः।

---

१. 'भ्रो', २. 'द्र' ख. ग. पाठः.

सारस्यायनभक्तः । (दासामित्रायणभक्तः) । चान्द्रायणभक्तः । (शौद्रायणभक्तः । उस्रायणभक्तः ।) खाडायनभक्तः । आदिग्रहणादन्येऽपि आयनान्ता यथाप्रयोगमवगन्तव्याः ॥

वैश्वादिभ्यो देवधेनवमानवेभ्यः ॥ ९४ ॥

वैश्वपूर्वकेभ्यो देवधेनवमानवशब्देभ्यो विषयो देश इत्येतस्मिन्नर्थे भक्तल्प्रत्ययो भवति । वैश्वदेवानां विषयो देशः वैश्वदेवभक्तः । वैश्वधेनवभक्तः । वैश्वमानवभक्तः ॥

निवासे तन्नाम्नि ॥ ९५ ॥

तस्येति षष्ठीसमर्थान्निवास इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति देशनामधेये गम्यमाने । निवसन्त्यस्मिन्निति निवासः । ऋजुनावां निवासो देश आर्जुनावः । शैबः ॥

अदूरभवे ॥ ९६ ॥

षष्ठीसमर्थविभक्तिरनुवर्तते । तस्येति षष्ठीसमर्थाददूरभव इत्येतस्मिन्नर्थे तन्नाम्नि यथाविहितं प्रत्ययो भवति । विदिशाया अदूरभवं नगरं वैदिशम् । हैमवतम् ॥

तेन निर्वृत्ते ॥ ९७ ॥

तेनेति तृतीयासमर्थान्निर्वृत्त इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति देशनामधेये गम्यमाने । सहस्रेण निर्वृत्ता साहस्री परिखा । कुशाम्बेन निर्वृत्ता नगरी कौशाम्बी । हेतौ कर्तरि च यथायोगं तृतीया समर्थविभक्तिः ॥

तदिहास्ति च ॥ ९८ ॥

तदिति प्रथमासमर्थादिहेति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति । यत्तत् प्रथमासमर्थमस्ति चेत् तद्भवति । यत्तदिहेति निर्दिष्टं देशश्चेत् तदन्तनामा भवति । उदुम्बरा अस्मिन् देशे सन्ति औदुम्बरो देशः । बाल्बजः । *पार्षतः । मत्वर्थीयापवादो योगः । चकारः पूर्वेषां त्रयाणामर्थानामिह सन्निधानार्थः । तेनोत्तरेषु योगे(षु) चत्वारोऽप्यर्थाः सम्बध्यन्ते ॥

* 'पार्वत' इति काशिका ।

## ओरञ् ॥ ९९ ॥

चत्वारोऽर्था अनुवर्तन्ते। उवर्णान्तात् प्रातिपदिकात् यथायथं समर्थविभक्तियुक्तादञ्प्रत्ययो भवति निवासादिषु चतुर्ष्वर्थेषु । अणोऽपवादः । अ(न?र)ड्डु, आ(न?र)डवः । कक्षतु, काक्षतवः । कर्कटेलु, कार्कटेलवः । अञधिकारः प्राक् सुवास्त्वादिभ्यः ॥

## मतो बह्वचप्रकृतेः ॥ १०० ॥

बह्वच् प्रकृतिर्यस्यासौ बह्वच्प्रकृतिः । बह्वच्प्रकृतेः मतुबन्तात् प्रातिपदिकात् अञ्प्रत्ययो भवति चातुरर्थिकः । अणोऽपवादः । यथासम्भवमर्थः सम्बध्यते । ऐकटावतम् । सैन्दुकावतम् । वारणावतम् । बह्वच्प्रकृतेरिति किम् । आहिमतम् । यावमतम् । प्रकृतिग्रहणं किम् । बह्वजिति तद्विशेषणं यथा विज्ञायेत, मत्वन्तविशेषणं मा विज्ञायीति । मालावतां निवासो मालावती ॥

## बह्वचः कूपेषु ॥ १०१ ॥

बह्वचः प्रातिपदिकादञ्प्रत्ययो भवति चातुरर्थिकः कूपेष्वभिधेयेषु। अणोऽपवादः । यथासम्भवमर्थाः सम्बध्यन्ते । दीर्घवरत्रेण निर्वृत्तः दैर्घवरत्रः कूपः । कापिलवरत्रः ॥

## उदक् च विपाशः ॥ १०२ ॥

विपाशो नद्या उत्तरे कूले ये कूपास्तेष्वभिधेयेषु अञ्प्रत्ययो भवति चातुरर्थिकः । अबह्वजर्थ आरम्भः । दत्तेन निर्वृत्तः दात्तः कूपः । गौप्तः । उदगिति किम् । दक्षिणतो विपाशः कूपेष्वणेव भवति । दात्तः गौप्तः । स्वरे विशेषः । महती सूक्ष्मेक्षिका वर्तते (सूत्रकारस्य ।) ॥

## सङ्कलपुष्कलतूलासमूलासपलाशभल्लपालकपालबहुलेभ्यः ॥ १०३ ॥

कूपेष्विति निवृत्तम् । सङ्कलादिभ्यः शब्देभ्योऽञ्प्रत्ययो भवति चातुरर्थिकः । अणोऽपवादः । यथासम्भवमर्थसम्बन्धः । साङ्कलः

सङ्कलः। तन्निर्वृत्तः साङ्कलः। पौष्कलः। तौलासः। मौलासः। पालाशः। भाल्लपालः। काषालः। बाहुलः॥

उद्यातोड्डुपोत्पिषोत्पुटोत्पलपूलाससिकतापूतिकेभ्यः॥ [ १०४॥

उद्यातादिभ्यः शब्देभ्योऽञ्प्रत्ययो भवति चातुरर्थिकः। अणोऽपवादः। औद्यातः। औड्डुपः। औत्पिषः। औत्पुटः। औत्पलः। पौलासः। सैकतः। पौतिकः॥

कुम्भनिधानसुदत्तसुदक्षसुनेत्रसुभूमसुभृतराजभृतगोभृतेभ्यः॥ १०५॥

कुम्भादिभ्यः शब्देभ्यश्चातुरर्थिकोऽञ्प्रत्ययो भवति। अणोऽपवादः। कौम्भः। नैधानः। सौदत्तः। सौदक्षः। सौनेत्रः। सौभूमः। सौभृतः। राजभृतः। गौभृतः॥

गम्भीरगम्भीरेतराभिषिक्तशाताहतानियतनिवेशेभ्यः॥ [ १०६॥

गभीरादिभ्योऽञ्प्रत्ययो भवति चातुरर्थिकः। अणोऽपवादः। गाभीरः। गाम्भीरः। ऐतरः। आभिषिक्तः। (श्या? शा)तः। आहतः। नैयतः। नैवेशः॥

शरीरसद्योजवरुणकाखणहेमन्वेमन्लोमन्सुमङ्गलेभ्यश्च॥ १०७॥

शरीरादिभ्यश्चातुरर्थिकोऽञ्प्रत्ययो भवति। शारीरः। साद्योजः। वारुणः। काखणः। हैमः। वैमः। लौमः। सौमङ्गलः॥

स्त्रीषु सौवीरसाल्वप्राक्षु॥ १०८॥

देशे तन्नाम्नीत्यस्य विशेषणं सौवीरादयः स्त्रीत्वं च। ङ्याप्प्रातिपदिकादञ्प्रत्ययो भवति चातुरर्थिकः सौवीरे स्त्रीलि(ङ्गो? ङ्गे) देशे वाच्ये साल्वे प्राचि च। सौवीरे तावत्—दत्तमित्रेण निर्वृत्ता नगरी दात्तमि-

१. 'त्पि' क. पाठः.

(त्रिः ? त्री) । साल्वे — विधुमानिना निर्वृत्ता वैधुमानी । प्राचि — ककन्देन निर्वृत्ता काकन्दी नगरी ॥

सुवास्तुवर्णुतण्डुभण्डुखण्डुशिखण्डिशैवलिशेफालिक-पूरिभ्योऽण् ॥ १०९ ॥

सुवास्त्वादिभ्यश्चातुरर्थिकोऽणप्रत्ययो भवति । यथासम्भवमर्थसम्बन्धः । उवर्णान्तलक्षणस्य कूपलक्षणस्य चाञोऽपवादः । सुवास्तोरदूरभवं सौवास्तवम् । वार्णवम् । ताण्डवम् । भाण्डवम् । खाण्डवम् । शैखण्डम् । शैवलम् । शैफालम् । कार्पूरम् । अण्ग्रहणं नद्यां मतुपो बाधनार्थम् ॥

गर्त्तगाहाभिसक्थदक्षविकर्णकृष्णकर्णशशकर्णकर्कश-कर्कन्धुमतीभ्यः ॥ ११० ॥

गर्त्तादिभ्यश्चातुरर्थिकोऽणप्रत्ययो भवति । गार्त्तम् । गाहम् । आभिसक्थम् । दाक्षम् । वैकर्णम् । कार्ष्णकर्णम् । शाशकर्णम् । कार्कशम् । कार्कन्धुमतम् ॥

रोण्याः सपूर्वायाश्च ॥ १११ ॥

रोणीशब्दात् सपूर्वपदाच्चकारात् केवलाच्च चातुरर्थिकोऽणप्रत्ययो भवति । यथासम्भवमर्थसम्बन्धः । कूपलक्षणस्याञोऽपवादः । आजकरोणः, सैंहिकरोणः, रौणः कूपः ॥

कोपधाच्च ॥ ११२ ॥

(ककारोपधाच्च) प्रातिपदिकादणप्रत्ययो भवति चातुरर्थिकः । यथासम्भवमर्थसम्बन्धः । कूपलक्षणस्योवर्णलक्षणस्य चाञोऽपवादः । कर्णच्छि(द्रे ? द्रके)ण निर्वृत्तः कार्णच्छि(द्रः ? द्रकः) । कर्णवेष्टकः कूपः ॥

अरिहणद्रुहणकिरणसाम्परायणौष्ट्रायणभास्त्रायण-मैत्रायणत्रैगर्त्तायनवैमतायनगौमतायनसौमतायनखाडायन-शाण्डिल्यायनोदण्डखण्डवीरणोदञ्चनेभ्यो वुञ् ॥ ११३ ॥

---

१. 'नसौ' क, ख. पाठः.

अरिहणादिभ्यो वुञ्प्रत्ययो भवति चातुरर्थिकः । अणोऽपवादः । यथासम्भवमर्थसम्बन्धः । आरिहणकम् । द्रौहणकम् । (कैरणकम् । साम्परायणकम् ।) औष्ट्रायणकम् । भास्त्रायणकम् । मैत्रायणकम् । त्रैगर्त्तायनकम् । वैमतायनकम् । गौमतायनकम् । सौमतायनकम् । खाडायनकम् । शाण्डिल्यायनकम् । औद्दण्ड(न ?)कम् । खाण्डवीरणकम् । औदञ्चनकम् ॥

खदिरबधिरभगलोलन्दत्रिपथरैवतविपाशकाशकृत्स्नशिंशपाशिरीषबिल्वजम्बूजाम्बवत्सुयज्ञसुशर्मन्रायस्पोषेभ्यश्च [॥ ११४ ॥

खदिरादिभ्यो वुञ्प्रत्ययो भवति चातुरर्थिकः । अणोऽपवादः । यथासम्भवमर्थसम्बन्धः । खदिराः सन्त्यस्मिन्निति खादिरकम् । बाधिरकम् । भागलकम् । लौलन्द(ल ? )कम् । त्रैपथकम् । रैवतकम् । वैपाशकम् । काशकृत्स्नकम् । शैंशपकम् । शैरीषकम् । बैल्वकम् । (औदुम्बकं ? जाम्बवकम्) । जाम्बवतकम् । सौयज्ञकम् । सौशर्मकम् । रायस्पोषकम् ॥

कृशाश्वारिष्टारिश्मविशालरोमशरोमकसुवर्चलशबलसूकरप्रतरपुरटसुदृशेभ्यश्छण् ॥ ११५ ॥

कृशाश्वादिभ्यः छण्प्रत्ययो भवति चातुरर्थिकः । अणोऽपवादः । यथासम्भवमर्थसम्बन्धः । कार्शाश्वीयः । आरिष्टीयः । आरिश्मीयः । वैशालीयः । रौमशीयम् । (रौमकीयम् ।) सौवर्चलीयम् । शाबलीयम् । सौकरीयम् प्रातरीयम् । पौरटीयम् । सौदृशीयम् ॥

सुखधूमाजिनाभिजनविनतावनतविकुड्यासकुटमौद्गल्यायोरुःपाराशरेभ्यश्च ॥ ११६ ॥

सुखादिभ्यः छण्प्रत्ययो भवति चातुरर्थिकः । अणोऽपवादः । यथासम्भवमर्थसम्बन्धः । सौखीयः । धौमीयः । आजिनीयः । आभिजनीयः । वैनतीयम् । आवनतीयम् । वैकुड्यासीयम् । कौटीयम् । मौद्गल्यीयम् । आयसीयम् । आरुषीयम् । पाराशरीयम् ॥

**ऋश्यन्यग्रोधशरनिलीननिधाननिबन्धकर्दमपरिगूढोपगूढाश्मोत्तराश्माशनिभ्यः कः ॥ ११७ ॥**

ऋश्यादिभ्यः कप्रत्ययो भवति चातुरर्थिकः । अणोऽपवादः । यथासम्भवमर्थसम्बन्धः । ऋश्यकम् । न्यग्रोधकम् । शरनिलीनकम् । निधानकम् । निबन्धकम् । कर्दमकम् । परिगूढकम् । उपगूढकम् । आश्मकम् । उत्तराश्मकम् । अशनिकम् ॥

**खण्डदण्डस्थूलबाहुवेणुवीरणखदिरपरिवृत्तपरिवंशवेश्मांशुशर्करारट्टुभ्यश्च ॥ ११८ ॥**

खण्डादिभ्यः कप्रत्ययो भवति चातुरर्थिकः । अणोऽपवादः खण्डकम् । दण्डकम् । स्थूलबाहुकम् । वेणुकम् । वीरणकम् । खदिरकम् । परिवृत्तकम् । परिवंशकम् । वेश्मकम् । अंशुकम् । शर्करकम् । अरट्टुकम् ॥

**कुमुदबीजबल्बजाशिरीषाश्वत्थन्यग्रोधयवासविकङ्कतेत्कटशकटकङ्कटदशग्रामगर्त्तशर्करापरिवापकूपेभ्यष्ठच्॥११९॥**

कुमुदादिभ्यष्ठच्प्रत्ययो भवति चातुरर्थिकः । अणोऽपवादः । यथासम्भवमर्थसम्बन्धः । कुमुदिकम् । बीजिकम् । बल्बजिकम् । शिरीषिकम् । अश्वत्थिकम् । न्यग्रोधिकम् । यवासिकम् । विकङ्कतिकम् । इत्कटिकः । (शकटिकः । कङ्कटिकः ।)दशग्रामिकम् । गर्त्तिकम् । शर्करिकम् । परिवापिकम् । कूपिकम् ॥

**काशपाशपलाशाश्वत्थपीयूषवासबिसतृणवननडकर्दमकर्पूरबर्बरबन्धूलकण्टकगहाभ्य इलः ॥ १२० ॥**

काशादिभ्य इलप्रत्ययो भवति चातुरर्थिकः । अणोऽपवादः । यथासम्भवमर्थसम्बन्धः । काशिलः । पाशिलः । (पलाशिलः) । अश्वत्थिलः । पीयूषिलः । वासिलः । बिसिलः । तृणिलः । वनिलः । नडिलः । कर्दमिलः । कर्पूरिलः । (बर्बरिलः । बन्धूलिलः ।)कण्टकिलः । गुहिलः ॥

**तृणनडजनपर्णवर्णार्णवरणबलबुसेभ्यः सः ॥ १२१ ॥**

तृणादिभ्यः सप्रत्ययो भवति चातुरर्थिकः । तृणसः । नडसः । जनसः । पर्णसः । वर्णसः । अर्णसः । वरणसः । बलसः । (बन्धु १ बुस)सः ॥

**प्रेक्षाफलकाबन्धुकाध्रुवका[1]धुवकायुवकाक्षिपकाकूपकडुकबुकेत्कटकङ्कटशङ्कटमहन्यग्रोधेभ्य इनिः ॥ १२२ ॥**

प्रेक्षादिभ्य इनिप्रत्ययश्चातुरर्थिको भवति। प्रेक्षी। फलकी। ब(न्ध ? न्धु)की। ध्रुवकी। धुवकी। (युवकी)। क्षिपकी। कूपकी। डुकी। बुकी। इत्कटी। कङ्कटी। शङ्कटी। मही। न्यग्रोधी॥

**अश्मन्नूषयूषमीननदगर्भगह्वगुडनगखण्डशिखाकोटपामन्बृन्दकन्देभ्यो रः ॥ १२३ ॥**

अश्मादिभ्यो रप्रत्ययो भवति चातुरर्थिकः। अश्मरः। ऊषरः। यूषरः। मीनरम्। नदरम्। गर्भरम्। गह्वरम्। गुडरम्। नगरम्। खण्डरम्। शिखरम्। कोटरम्। पामरम्। बृन्दरम्। कन्दरम्॥

**सख्यग्निदत्तद[2]त्तवायुदत्तगोभिलभल्लभल्लपालरोहतमालकदरकरवीराशोकेभ्यो ढक् ॥ १२४ ॥**

सख्या[illegible]यश्चातुरर्थिको ढक्प्रत्ययो भवति। अणोऽपवादः। साखेयम्। आग्निदत्तेयम्। दात्तेयम्। वायुदत्तेयम्। गौभिलेयम्। भाल्लेयम्! भाल्लपालेयम। रौहेयम्। तामालेयम्। कादरेयम्। कारवीरेयम्। आशोकेयम्॥

**च[3]क्रचक्रवाककुशीरकसरके[4]सुरससरससरमसमलससलच्छगलेभ्यश्च ॥ १२५ ॥**

चक्रादिभ्यश्चातुरर्थिको ढक्प्रत्ययो भवति। अणोऽपवादः। चाक्रेयम्। चाक्रवाकेयम्। कौशीरकेयम्। सारकेयम्। सौरसेयम्। सारसेयम्। सारमेयम्। सामलेयम्। सासलेयम्। छागलेयम्॥

**सङ्काशकश्मीरकम्पिल्लशूरसेनयूपकुम्भ(सी ? सू)रसरकसम(ला ? लां)ससनासाश्मरोमलोमभ्यो ण्यः॥ १२६ ॥**

सङ्काशादिभ्यो ण्यप्रत्ययो भवति चातुरर्थिकः। साङ्काश्यम्। काश्मीर्यम्। काम्पिल्यम्। शौरसेन्यम्। यौप्यम्। कौम्भ्यम्। सौर्यम्। सारक्यम्। सामल्यम्। आंस्यम्। सैन्यम्। साश्म्यम्। रौम्यम्। लौम्यम्॥

---

१. 'काक्षि', २. 'त्तवा', ३. 'व', ४. 'कु' ख.ग. पाठः.

कुटतीर्थपुलिनमलिनागस्तिविरत्नविकरसुपथिन्-
सुपन्थिदशिनलनासिकाङ्गसकर्णकेभ्यश्च ॥ १२७ ॥

कुटादिभ्यश्चातुरर्थिको ण्यप्रत्ययो भवति। कौ(ड्य ? ट्यम्)। तैर्थ्यम्। पौलिन्यम्। मालिन्यम्। आगस्त्यम्। वैरत्न्यम्। वैकर्यम्। सौपथ्यम्। (सौपन्थ्यम्।) दाशिनल्यम्। नासिक्यम्। आङ्ग्यम्। साकर्णक्यम्॥

बलबुलमूलोल(कू ? कु)लोरलसुललुकुलवनेभ्यो यः ॥ १२८ ॥

बलादिभ्यश्चातुरर्थिको यप्रत्ययो भवति। बल्यम्। बुल्यम्। मूल्यम्। उल्यम्। कुल्यम्। उरल्यम्। सुल्यम्। लुकुल्यम्। वन्यम्॥

पक्षतुषचित्रकुण्डाण्डकम्बलिकांशुककुम्भसरिक-
सरकसरससमलेभ्यः ष्फक् ॥ १२९ ॥

पक्षादिभ्यश्चातुरर्थिकः ष्फक्प्रत्ययो भवति। अणोऽपवादः। पाक्षायणः। पाक्षायणी। तौषायणः। चैत्रायणः। कौण्डायनः। आण्डायनः। काम्बलिकायनः। आंशुकायनः। कौम्भायनः। (सौ ? सै)रकायणः। सारकायणः। सारसायनः। सामलायनः॥

यमलबिलहस्तहस्तिन्सिङ्कसकर्णकरोमलोमा-
तिश्वभ्यः ॥ १३० ॥

यमलादिभ्यश्चातुरर्थिकः ष्फक्प्रत्ययो भवति। अणोऽपवादः। यामलायनः। बैलायनः। हास्तायनः। हास्तिनायनः। सैङ्कायनः। साकर्णकायनः। रौमायणः। लौमायनः। आतिश्वायनः॥

पथः पन्थ च ॥ १३१ ॥

पथिन्शब्दाच्चातुरर्थिकः ष्फक्प्रत्ययो भवति। तत्सन्नियोगेन चास्य पन्थादेशः। पान्थायनः॥

कर्णवसिष्ठार्कार्कलूषानडुह्यजित्वजीवन्तकुलिश-
कुम्भ्याण्डीवतानकस्फिक्पञ्चजनेभ्यः फिञ् ॥ १३२ ॥

१. 'ताकनास्फ' ख. ग. पाठः.

कर्णादिभ्यः फिञ्प्रत्ययो भवति चातुरर्थिकः। अणोऽपवादः। यथासम्भवमर्थसम्बन्धः। कार्णायनिः। वासिष्ठायनिः। आर्कायणिः। आर्कलूषायणिः। आनडु(ह्रा? ह्या)यनिः। जैत्वायनिः। जैवन्तायनिः। कौलिशायिनिः। कौम्भायनिः। आण्डीवतायनिः। आनकायनिः। स्फैगायनिः। पाञ्चजन्यायनिः॥

सुतङ्गमसुनिचित्तविप्रचित्तमहाचित्तमहापुत्रश्वेतगाडिकजीवाजिरार्जुनबीजवापिशुचिशुक्रविग्रेभ्य इञ्॥१३३॥

सुतङ्गमादिभ्यश्चातुरर्थिक इञ्प्रत्ययो भवति सौतङ्गमिः। मौनिचित्तिः। वैप्रचित्तिः। माहाचित्तिः। माहापुत्रिः। श्वैतगाडिकिः। जैविः। आजिरिः। आर्जुनिः। बैजवापिः। शौचिः। शौक्रिः। वैग्रिः॥

प्रगदिमगदिकलिवखडिवगडिवचूडारमार्जारकोविदारेभ्यो ञ्यः॥ १३४॥

प्रगद्यादिभ्यश्चातुरर्थिको ञ्यप्रत्ययो भवति। प्रागद्यम्। मागद्यम्। कालिव्यम्। खाडिव्यम्। गाडिव्यम्। चौडार्यम्। मार्जार्यम्। कौविदार्यम्॥

वराहपलाशशिरीषनिबद्धपिनद्धस्थूलखदिरशर्कराबाहुविदग्धविभग्ननिमग्नेभ्यः कक्॥ १३५॥

वराहादिभ्यश्चातुरर्थिकः कक्प्रत्ययो भवति। वाराहकम्। पालाशकम्। शैरीषकम्। नैबद्धकम्। पैनद्धकम्। स्थौलकम्। खादिरकम्। शार्करकम्। बाहुकम्। वैदग्धकम्। वैभग्नकम्। नैमग्नकम्॥

कुमुदकुमुटकुण्डलमुनिस्थलाश्वत्थशाल्मलिदशग्रामगोमठरथकारशर्करामधुकर्णशिरीषेभ्यष्ठक्॥ १३६॥

कुमुदादिभ्यश्चातुरर्थिकष्ठक्प्रत्ययो भवति। कौमुदिकम्। कौमुटिकम्। कौण्डलिकम्। मौनिस्थलिकम्। आश्वत्थिकम्। शाल्मलिकम्। दाशग्रामिकम्। गौमठिकम्। राथकारिकम्। शार्करिकम्। माधुकर्णिकम्। शिरीषशब्दोऽरिहणादिषु वराहादिषु कुमुदादिषु च पठ्यते। औ-

त्सर्गिकोऽणपि तत इष्यते । तस्य च वरणादिषु दर्शनाल्लु(ग्? ब्) भवति। तथा चोक्तं—शिरीषाणामदूरभवो ग्रामः शिरी(षः ? षाः), तस्य वनं शिरीषवनमिति ॥

उत्करशफराश्मखदिरपलाशपिप्पलपिप्पलीमूलत्रैवर्णारणपर्णसुपर्णाणकशूर्पणायश्यवनायेभ्यश्छः ॥ १३७ ॥

उत्करादिभ्यश्छप्रत्ययो भवति चातुरर्थिकः । यथासम्भवमर्थसम्बन्धः । उत्करीयम् । शफरीयम् । अश्मीयम् । खदिरीयम् । पलाशीयम् । पिप्पलीयम् । पिप्पलीमूलीयम् । त्रैवर्णीयम् । अरणीयम् । पर्णीयम् । सुपर्णीय(क ?)म् । अणकीयम् । शूर्पणायीयम् । श्यावनायीयम् ॥

काशाश्वत्थनिशातविशालशालोत्क्रोशखलाजिनतिककितवातपपिचुशर्करावैराकणनैचाकचेभ्यः ॥ १३८ ॥

काशादिभ्यश्छप्रत्ययो भवति चातुरर्थिकः । काशीयः । अश्वत्थीयः । निशातीयः । विशालीयम् । शालीयम् । उत्क्रोशीयम् । खलाजिनीयम् । तिकीयम् । कितवीयम् । आतपीयम् । पिचवीयम् । शर्करीयम् । वैराकणीयम् । नैचाकचीयम् ॥

क्षुद्राक्षान्तनितान्तवृक्षेन्द्रवृक्षार्द्रवृक्षावरोहितभस्त्राजन्याजिनेन्द्राग्निचर्मगर्तार्केभ्यश्च ॥ १३९ ॥

क्षुद्रादिभ्यश्चातुरर्थिकश्छप्रत्ययो भवति । क्षुद्रीयम् । क्षान्तीयम् । नि(शा ? ता)न्तवृक्षीयम् । इन्द्रवृक्षीयम् । आर्द्रवृक्षीयम् । अवरोहितीयम् । भस्त्रीयम् । जन्यीयम् । आजिनीयम् । इन्द्रीयम् । अग्नीयम् । चर्मीयम् । गर्त्तीयम् । अर्कीयम् ॥

नडप्लक्षबिल्ववेणुवेत्रवेतसतृणकाष्ठेक्षुकपोतानां कुक् च ॥ १४० ॥

नडादिभ्यश्चातुरर्थिकश्छप्रत्ययो भवति कुगागमश्च । नडकीयम् । प्लक्षकीयम् । बिल्वकीयम् । वेणुकीयम् । वेत्रकीयम् । वेतसकीयम् । तृणकीयम् । काष्ठकीयम् । (इक्षुकीयम् ।) कपोतकीयम् ॥

क्रौञ्चाया ह्रस्वश्च ॥१४१॥

क्रौञ्चाशब्दाच्चातुरर्थिकश्छप्रत्ययो भवति तत्सन्नियोगेन चास्य कुगागमो ह्रस्वश्च । क्रुञ्चकीयम् ॥

तक्ष्णो नलोपश्च ॥ १४२ ॥

तक्षन्शब्दाच्चातुरर्थिकश्छप्रत्ययो भवति तत्सन्नियोगादस्य कुगागमो नलोपश्च । तक्षकीयम् ॥

कुमुदनडमहिषवेतसेभ्यो ड्मतुप् ॥ १४३ ॥

कुमुदादिभ्यः शब्देभ्यश्चातुरर्थिको ड्मतुप्प्रत्ययो भवति । कुमुद्वान् । नड्वान् । महिष्मान् । वेतस्वान् । डकारष्टिलोपार्थः ॥

नडशाडाभ्यां ड्वलच् ॥ १४४ ॥

नडशाडाभ्यां ड्वलच्प्रत्ययो भवति चातुरर्थिकः । यथासम्भवमर्थसम्बन्धः । नड्वलम् । शाड्वलम् ॥

शिखाया वलच् ॥१४५॥

(शिखाशब्दात् वलच्प्रत्ययो भवति चातुरर्थिकः । यथासम्भवमर्थसम्बन्धः । शिखावलं नाम नगरम् ।)

जनपदे लुबविदिशादिभ्यः ॥ १४६ ॥

देशे तन्नाम्नि चातुरर्थिकश्छप्रत्ययस्तस्य देशविशेषे जनपदेऽभिधेये लुब् भवति नतु विदिशादिभ्यः । ग्रामसमुदायो जनपदः । पञ्चालाननिवासो जनपदः पञ्चालाः । कुरवः । मत्स्याः । अङ्गाः । वङ्गाः । कलिङ्गाः । मगधाः । अविदिशादिभ्य इति किम् । वैदिशो जनपदः । औदुम्बरो जनपदः ॥

वरणाशिरीषशाल्मलिकटुकबदरीगोदपुष्करजालपदा- ताम्रपर्णीतक्षशिलाशुण्डीशयाण्डीश्टृङ्गिभ्यः ॥ १४७ ॥

अजनपदार्थ आरम्भः । वरणादिभ्य उत्पन्नस्य चातुरर्थिकस्य प्रत्ययस्य लुब् भवति । वरणानामदूरभवं नगरं वरणा(:) । शिरीषाणामदूरभवो ग्रामः शिरीषाः । औत्सर्गिकस्याणो लुप् । विशेषप्रत्ययास्तु वुञादयो

भवन्ति। एवं शैरीषकं शिरीषकम्। शाल्मलीनामदूरभवं नगरं शाल्मलय.। कटुकबदर्या अदूरभवः कटुकबदरी। गोदा नाम ह्रस्व ........ दौ तयोरदूरभवौ ग्रामौ गोदौ। पुष्करम्। जालपदा। ताम्रपर्णी। तक्षशिला। शुण्डी। शयाण्डी। शृङ्गी ॥

वल्गूवलभीमधुराचम्पापम्पोज्जयिनीगयोरसाकाञ्चीस्कङ्गुगोमतीजम्बूभ्यः ॥ १४८ ॥

वल्गूप्रभृतिभ्य उत्पन्नस्य चातुरर्थिकप्रत्ययस्य लुब् भवति। वल्वास्त्वदूरभवो देशः वल्गूः। वलभी। मधुरा। चम्पा। पम्पा। उज्जयिनी। गया। उरसा। काञ्ची। स्कङ्गुः। गोमती। जम्बूः॥

शर्कराया वा ॥ १४९ ॥

शर्कराशब्दादुत्पन्नस्य चातुरर्थिकप्रत्ययस्य वा लुब् भवति। वाग्रहणं किमर्थम्। यावता शर्कराशब्दः कुमुदादिषु वराहादिषु च पठ्यते। तत्र पाठसामर्थ्यात् पक्षे श्रवणं भविष्यति। एवं तर्हि एतज्ज्ञापयति — शर्कराशब्दादौत्सर्गिकोऽपि भवतीति। तस्यायं विकल्पितो लुब् भवति। शर्करा अस्त्यस्मिन् देशे शर्करा। शार्करम्। ऋश्यादौ — शर्क(रा ? र)कम्। कुमुदादौ शर्करिकम्। द्वितीयकुमुदादौ — शार्करिकम्। उदुम्बरादौ — शर्करीयम्। तेन षड् रूपाणि भवन्ति॥

नद्यां मतुबसुवास्त्वादिभीमरथभगीरथेभ्यः॥ १५० ॥

नद्यामभिधेयायां मतुप्प्रत्ययो भवति चातुरर्थिकः। तन्नाम्नो देशस्य विशेषणं नदी। उदुम्बरा अस्यां नद्यां सन्ति उदुम्बरावती। मशकावती। वीरणावती। पुष्करावती। इक्षुमती। असुवास्त्वादिभीमरथभगीरथेभ्य इति किम्। सौवास्तवी। पार्णवी। भैमरथी। भागीरथी॥

मधुकर्कन्धूबिसस्थाणुवेण्विक्षुशमीकरीरकिशराशर्याणहिमरोमभ्यः॥ १५१ ॥

मध्वादिभ्यो मतुप्प्रत्ययो भवति चातुरर्थिकः। अनद्यर्थोऽयमारम्भः। मधुमान्। कर्कन्धूमान्। बिसवान्। स्थाणुमान्। वेणुमान्। इक्षुमान्। शमीवान्। करीरवान्। किशरावान्। शर्याणवान्। हिमवान्। रोमवान्॥

१. 'ल्वु' क. ग. पाठः.

ऋश्यरिष्टशरमरुत्तक्षशिलाखडावटावार्दालीष्टकासुतिशक्तिशलाकासन्दीभ्यश्च ॥ १५२ ॥

ऋश्यादिभ्यश्चातुरर्थिको मतुप्प्रत्ययो भवति । ऋश्यवान् । रिष्टवान् । शरवान् । (मरुत्वान् ।) तक्षशिलावान् । खडावान् । वटावान् । वार्दालीमान् । इष्टकावान् । आसुतिमान् । शक्तिमान् । शलाकावान् । आसन्दीमान् ॥

इति श्रीदण्डनाथनारायणभट्टसमुद्धृतायां सरस्वतीकण्ठाभरणस्य
व्याकरणस्य लघुवृत्तौ हृदयहारिण्यां
चतुर्थस्याध्यायस्य द्वितीयः पादः ॥

---

## अथ तृतीयः पादः ।

शेषे ॥ १ ॥

अपत्यादिभ्यश्चतुरर्थपर्यन्तेभ्यो योऽन्योऽर्थः स शेषः । तस्मिन् यथाविहिता अणादयः प्रत्यया भवन्ति । चक्षुषा गृह्यते चाक्षुषं रूपम् । श्रावणः शब्दः । रासनो रसः । स्पार्शनः स्पर्शः । अश्वैरुह्यते आश्वो रथः । चतुर्भिरुह्यते चातुरं शकटम् । चतुर्दश्यां दृश्यते चातुर्दशं रक्षः । दृषदि (पृ? पि)ष्टा दार्षदाः सक्तवः । उलूखले क्षुण्ण औलूखलो याव(त? क) इति । अधिकारश्चायम् । इत ऊर्ध्वं घादीन् प्रत्ययाननुक्रमिष्यामः । (ते) शेषे जातादावर्थे वेदितव्याः ॥

राष्ट्राद् घः ॥ २ ॥

राष्ट्रशब्दाच्छेषेऽर्थे घप्रत्ययो भवति । राष्ट्रे जातः भवः क्रीतः कुशलो वा राष्ट्रियः । इतः प्रभृति विशेषोपादानमात्रेण प्रत्यया विधीयन्ते । तेषां तु जातादयोऽर्थाः समर्थविभक्तयश्च परस्ताद्वक्ष्यन्ते ॥

पारावारात् खः ॥ ३ ॥

पारावारशब्दात् खप्रत्ययो भवति शेषेऽर्थे । पारावारीणः ॥

व्यस्तविपर्यस्ताच्च ॥ ४ ॥

पारावारशब्दाद्व्यस्ताद्विपर्यस्ताच्च खप्रत्ययो भवति । पारीणः । (अवारीणः ।) अवारपारीणः ॥

ग्रामाद्यखञौ ॥ ५ ॥

ग्रामशब्दाच्छेषेऽर्थे यखञौ प्रत्ययौ भवतः । ग्राम्यः । ग्रामीणः । ञकारः स्वरार्थः, पुंवद्भावप्रतिषेधार्थश्च । ग्रामीणा भार्या अस्य ग्रामीणाभार्यः ॥

कत्र्युम्भिकुम्भिकुण्डिनपुष्करपुष्कलमोदनमाहिष्मतीवर्मतिनगरेभ्यो ढकञ् ॥ ६ ॥

कत्र्यादिभ्यो ग्रामाच्च शेषेऽर्थे ढकञ्प्रत्ययो भवति । कात्त्रेयकः । औम्भेयकः । कौम्भेयकः । कौण्डिनेयकः । पौष्करेयकः । पौष्कलेयकः । मौदनेयकः । माहिष्मतेयकः । वार्मतेयकः । नागरेयकः । ग्रामेयकः ॥

कुड्याया यलोपश्च ॥ ७ ॥

कुड्याशब्दाच्छेषेऽर्थे ढकञ्प्रत्ययो भवति तत्सन्नियोगेन चास्य यलोपो भवति । कौडेयकः ॥

कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु ॥ ८ ॥

कुल कुक्षि ग्रीवा इत्येतेभ्यो यथासंख्यं श्वा असि अलङ्कार इत्येतेष्वर्थेषु ढकञ्प्रत्ययो भवति । कौलेयकः श्वा । कौक्षेयकोऽसिः । ग्रैवेयकोऽलङ्कारः ॥

नदीमहीसे(त ? ति)कीश्रावस्तीवाराणसीकौशाम्बीनवकौशाम्बीकाशफरीखादिरीपाठामायासाल्वादार्वापूर्वनगरीपूर्वेनगरेभ्यो ढक् ॥ ९ ॥

नद्यादिभ्यः शेषेऽर्थे ढक्प्रत्ययो भवति । नादेयः । माहेयः । सैतिकेयः । श्रावस्तेयः । वाराणसेयः । कौशाम्बेयः । (नावकौशाम्बेयः ।) काशफरेयः । (खादिरेयः ।) पाठेयः । मायेयः । साल्वेयः । दार्वेयः । पौर्वनगरेयः । पौ( रे ? वें)यः । नागरेयः ॥

---

१. 'का' क. पाठः.

बडवाया वृषे ॥ १० ॥

बडवाशब्दात् वृषेऽर्थे शैषिको ढक्प्रत्ययो भवति । बडवाया वृषः बाडवेयः ॥

दक्षिणापश्चात्पुरसस्त्यक् ॥ ११ ॥

(दक्षिणा पश्चात् पुरस् इत्येतेभ्यस्त्यक्)प्रत्ययो भवति । दाक्षिणात्यः । पाश्चात्त्यः । पौरस्त्यः ॥

बह्ल्युर्दिपर्दिकापिशीभ्यः ष्फक् ॥ १२ ॥

बह्ल्यादिभ्यः शेषेऽर्थे ष्फक्प्रत्ययो भवति । बाह्लायनः । और्दायनः । पार्दायनः । कापिशायनी द्राक्षा ॥

रङ्कोः प्राणिनि वा ॥ १३ ॥

रङ्कुशब्दात् प्राणिन्यभिधेये शैषिकः ष्फक्प्रत्ययो (वा) भवति । राङ्कवायणो गौः । पक्षे प्राग्जितीयोऽण् । राङ्कवः । प्राणिनीति किम् । राङ्कवः कम्बलः । मनुष्ये तु कच्छादिपाठात् वुञेव भवति । राङ्कवको मनुष्यः ॥

द्युप्रागपागुदक्प्रतीचो यत् ॥ १४ ॥

द्युप्रभृतिभ्यः शेषेऽर्थे यत्प्रत्ययो भवति । दिव्यः । प्राच्यः । अपाच्यः । उदीच्यः । प्रतीच्यः । कालवाचिनोऽव्ययात् परत्वात् ट्युर्भवति । प्राक्तनम् ॥

कन्थायाष्ठक् ॥ १५ ॥

कन्था ग्रामविशेषः । ततः शेषेऽर्थे ठक्प्रत्ययो भवति । अणोऽपवादः । (वु[1]) कान्थिकः ॥

वर्णौ वुक् ॥ १६ ॥

वर्णुर्नाम नदस्तस्यादूरभवो जनपदोऽपि वर्णुः । 'सुवास्त्वादिभ्योऽण् ।' तस्य जनपदे लुप् । तत्र या कन्था ततः शेषेऽर्थे वुक्प्रत्ययो भवति । ठकोऽपवादः । कान्थकः । ननु च वर्णोरणः प्रतिपदविधाना-

१. 'वा' ख. ग. पाठः.

ल्लुपा न भवितव्यम् । नैष दोषः । सुवास्त्वादिपाठो हि जनपदादन्यस्मिन् प्रत्ययार्थे कृतार्थ इति जनपदे लुब् भवति ॥

कामेहत्रतसिभ्यस्त्यप् ॥ १७ ॥

क, अमा, इह इत्येतेभ्यस्त्रतसिल्प्रत्ययान्तेभ्यः प्रातिपदिकेभ्यश्च शेषे त्यप्प्रत्ययो भवति । क्वत्यः । अमात्यः । इहत्यः । तत्रत्यः । यतस्त्यः । ततस्त्यः । पकारः स्वरार्थः ॥

नेर्ध्रुवे ॥ १८ ॥

निशब्दाद् ध्रुवार्थे त्यप्प्रत्ययो भवति । नित्यं ध्रुवम् ॥

निसो गते ॥ १९ ॥

निस्शब्दाद् गतेऽर्थे त्यप्प्रत्ययो भवति । निर्गतो वर्णाश्रमेभ्यः निष्ट्यः चण्डालादिः ॥

ऐषमोह्यःश्वसो वा ॥ २० ॥

ऐषमःप्रभृतिभ्यः शेषेऽर्थे त्यप्प्रत्ययो भवति वा । ऐषमस्त्यम् । ऐषमस्तनम् । ह्यस्त्यम् । ह्यस्तनम् । श्वस्त्यम् । श्वस्तनम् । शौवस्तिकम् ॥

दूरादेत्यः ॥ २१ ॥

दूरशब्दाच्छेषेऽर्थे एत्यप्रत्ययो भवति । दूरेत्यः ॥

उत्तरादाहञ् ॥ २२ ॥

उत्तरशब्दाच्छेषेऽर्थे आहञ्प्रत्ययो भवति औत्तराहः ॥

अरण्याण्णः ॥ २३ ॥

अरण्यशब्दाच्छेषेऽर्थे णप्रत्ययो भवति । आरण्याः सुम(न)सः ॥

तीरान्तादञ् ॥ २४ ॥

तीरशब्दा(न्ता)च्छेषेऽर्थे अञ्प्रत्ययो भवति । काखतीरम् । पाल्वलतीरम् ॥

रूप्यान्ताद् ञः ॥ २५ ॥

रूप्यशब्दान्ताच्छेषेऽर्थे ञप्रत्ययो भवति । वागरूप्यम् । (शैवरूप्यम् ?) । शैवरूप्यम् ॥

दिक्पूर्वपदादसंज्ञायाम् ॥ २६ ॥

दिक्पूर्वपदात् प्रातिपदिकादसंज्ञाविषयाच्छेषेऽर्थे ञप्रत्ययो भवति । अणोऽपवादः । पौर्वशालः । आपरशालः । असंज्ञायामिति किम् । पूर्वेषुकामशमी नाम ग्रामः । तस्यां भवः पू(र्वे ? र्वै)षुकामशमः । 'प्राचां ग्रामाणाम्' इत्युत्तरपदवृद्धिः ॥

मद्रेभ्योऽञ् ॥ २७ ॥

मद्रशब्दो जनपदवचनो बहुवचनविषयः । तदन्ताद् दिक्पूर्वपदात् प्रातिपदिकाच्छेषेऽर्थे अञ्प्रत्ययो भवति । पूर्वमद्रेषु भवः पौर्वमद्रः । पौर्वमद्री ॥

उदीच्यग्रामाद्बह्वचोऽन्तोदात्तात् ॥ २८ ॥

उदीच्यग्रामवाचिनो बह्वचः प्रातिपदिकात् अन्तोदात्ताच्छेषेऽर्थे अञ्प्रत्ययो भवति । शैवपुरम् । माधनगरम् । उदीच्यग्रामादिति किम् । माथुरः । बह्वच इति किम् । ध्वजी नामोदीच्यग्रामो ङीषन्तोऽन्तोदात्तस्तस्यां भवः ध्वाजः । अणेव भवति । अन्तोदात्तादिति किम् । शार्करीधानः । शार्करीधानशब्दे (धानशब्दो ?)ञित्स्वरेण धा उदात्तः ॥

वाह्लीकरोमकपटच्चरगोमतीगोष्ठीनैकतीभ्योऽण् ॥ २९ ॥

वाह्लीकादिभ्यः शेषेऽर्थे अण्प्रत्ययो भवति । वाह्लीकेषु भवो वाह्लीकः । रौमकः । वृद्धलक्षणस्य एङाचज्लक्षणस्य च छस्यापवादः । पाटच्चरः । गौमतः । रोपधलक्षणस्य (वुञ् ? वुञोऽपवादाः) । गौष्ठः । (वै ? नै)कतः । वाह्लीकग्रामाविमौ । आभ्यां ठञ्ञिठयोरपवादः ॥

प्रस्थोत्तरपदकोपधेभ्यश्च ॥ ३० ॥

प्रस्थोत्तरपदेभ्यः कोपधेभ्यश्च प्रातिपदिकेभ्यः शेषेऽर्थे अण्प्रत्ययो भवति । उदीच्यग्रामलक्षणस्याञोऽपवादः । माघीप्रस्थः । तैलीनकः । वैयातकः ॥

पलदीपरिषत्परिखोदपानशूरसेनसकुल्लोमभ्यः ॥ ३१ ॥

पलद्यादिभ्यः शेषेऽर्थे अण्प्रत्ययो भवति । बह्वच्लक्षणस्याञो-ऽपवादः । पालदी । पारिषदः । पारिखः । औदपानः । शौरसेनः । साकलोमः । निपतनान्नलोपः ॥

कमलाद् भिदाकीकराभ्याम् ॥ ३२ ॥

कमलशब्दात् परौ यौ भिदाकीकरशब्दौ तदन्तात् प्रातिपदिकात् शेषेऽर्थे अण्प्रत्ययो भवति । उदीच्यग्रामलक्षणस्याञोऽपवादः । कमलभि-दायां भवः कामलभिदः । कामलकीकरः ॥

बहुजालकलेभ्यश्च कीटात् ॥ ३३ ॥

बहुजालकलेभ्यः कमलाच परो यः कीटशब्दः तदन्तात् प्रातिप-दिकाच्छेषेऽर्थे अण्प्रत्ययो भवति । उदीच्यग्रामलक्षणस्याञोऽपवादः । बा-हुकीटः । जालकीटः । कालकीटः । कामलकीटः ॥

शकलादिभ्यो गोत्रात् ॥ ३४ ॥

गोत्रशब्देन गोत्रवचनः प्रत्ययो गृह्यते । शकलादिभ्यो गोत्रप्रत्यया-न्तेभ्यः शेषेऽर्थेऽण्प्रत्ययो भवति । छस्यापवादः । शाकल्यस्य छात्राः शा-कलाः । काण्वाः । गौकक्ष्याः । गोत्रादिति किम् । कण्वादागतः काण्वः । तस्य छात्राः काण्वीयाः ॥

इञश्च ॥ ३५ ॥

गोत्रे य इञ् तदन्ताच्छेषेऽर्थे अण्प्रत्ययो भवति । छस्यापवादः । दाक्षेश्छात्राः दाक्षाः । प्लाक्षाः । गोत्रादिति किम् । सुतङ्गमेन निर्वृत्ता नगरी सौतङ्गमी । तस्यां भवः सौतङ्गमीयः ॥

न द्व्यचः प्राच्यात् ॥ ३६ ॥

प्राच्यगोत्रवाचिनो द्व्यचः प्रातिपदिकादिञन्ताच्छेषेऽर्थे अण्प्रत्ययो न भवति । चैङ्कीयाः । पौष्कीयाः । द्व्यच इति किम् । पान्नागारेः छात्राः पान्नागाराः । (म ? मा)न्थरेषणाः । प्राच्यादिति किम् । दाक्षाः । प्लाक्षाः । कथं काशेः छात्राः काशीया इति, अणि प्रतिषिद्धे ठञ्ञिठौ भवतः । 'ओ-र्देशाद्' इत्यतो देशग्रहणानुवृत्तेर्जनपदवाचिनस्तत्र ग्रहणम् । गोत्रप्रत्यया-न्तात् 'वृद्धाच्छ' एव भवति ॥

वृद्धाच्छः ॥ ३७ ॥

'वृद्धिर्यस्याचामादिस्तद् वृद्धम्' । ततः प्रातिपदिकाच्छेषेऽर्थे छप्रत्ययो भवति । गार्गीयः । शालीयः । ऐतिकायनीयः । औपगवीयः । वृद्धादिति किम् । सभासन्नयने भवः साभासन्नयनः । अणपवादोऽयम् । तीरोत्तरपदोदीच्यग्रामकोपधविधींस्तु परत्वाद् बाधते । तत्र छस्यावकाशः शालीयः । तीरान्ताञोऽवकाशः कारवतीरम् । वायसतीरादुभयं प्राप्नोति । छो भवति । वायसतीरीयः । उदीच्यग्रामलक्षणस्याञोऽवकाशः । शैवपुरम् । छस्य स एव । बाडवकर्षादुभयं प्राप्नोति । परत्वाच्छो भवति । बाडवकर्षीयः कोपधलक्षणस्याणोऽवकाशः तैलीनकः । छस्य स एव । औलूकादुभयं प्राप्नोति । परत्वाच्छो भवति । औलूकीयः । वाहीकात् प्रतिपदविहितोऽणेव भवति । रूप्यान्तलक्षणमप्यञं परत्वाच्छो बाधते । किन्तु अयमपि परत्वात् योपधलक्षणेन वुञा बाध्यते । माणिरूप्यकः ॥

एङ्प्राचां देशे? एङाद्यच् प्राग्देशात् ॥ ३८ ॥

एङादिर्येषामचां ते यस्य ततः प्राग्देशवाचिनः प्रातिपदिकाच्छेषेऽर्थे छप्रत्ययो भवति । अणोऽपवादः । एणीपचनीयः । एङ्ग्रहणं किम् । आहिच्छत्रः । प्रागिति किम् । देवदत्तो नाम वाहीकग्रामस्तत्र भवो दैवदत्तः । देशादिति किम् । गौमयाः क्रमयः । रोमकात् तु प्रतिपदविहितोऽणेव भवति ॥

नृनाम्नो वा ॥ ३९ ॥

मनुष्यनाम्नः प्रातिपदिकादेङाद्यचः शेषेऽर्थे छप्रत्ययो वा भवति । देवदत्तस्य देवदत्तीयः दैवदत्तः । गोकर्णीयाः गौकर्णाः ॥

गोत्रान्तात् तद्वदजिह्वाकात्यहरितकात्यात् ॥ ४० ॥

गोत्रप्रत्ययोऽन्तो यस्य तदन्तात् प्रातिपदिकात् जिह्वाकात्यहरितका(थ ? त्य)वर्जिताच्छेषेऽर्थे गोत्रप्रत्ययान्तादिव छप्रत्ययो भवति । पारायणीयाः । पाणिनीयाः । जैमिनियाः । रौढीयाः । तथा कम्बलपारायणीयाः, कडारजैमिनीयाः, घृतरौढीयाः इति तदन्तादपि भवति । यथा चेह न भवति शाकलाः काण्वाः दाक्षाः पान्नागाराः, तथा प्रैहिशाकलाः पैङ्गल

काण्वाः कापिलदाक्षाः .... पान्नागारा इति तदन्तादपि न भवति। अजिह्वाकात्यहरितकात्यादिति किम्। यथेह भवति कात्यस्य छात्राः कातीयाः, तद्वदिह न भवति जैह्वाकाताः हारितकाताः ॥

त्यदादिभ्यः ॥ ४१ ॥

त्यदादिभ्यः प्रातिपदिकेभ्यः शेषेऽर्थे छप्रत्ययो भवति । त्यदीयः । तदीयः । एतदीयः । इदमीयः । अदसीयः । एकीयः । द्वीयः किमीयः । भवद्युष्मदस्मदां विशेषं वक्ष्यति ॥

भवतो दश्च ॥ ४२ ॥

भवच्छब्दात् त्यदादिपठिताच्छप्रत्ययो दकारश्चान्तादेशो भवति । भवदीयः । शत्रन्तस्य तु भवत इदं भावतम् ॥

ठञ्च ॥ ३ ॥

भवच्छब्दा(त्त ? त् त्य)दादिपठितात् ठञ्प्रत्ययो भवति शैषिकः । भवत इदं भावत्कम् ॥

ओर्देशात् ॥ ४४ ॥

उवर्णान्ताद् देशवाचिनः प्रातिपदिकात् शेषेऽर्थे ठञ्प्रत्ययो भवति । शाबरजम्बुकः । नैषा(ह ? द)कर्षुकः । देशादिति किम्। पटोः छात्राः पाटवाः ॥

प्राच्याञ्छे ॥ ४५ ॥

उवर्णान्तात् प्राच्यदेशवाचिनः प्रातिपदिका(च्छोषे ? च्छविषय) एव ठञ्प्रत्ययो भवति । शाकजम्बुकः । नापितवास्तुकः । पूर्वेण सिद्धे नियमार्थं वचनम् । तेन छविषयादन्यस्मादुवर्णान्तात् प्राच्यादञ् भवति। माल्लवास्तवः ॥

काशिचेदिसांयातिभारङ्गिदासग्रामसौधावतानमोदनमोदमानगोवासनदेवदत्ताञ्ञिठश्च ॥ ४६ ॥

काश्यादिभ्यः प्राग्देशवाचिभ्यः शेषेऽर्थे विषये ञिठश्चकारात् ठञ्प्रत्ययश्च भवति । इकार उच्चारणार्थः । ञकार एवोभयत्र विपर्यस्त-

देशोऽनुबन्धः । स्त्रीप्रत्यये विशेषः । काशिका काशिकी । (चेदिका) चेदिकी । आभ्यां जनपदलक्षणे वुञि प्राप्ते । सांयातिका सांयातिकी । भारङ्गिका भारङ्गिकी । आभ्याम् 'इञश्च' इत्यणि प्राप्ते, दासग्रामिका दासग्रामिकी । सौधावतानिका सौधावतानिकी । आभ्यां वृद्धलक्षणे छे प्राप्ते । मौदनिका मौदनिकी । मौदमानिका मौदमानिकी । गौवासनिका गौवासनिकी । दैवदत्तिका दैवदत्तिकी । एभ्य एङादि(त्वा)च्छः (प्राप्तः) प्राच्यादित्येव । देवदत्तो नाम वाहीकेषु ग्रामस्तत्र भवा दैवदत्ती । देशादित्येव । काशेश्छात्राः काशीयाः । देवदत्तो नाम कश्चित्, तस्य छात्रा देवदत्तीयाः दैवदत्ताः । 'नृनाम्नो वा' इति छः । छ इत्युत्तरार्थमनुवर्तमानमपि प्रतिपदोक्तेषु काश्यादिषु प्रतिपदाव्यभिचारादकिञ्चित्करमिति न प्रत्युदाह्रियते ॥

संवाहाच्युतशकुलादारिन्दमकरणकुनामन्हिरण्यारित्रहस्तिकर्षूभ्यश्च ॥ ४७ ॥

संवाहादिभ्यो देशवाचिभ्यः शेषेऽर्थे ठञ्ञिठौ प्रत्ययौ भवतः । सांवाहिका सांवाहिकी । आच्युतिका आच्युतिकी । शाकुलादिका शाकुलादिकी । आरिन्दमिका आरिन्दमिकी । कारणिका कारणिकी । कौनामिका कौनामिकी । हैरण्यिका हैरण्यिकी । आरित्रिका आरित्रिकी । हास्तिकर्षुका हास्तिकर्षुकी । हस्तिकर्षूशब्दाद् 'ओर्देशात्' इति ठञि, अन्येभ्यस्त्वणि प्राप्ते वचनम् । छ इत्युत्तरार्थमनुवर्तमानमप्यसम्बन्धादिह न सम्बध्यते ॥

सुधासिन्धुदासेभ्यो मित्रात् ॥ ४८ ॥

सुधादिभ्यः परो यो मित्रशब्दस्तदन्तात् प्राग्देशवाचिनः शेषेऽर्थे ठञ्ञिठौ प्रत्ययौ भवतः । सौधामित्रिका सौधामित्रिकी । सैन्धुमित्रिका सैन्धुमित्रिकी । आभ्यामणि प्राप्ते । दासमित्रिका दासमित्रिकी । अस्माद् रोपधलक्षणे वुञि प्राप्ते । छ इत्यनुवर्तमानमपि असम्भवादव्यभिचाराच्च न सम्बध्यते ॥

युवोपदे(शे ? वे)भ्यो राजात् ॥ ४९ ॥

युवादिभ्यः परो यः कृतसमासान्तो राजशब्दस्तदन्ताच्छेषेऽर्थे ठञ्ञठौ प्रत्ययौ भवतः । .... .... .... ... ... ...
... ... ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ...

ऊर्ध्वादिभ्यः कालात् ॥ ५० ॥

... ... ... ... ... ... .... ... ...
... ... ... ... ... .... ... ... ...
... ... ... ... ... ... ... ... ...

और्ध्वकालिका और्ध्वकालिकी । आपत्कालिका आपत्कालिकी । तात्कालिका तात्कालिकी । साक्षात् कालोपादानात् इहानुवर्तमानमपि देश इति न सम्बध्यते ॥

वाहीकग्रामेभ्यः ॥ ५१ ॥

वाहीकग्रामवाचिभ्यः शब्देभ्यः छविषये शेषेऽर्थे ठञ्ञठौ प्रत्ययौ भवतः । शाकालिका शाकालिकी । मान्धविका मान्धविकी । छ इत्येव । माधनगरः । शैवपुरः । काश्यादौ तु छ इत्यनुवृत्तेऽप्यसम्भवादव्यभिचाराच्च न प्रत्युदाहृतम् । देवदत्तात् पूर्वसूत्रे प्राच्यानुवृत्तिसामर्थ्यात् छविषयोऽस्तीति भवतः । इह तु तदभावान्न भवतः ॥

वोशीनरेषु ॥ ५२ ॥

उशीनरेषु (यो ? ये वा)हीकग्रामास्तेभ्यः छविषये शेषेऽर्थे ठञ्ञठौ प्रत्ययौ वा भवतः । आह्वजालिका । आह्वजालिकी । आह्वजालीया । सौदर्शनिका । सौदर्शनिकी । सौदर्शनीया ॥

प्रस्थवहपुरान्तयोपधधन्वार्थेभ्यो वुञ् ॥ ५३ ॥

प्रस्थाद्यन्ताद् यकारोपधाद् धन्वार्थाच्च देशवाचिनः प्रातिपदिकाच्छविषये शेषेऽर्थे वुञ्प्रत्ययो भवति । मालाप्रस्थकः । सैनाप्रस्थकः । पैलुवहकः । वातवहकः । कार्त्तिपुरकः । शालिपुरकः । साङ्काश्यकः । काम्पिल्यकः । धन्वशब्दो मरुदेशवचनः । पारेवन्धकः । ऐरावतकः । छ इत्येव ।

शैवपुरः। 'रोपधेभ्यः प्राचामि'ति सिद्धे पुरान्तग्रहणमप्राच्यार्थम्। आनन्दपुरकः। वाहीकग्रामेभ्योऽपि ठञ्ञिठौ परत्वादनेन बाध्येते। पातालप्रस्थकः। कौटिवभकः। नान्दीपुरकः। (द? दा)स्यरूप्यकः॥

## ईद्रोपधेभ्यः प्राचाम्॥५४॥

ईकारान्तेभ्यो रोपधेभ्यश्च प्राचां देशवाचिभ्यश्छन्विषये शेषेऽर्थे वुञ् प्रत्ययो भवति (काकन्दक। माकन्दकः। पाटलिपुत्रकः। प्राचामिति किम्। दात्तामित्रीयः)॥

## जनपदेभ्यस्तदवधिभ्यश्च॥५५॥

... ... ... ... ... ... ... ... ...

औसुष्टकः। श्यामायनकः। पूर्वेणैव सिद्धे बाधकबाधनार्थं वचनम्। आभिसारगर्त्तकः। गर्त्तान्तलक्षणं छं बाधित्वा जनपदावधेर्वुञेव भवति।

## अवृद्धेभ्योऽपि बहुवचनविषयेभ्यः॥५६॥

जनपदेभ्यो जनपदावधिभ्यश्च बहुवचनविषयेभ्यो वृद्धेभ्योऽवृद्धेभ्यश्च वुञ्प्रत्ययो भवति। छाणोरपवादः। वृद्धाज्जनपदात् तावद्—दार्वकः (कामु? जाम्ब)कः। वृद्धाज्जनपदावधेः — कालञ्जरकः वैकुलिशकः। (अवृद्धाज्जनपदात् तावत्—आङ्गकः वाङ्गकः।) अवृद्धाज्जनपदावधेः — आजमीढकः आजकन्दकः। इहापि तदवधिग्रहणं बाधकबाधनार्थमनुवर्त्तते। तेन त्रैगर्त्तकः। गर्त्ताच्छो न भवति। विषयग्रहणमनन्यत्र (बाधना? भावा)र्थम्। जनपदैकदेशबहुत्वे मा भूत्। वर्त्तनीषु भवः वार्त्तनः। अत्र देशभेदविवक्षानिबन्धनं बहुत्वमनियतमित्यणेव भवति। 'सुसर्वार्धादिभ्यो जनपदस्य' इति तदन्तविधिना सुपाञ्चालकः। सर्वपाञ्चालकः। (अर्धपाञ्चालकः। पूर्वपाञ्चालकः।) अपरपाञ्चालकः। 'सुसर्वार्धेभ्यो जनपदस्यामद्राणां दिशश्च' इत्युत्तरपदवृद्धिः॥

## कच्छाग्निवक्त्रवर्त्तोन्तेभ्यः॥५७॥

कच्छाद्यन्तेभ्यो देशवाचिभ्यो वृद्धेभ्यश्चावृद्धेभ्यश्च शेषेऽर्थे वुञ्प्रत्ययो भवति। छाणोरपवादः। भारुकच्छकः। पैप्पलीकच्छकः। काण्डा-

म्रकः । वैभुजाग्रकः । ऐन्दुवक्त्रकः । सैन्धुवक्त्रकः । चारुवक्त्रकः । चारुवर्त्तकः । मालवर्त्तकः ॥

**धूमषण्डशशादनार्जुनावराजग्रे[1]हगर्त्तसत्रा[2]साहसाकेतसांस्तीयाचयान्तरीपद्वीपेभ्यः ॥ ५८ ॥**

धूमादिभ्यो देशवाचिभ्यः शेषेऽर्थे वुञ्प्रत्ययो भवति । अणादीनामपवादः । धौमकः । षाण्डकः । शाशादनकः । आर्जुनावकः । राजग्रहकः । गार्त्तकः । सात्रासाहकः । साकेतकः । सांस्तीयकः । आचयकः । आन्तरीपकः । द्वैपकः ॥

**तीर्थघोषशष्पमित्रवर्चारुणकुक्षिबर्बरोज्जयिनीपल्लीभक्षालीदक्षिणापथेभ्यः ॥ ५९ ॥**

तीर्थादिभ्यो देशवाचिभ्यः शेषेऽर्थे वुञ्प्रत्ययो भवति । अणोऽपवादः । तैर्थकः । घौषकः । शाष्पकः । मैत्रकः । वार्चकः । आरुणकः । कौक्षकः । बार्बरकः । औज्ज(नि ? यिन)कः । पाल्लकः । माक्षालकः । दाक्षिणापथकः ॥

**ह्याहावव्याहावाजिकूलमद्रकूलारा(ज्ञि ? ज्ञी)धार्त्तराज्ञीपद्वारमाठरविदेहानर्त्तपाठेयपाथेयेभ्यः ॥ ६० ॥**

ह्याहावादिभ्यः शेषेऽर्थे वुञ्प्रत्ययो भवति । ह्याहावकः । व्याहावकः । आ(ज ? जि)कूलकः । माद्रकूलकः । आराज्ञकः । धार्त्तराज्ञकः । पाद्वारकः । माठरकः । वैदेहकः । आनर्त्तकः । पाठेयकः । पाथेयकः । आराज्ञीधार्त्तराज्ञीभ्या(मि ? मी)दन्तत्वेन, पाठर(?)माठराभ्यां रोपधत्वेन, विदेहानर्त्ताभ्यां बहुत्वविषयजनपदत्वेन, पाठेयपाथेयाभ्यां योपधत्वेन वुञि सिद्धे पुनर्वचनमप्रागर्थमदेशार्थं च समर्थयन्ति ॥

**माहकमद्रकमाषघोषराजात्ममानदाण्डायनेभ्यः स्थल्याः ॥ ६१ ॥**

माहकादिभ्यः परो यः स्थलीशब्दस्तदन्ताद् देशवाचिनः प्रातिपदिकाच्छेषेऽर्थे वुञ्प्रत्ययो भवति । छादेरपवादः । माहकस्थलकः । माद्रक-

---

१, 'गृ' ख. ग. पाठः. २. 'न्त्रा' क. पाठः.

स्थलकः । माषस्थलकः । घोषस्थलकः । राजस्थलकः । आट्टस्थलकः । मानस्थलकः । दाण्डायनस्थलकः ॥

कूलात् सौवीरेषु ॥ ६२ ॥

कूलशब्दाद् देशवाचिनः सौवीरेषु शेषेऽर्थे वुञ्प्रत्ययो भवति । कौलको भवति सौवीरश्चेत् । सौवीरेष्विति किम् । कौलः ॥

समुद्रान्नौमनुष्ययोः ॥ ६३ ॥

समुद्राद् देशवाचिनो नावि मनुष्ये च विषये शेषेऽर्थे वुञ्प्रत्ययो भवति । सामुद्रिका नौः । सामुद्रको मनुष्यकः । नौमनुष्ययोरिति किम् । सामुद्रं लक्षणम् । सामुद्रं वसु ॥

नगरात् कुत्सा[1]प्रावीण्ययोः ॥ ६४ ॥

नगरशब्दात् शेषेऽर्थे कुत्सायां प्रावीण्ये च गम्यमाने वुञ्प्रत्ययो भवति । चौरा (हीना ? हि) नागरका भवन्ति । प्रवीणा हि नागरका भवन्ति । कुत्साप्रावीण्ययोरिति किम् । नागराः ब्राह्मणाः । कत्र्यादिषु तु संज्ञाशब्देन साहचर्यात् संज्ञानगरं पठ्यते । तस्मिन्नागरेयकं प्रत्युदाहार्यम् ॥

अरण्यात् पथिन्यायाध्यायहस्तिनरविहारेषु ॥

अरण्यशब्दात् पथ्यादिष्वभिधेयेषु शेषेऽर्थे वुञ्प्रत्ययो भवति । आरण्यकः पन्थाः न्यायः अध्यायः ह(न्ति ? स्ती) नरो विहारो वा । पथ्यादिष्विति किम् । आरण्याः पशवः । आरण्याः सुमनसः ।

वा गोमये ॥ ६६ ॥

अरण्याद् गोमयेऽभिधेये शेषेऽर्थे वुञ्प्रत्ययो वा भवति । (आरण्यः) आरण्यको गोमयः । आरण्यकानि गोमयानि ॥

कुरुयुगन्धराभ्याम् ॥ ६७ ॥

आभ्यां शेषेऽर्थे वुञ्प्रत्ययो वा भवति । कुरुषु भवः कौरवकः कौरवः । यौगन्धरकः यौगन्धर(क?)ः । जनपदशब्दावेतौ । ताभ्याम् '(अ) वृद्धेभ्योऽपि' इति नित्ये वुञ्प्र(त्या ? त्यये प्रा)प्ते विकल्पार्थं वचनम् ।

1. 'त्सनप्रा' क. पाठः.

कुरुशब्दस्य कच्छादिषु पाठादणा बाधो मा भूदिति । मनुष्यतत्स्थयोस्तु परत्वान्नित्यं वुञ् भवति ॥

वृजिमद्राभ्यां कन् ॥ ६८ ॥

आभ्यां शेषेऽर्थे क(न्)प्रत्ययो भवति । जनपदवुञोऽपवादः । वृजिषु भवः वृजिकः । मद्रकः ॥

कोपधादण् ॥ ६९ ॥

ककारोपधाद् देशवाचिनः शेषेऽर्थे अण्प्रत्ययो भवति । जनपदवुञोऽपवादः । ऋषिकेषु भव आर्षिकः । माहिषकः । इक्ष्वाकुषु भव ऐक्ष्वाकवः । त्रिशङ्कुषु भवस्त्रैशङ्कवः । 'ओर्देशात्' इति ठञि प्राग्जितीयाणपवादे जनपदबहुत्वलक्षणेन वुञा बाधिते पुनरण्ग्रहणा(द ? दु)वर्णादपि कोपधादणेव भवति ॥

कच्छकुरुसिन्धुसिन्ध्वन्तगन्धारिकुलू(ह ? क)कम्बोजकश्मीरमधुमद्दर्णुरङ्कुद्वीपानूपानुषण्डबिजावकाजवाहसाल्वेभ्यश्च ॥ ७० ॥

कच्छादिभ्यो देशवाचिभ्यः शेषेऽर्थे अण्प्रत्ययो भवति । वुञादेरपवादः । कच्छे भवः काच्छः । कुरुषु भवः कौरवः । सैन्धवः । साक्तुसैन्धवः । 'हृद्भगसिन्धोः पूर्वपदस्य च' इत्युभयपदवृद्धिः । गान्धारः । कौलूकः । काम्बोजः । काश्मीरः । माधुमतः । वार्णवः । राङ्कवः । द्वैपः । आनूपः । आनुषण्डः । बैजावकः । आजवाहः । साल्वः । कच्छशब्दस्याबहुत्वविषयत्वात् बिजावकशब्दस्य कोपधत्वात् अणि सिद्धे मनुष्यतत्स्थयोर्वुञर्थमुत्तरार्थश्च पाठः ॥

मनुष्यतत्स्थयोर्वुञ् ॥ ७१ ॥

कच्छादिभ्यो देशवाचिभ्यो मनुष्ये मनुष्यस्थे चाभिधेये शेषेऽर्थे वुञ्प्रत्ययो भवति । काच्छको मनुष्यः । काच्छकम(नुष्यसहि ? स्य हसि)तम् । कौरवको मनुष्यः । कौरवकमस्य हसितम् । एवं सैन्धवकः राङ्कवक इति ।

---

1. 'त' ख. ग. पाठः,

मनुष्यतत्स्थयोरिति किम्। काच्छो गौः। राङ्कवायणो गौः। राङ्कवः कम्बलः। 'रङ्कोः प्राणिनि वा' इति विकल्पः॥

सात्वाद् गोयवाग्वोश्च॥ ७२॥

साल्वशब्दाद् गोयवाग्वोश्चार्थयोः शेषेऽर्थे वुञ्प्रत्ययो भवति। साल्वको गौः। साल्विका यवागूः। साल्वको मनुष्यः। साल्वकमस्य हसितमिति पूर्वेण (न?) भवति॥

न पदातौ॥ ७३॥

साल्वशब्दात् पदातावभिधेये 'मनुष्यतत्स्थयोः' इति प्राप्तो वुञ् न भवति। साल्वः पदातिर्व्रजति॥

गर्त्तान्ताच्छः॥ ७४॥

गर्त्तशब्दान्ताद् देशवाचिनः शेषेऽर्थे छप्रत्ययो भवति। अणोऽपवादः। वृकगर्त्तीयः। सृगालगर्त्तीयः। पाटलागर्त्तीयः। वाहीकग्रामलक्षणौ ठञ्ञिठौ परत्वाद् बाधते। देशाधिकाराद् बहुपूर्वान्न भवति। बाहुगर्त्तः॥

कटादेः प्राच्यात्॥ ७५॥

कटादेः प्रा(च्याद्?च्य)देशवाचिनः शेषेऽर्थे छप्रत्ययो भवति। अणोऽपवादः। कटनगरीयः। कटघोषीयः। कटवर्त्तकीयः। प्राच्यादिति किम्। काटनागरः॥

कखोपधकन्थापलदनगरग्रामह्रदान्ताच्छे॥ ७६॥

ककारखकारोपधात् कन्थाद्यन्ताच्च देशवाचिनः प्रातिपदिकात् शेषेऽर्थे छे विषये छ एव प्रत्ययो भवति। बाधकबाधनार्थ आरम्भः। कोपधेभ्योऽणि प्राप्ते आरीहणकीयः। आश्वत्थकीयः। शाल्मलिकीयः। ऐलुकीयः। सौसुकीयः। (सो?खो)पधाद् वाहीकग्रामलक्षणयोष्ठञ्ञिठयोः कौटशि(शिकि?)खीयः। कन्थान्तात् तयोरेव दाक्षिकन्थीयः। पलदान्तात्

1. 'कु' ख. पाठः.

तयोरेव दाक्षिपलदीयः । माहकिपलदीयः । नगरान्ताद् रोपधलक्षणे वुञि दाक्षिनगरीयः । माहकिनगरीयः । ग्रामान्तात् ठञ्ञिठयोरेव दाक्षिग्रामीयः । माहकिग्रामीयः । ह्रदान्तात् तयोरेव दाक्षिह्रदीयः । छ इति किम् । आर्षिकः । माढनगरः ॥

पर्वतात् ॥ ७७ ॥

पर्वताच्छेषेऽर्थे छप्रत्ययो भवत्यणोऽपवादः । पर्वतीयो राजा । पर्वतीयः पुमान् ॥

अनरे वा ॥ ७८ ॥

(अ)मनुष्येऽभिधेये पर्वताच्छेषेऽर्थे छप्रत्ययो वा भवति । पार्वतीयानि फलानि पार्वतानि । अनर इति किम् । पार्वतो मनुष्यः ॥

कृकणपर्णाद् भारद्वाजात् ॥ ७९ ॥

कृकणपर्णाभ्यां भारद्वाजदेशवाचिभ्यां शेषेऽर्थे छप्रत्ययो भवत्यणोऽपवादः । कृकणीयम् । पर्णीयम् । भारद्वाजादिति किम् । कार्कणम् । पार्णम् ॥

गर्हान्तस्थसमविषमोत्तमोत्तरान्तरानन्तरान्याङ्गवङ्गमगधेभ्यः ॥ ८० ॥

गर्हादिभ्यो यथासम्भवं देशवाचिभ्यः शेषेऽर्थे छप्रत्ययो भवति । गर्हीयः । अन्तस्थीयः । समीयः । विषमीयः । उत्तमीयः । उत्तरीयः । अन्तरीयः । अनन्तरीयः । (अन्यदीयः) । 'ठकारयोरन्यस्य (१)दुग्' इति दुगागमः । अङ्गीयः । वङ्गीयः । मगधीयः ॥

कामप्रस्थदन्ताग्रावस्पन्दना*ग्निशर्मिदैवशर्मिवाराटकिवाल्मीक्याध्यश्विशैशिर्यासुर्यानृशंस्याहिंसिभ्यः ॥ ८१ ॥

---

१. 'गाह्यान्त', २. 'व', ३. 'र्यानृ' ख. ग. पाठः.

---

* इत उत्तरं वृत्त्युदाहरणानुरोधात् 'आवश्यन्दन' इत्यपि पाठो भाति ।

कामप्रस्थादिभ्यः शेषेऽर्थे छप्रत्ययो भवति। कामप्रस्थात् प्रस्थान्तलक्षणस्य वुञः, शेषेभ्यस्त्वणोऽपवादः। कामप्रस्थीयः। दन्ताग्रीयः। अवस्पन्दनीयः। आवश्यन्दनीयः। आग्निशर्मीयः। दैवशर्मीयः। वाराटकीयः। वाल्मीकीयः। आध्यश्वीयः। शैशिरीयः। आसुरीयः। आनृशंसीयः। शाहिंसीयः॥

[1]क्षैमवृत्तिखा[2]डायनिकाठेरणिलाठेरणि[3]भौजिवैजि-न्याडिशाडि[4]शौ[5]ङ्गि[6]सौत्रिसौमि[7]त्र्यामित्रिभ्यः॥ ८२॥

क्षैमवृत्त्यादिभ्यः शेषेऽर्थे छप्रत्ययो भवति। अणोऽपवादः। क्षैमवृत्तीयः। खाडायनीयः। काठेरणीयः। लाठेरणीयः। भौजीयः। वैजीयः। न्याडीयः। शाडीयः। शौङ्गीयः। सौत्रीयः। सौमित्रीयः। आमित्रीयः॥

इषोरग्रानीकाभ्याम्॥ ८३॥

इषोः परौ यावग्रानीकशब्दौ तदन्तात् प्रातिपदिकात् शेषेऽर्थे छप्रत्ययो भवति। अणोऽपवादः। इष्वग्रीयम्। इष्वनीकीयम्॥

एकाद् वृक्षपलाशिकाभ्याम्॥ ८४॥

एकशब्दात् परौ यौ वृक्षपलाशिकाशब्दौ तदन्तात् प्रातिपदिकात् शेषेऽर्थे छप्रत्ययो भवति। अणोऽपवादः। एकवृक्षीयः। एकपलाशिकीयः॥

समानाच्च ग्रामात्॥ ८५॥

समानशब्दादेकशब्दाच्च परो यो ग्रामशब्दस्तदन्तात् प्रातिपदिकाच्छेषेऽर्थे छप्रत्ययो भवति। समानग्रामीयः। एकग्रामीयः॥

अधमोत्तमाभ्यां च शाखात्॥ ८६॥

---

१. 'क्षे' ख. पाठः. २. 'कालायनि' ख. ग. पाठः. ३. 'भाजिवैजन्या' क. पाठः. ४. 'शा' ख. पाठः. ५. 'स्रौ' ग. पाठः. ६. 'तिं' क. पाठः ७. 'रा' ख. ग. पाठः.

अधमोत्तमशब्दाभ्यां समानैकशब्दाभ्यां च परो यः कृतोपसर्जनह्रस्वत्वः शाखाशब्दस्तदन्तात् प्रातिपदिकात् शेषेऽर्थे छप्रत्ययो भवति। अधमशाखीयः। उत्तमशाखीयः। समानशाखीयः। एकशाखीयः॥

पूर्वपराभ्यां पक्षात् ॥ ८७ ॥

पूर्वपराभ्यां परो यः पक्षशब्दस्तदन्तात् प्रातिपदिकात् शेषेऽर्थे छप्रत्ययो भवति। पूर्वपक्षीयः। परपक्षीयः॥

एकमुखपार्श्वेभ्यस्तसः ॥ ८८ ॥

एकादिभ्यः परो यस्त(दन्तसः ? स्)तदन्तात् प्रातिपदिकात् शेषेऽर्थे छप्रत्ययो भवति। एकतीयः। मुखतीयः। पार्श्वतीयः। 'अव्ययस्य नाराच्छश्वतोसि' इति टिलोपः॥

स्वपरजनदेवराज्ञां कुक् च ॥ ८९ ॥

स्वादिभ्यः शेषेऽर्थे छप्रत्ययः कु(ञ् ? क्) चागमो भवति। स्वकीयः परकीयः। जनकीयः। देवकीयः। राजकीयः॥

पृथिवीमध्यस्य मध्यमश्च[1] ॥ ९० ॥

पृथिवीमध्यशब्दाच्छेषेऽर्थे छप्रत्ययः मध्यम इति चास्यादेशो भवति पृथिवीमध्ये भवो मध्यमीयः॥

निवासस्य चरणेऽण्[2] च ॥ ९१ ॥

निवासशब्दात् पृथिवीमध्यशब्दाच्चरणेऽभिधेये शैषिकोऽणप्रत्ययः पृथिवीमध्यस्य च मध्यमादेशो भवति। पृथिवीमध्यो निवास एषां चरणानां माध्यमाः। निवासस्येति किम्। पृथिवीमध्यादागतो मध्यमीयः कठः। चरण इति किम्। पृथिवीमध्यं निवासोऽस्य मध्यमीयः शूद्रः॥

वेणुकवेत्रकप्रस्थकमध्यमकोत्तरपदकादिभ्यश्छण् ॥ ९२ ॥

१. 'कश्च' क. पाठः. २. 'णे च' ग. पाठः.

वेणुकादिभ्यः शेषेऽर्थे छण्प्रत्ययो भवति । वैणुकीयः । वैत्रकीयः । प्रास्थकीयः । माध्यमकीयः । औत्तरपदकीयः । आदिग्रहणाद् यथादर्शनमन्येऽपि भवन्ति ॥

युष्मदस्मदोर्वा खञ् युष्माकास्माकौ ॥ ९३ ॥

युष्मदस्मद्भ्यां शेषेऽर्थे खञ्प्रत्ययो भवति । युष्माकास्माकौ च यथासङ्ख्यमादेशौ भवतः । युष्माकमयं युवयोर्वा यौष्माकीणः । अस्माकमावयोर्वा आस्माकीनः । पक्षे त्यादादित्वाच्छः । युष्मदीयः । अस्मदीयः ॥

अण् च ॥ ९४ ॥

युष्मदस्मद्भ्यां शेषेऽर्थे अण् च प्रत्ययो भवति । युष्माकास्माकौ चादेशौ । यौष्माकः । आस्माकः ॥

तवकममकावेकत्वे ॥ ९५ ॥

युष्मदस्मदोरेकत्वे खञ्याणि च परतस्तवकममकावादेशौ भवतः । तावकीनः मामकीनः । तावकः मामकः । छे तु त्वदीयः मदीयः । 'प्रत्ययोत्तरपदयोश्च' इत्येकत्वे युष्मदस्त्वदादेशो भवति । अस्मदस्तु मदादेशः ॥

द्वीपादनुसमुद्रं ञ्यः ॥ ९६ ॥

समुद्रसमीपे यो द्वीपस्ततः शेषेऽर्थे ञ्यप्रत्ययो भवति । द्वैप्यः । अनुसमुद्रमिति किम् । द्वैपः । कच्छादिपाठादण् । नृतत्स्थयोर्वुञ् ॥

अर्धाद् यत् ॥ ९७ ॥

अर्धशब्दाच्छेषेऽर्थे यत्प्रत्ययो भवति । अर्ध्यम् ॥

परापराधमोत्तमादेश्च ॥ ९८ ॥

पराद्यादेरर्धशब्दाच्छेषेऽर्थे यत्प्रत्ययो भवति । परार्ध्यम् । अपरार्ध्यम् । अधमार्ध्यम् । उत्तमार्ध्यम् ॥

दिगादेष्ठञ् च ॥ ९९ ॥

दिक्छब्दादेरर्धात् शेषेऽर्थे ठञ्प्रत्ययो भवति । चकाराद् यच्च । पौर्वार्धिकं पूर्वार्ध्यम् । दाक्षिणार्धिकं दक्षिणार्ध्यम् । परापरादेस्तु पूर्वेण भवति ॥

1. 'कवचने' ख. पाठः.

ग्रामजनपदैकदेशादञ् च ॥ १०० ॥

ग्रामैकदेशवाचिनो जनपदैकदेशवाचिनश्चार्धाद् दिक्छब्दादेः शेषेऽर्थेऽञ्प्रत्ययो भवति। (अयं? ठञ्) च। ग्रामस्य जनपदस्य च परात् पूर्वार्धे भवाः पौर्वार्धिकाः पौर्वार्धाः। (दाक्षिणार्धिकाः) दाक्षिणार्धाः॥

सपूर्वात् ॥ १०१ ॥

विद्यमानपूर्वादर्धशब्दाच्छेषेऽर्थे ठञ्प्रत्ययो भवति। बालेयार्धिकः। गौतमार्धिकः॥

कालेभ्यः ॥ १०२ ॥

कालविशेषवाचिभ्यः शेषेऽर्थे ठञ्प्रत्ययो भवति। अणोऽपवादः। मासिकम्। सांवत्सरिकम्। आह्निकम्। दैवसिकम्॥

कदम्बपुष्पादिभ्यश्च तद्वृत्तिभ्यः ॥ १०३ ॥

कदम्बपुष्पादिभ्यः साहचर्यात् कालादिना कालवृत्तिभ्यः शेषेऽर्थे ठञ्प्रत्ययो भवति। कादम्बपुष्पिकम्। (व्री? व्रै)हिपलाशिकम्। शश्वतोऽण् च॥

शरदः श्राद्धे ॥ १०४ ॥

शरच्छब्दात् कालवाचिनः श्राद्ध एवाभिधेये शेषेऽर्थे ठञ्प्रत्ययो भवति। शारदिकं श्राद्धम्। श्राद्ध इति किम्। शारदं सस्यम्। श्राद्धशब्देन रूढेः पितृकार्यमेवोच्यते नतु श्रद्धावान्॥

रोगातपयोर्वा ॥ १०५ ॥

रोगे चातपे चाभिधेये शरच्छब्दाच्छेषेऽर्थे वा ठञ्प्रत्ययो भवति। शारदिको रोगः शारदः। शारदिकः आतपः शारदः। रोगातपयोरिति किम्। शारदं दधि॥

निशाप्रदोषाभ्याम् ॥ १०६ ॥

आभ्यां शेषेऽर्थे ठञ्प्रत्ययो (वा) भवति। नैशिकम्। नैशम्। प्रादोषिकम्। प्रादोषम्॥

---

1. 'पदांशादञ्च' ख. ग. पाठः.

श्वसस्तुट् च ॥ १०७ ॥

श्वस्शब्दाच्छेषेऽर्थे ठञ्प्रत्ययो (वा) भवति। तुडागमश्चास्य भवति। शौवस्तिकम् । 'ऐषमोह्यःश्वस' इति त्यप् । श्वस्त्यम् । तत्रापि वाग्रहणात् पक्षे 'सायंचिरम्' इत्यादिना ट्युः । श्वस्तनम् ॥

सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युः ॥ १०८ ॥

सायंप्रभृतिभ्यः कालवाचिभ्यः शेषेऽर्थे ट्युप्रत्ययस्तुडागमश्चास्य भवति । सायन्तनम् । चिरन्तनम् । निपातना(द ? न्म)कारः । प्राह्णेतनम् । प्रगेतनम् । निपातनादेकारः । अव्ययेभ्यः --- दिवातनम् । दोषातनम् । कालेभ्य इति किम् । स्वर्भवं सौव(र)म् ॥

पूर्वाह्णापराह्णाभ्यां वा ॥ १०९ ॥

आभ्यां शेषेऽर्थे ट्युप्रत्ययस्तुट् च वा भवति । पौर्वाह्णिकं पूर्वाह्णेतनम् । आपराह्णिकम् । अपराह्णेतनम् । पूर्वाह्णतनम् । 'घकालतनेषु कालनाम्नो वा' इति सप्तम्या अलुग्विकल्पः ॥

पुरो नः ॥ ११० ॥

पुरा इत्येतस्मात् कालवाचिनोऽव्ययाच्छेषेऽर्थे नप्रत्ययो (वा) भवति । पुराभवं पुराणम् । पुरातनम् ॥

परुत्परारिचिरेभ्य(स्त्नः ? स्त्नः) ॥ १११ ॥

परुत्प्रभृतिभ्यः शेषेऽर्थे (न ? त्न)प्रत्ययो (वा) भवति । परुत्नः परुत्तनः । परारित्नः परारितनः । चिरत्नः चिरन्तनः ॥

ऋतुनक्षत्रेभ्योऽण् ॥ ११२ ॥

ऋतुवाचिभ्यो नक्षत्रवाचिभ्यश्च शेषेऽर्थे अण्प्रत्ययो भवति । काला(द ? त् ठ)ञोऽपवादः । ऋतुभ्यः — ग्रैष्मं शैशिरं शारदं वासन्तम् । 'ऋतोर्वृद्धिमद्विधाववयवेभ्यः' इति तदन्तविधिना पूर्वग्रैष्मः । अपरशैशिरम् । इति । 'अवयवादृतोः' इत्युत्तरपदवृद्धिः । नक्षत्रेभ्यः — आश्विनं रौहिषं तैषं पौषम् ॥

सन्ध्यासन्धिवेलात्रयोदशीचतुर्दशीपञ्चदशीपौर्णमास्यमावास्याप्रतिपद्भ्यश्च ॥ ११३ ॥

सन्ध्यादिभ्यः कालवाचिभ्यः शेषेऽर्थेऽण्प्रत्ययो भवति। ठञोऽपवादः। सान्ध्यः। सान्धिवेलः। त्रायोदशः। चातुर्दशः। पाञ्चदशम्। पौर्णमासम्। आमावास्यम्। प्रातिपदम् ॥

संवत्सरात् फलपर्वणोः ॥ ११४ ॥

संवत्सरशब्दात् कालवाचिनः फले पर्वणि चाभिधेये शेषेऽर्थेऽण्प्रत्ययो भवति। सांवत्सरं फलम्। (सांवत्सरं पर्व।) फलपर्वणोरिति किम्। सांवत्सरिकं श्राद्धम् ॥

हेमन्ताद् वा तलोपश्च ॥ ११५ ॥

हेमन्तशब्दाद् ऋतुविशेषवाचिनः शेषेऽर्थे पूर्वेण प्राप्तोऽण् विभाष्यते। तलोपश्चास्य वा भवति। हैमनं हैमन्तं हैमन्तिकम्। 'ऋतोर्वृद्धिमद्विधाववयवेभ्य' इति तदन्तविधिना पूर्वहैमनम्। 'अवयवादृतोः' इत्युत्तरपदवृद्धिः ॥

वर्षाप्रावृड्भ्यां ठगेण्यौ ॥ ११६ ॥

आभ्यामृतुविशेषवाचिभ्यां शेषेऽर्थे यथासङ्ख्यं ठगेण्यौ प्रत्ययौ भवतः। अणोऽपवादः। वार्षिकम्। पूर्ववत् तदन्तविधिर्वृद्धिश्च। पूर्ववार्षिकम्। अपरवार्षिकम्। प्रावृषेण्यम् ॥

मध्याद्[1]ः साम्प्रतिके ॥ ११७ ॥

मध्यशब्दात् साम्प्रतिके जाता(ताव?द्य)र्थे अःप्रत्ययो भवति। साम्प्रतिकं न्याय्यम्। युक्तमिति यावत्। नातिदीर्घो नातिह्रस्वो मध्यः कायः। मध्यं काष्ठम् ॥

आदेश्च मः ॥ ११८ ॥

आदिशब्दान्मध्यशब्दाच्च शेषेऽर्थे मप्रत्ययो भवति। आदिमः। मध्यमः ॥

---

१. 'द' ख. ग. पाठः

अधोवसोर्लोपश्च ॥ ११९ ॥

अधस् (अवस्) इत्येताभ्यां शेषेऽर्थे मप्रत्ययो भवत्यन्तलोपश्च । अधमः । अवमः ॥

अग्रान्तपश्चाद्भ्य इमच् ॥ १२० ॥

अग्रादिभ्यः शेषेऽर्थे इमच्प्रत्ययो भवति । अग्रिमः । अन्तिमः । पश्चिमः ॥

तत्र जातः[1] ॥ १२१ ॥

तत्र इति सप्तमीसमर्थाज्जात इत्येतस्मिन्नर्थे यथाविहितमणादयश्च प्रत्यया भवन्ति । स्रुघ्ने जातः स्रौघ्नः । माथुरः । औत्सः । औदपानः । बाह्यः । बाहीकः । अभ्यः । कालेयः । स्त्रैणः । पौंस्नः । राष्ट्रियः । अवारपारीणः । ग्राम्यः । ग्रामीणः । कात्त्रेयकः । औम्भेयकः । शाकलिकः । मा.......दिक इति ॥

प्रावृषष्ठप् ॥ १२२ ॥

प्रावृट्च्छब्दात् तत्र जात इत्येतस्मिन्नर्थे ठप्प्रत्ययो भवति । एण्यस्यापवादः । प्रावृषिकः । पकारः स्वरार्थः ॥

संज्ञायां शरदो वुञ् ॥ १२३ ॥

शरच्छब्दात् तत्र जात इत्येतस्मिन्नर्थे (आ? संज्ञा)यां वुञ्प्रत्ययो भवति । ऋत्वणोऽपवादः । शारदका मुद्गाः । शारदका दर्भाः । मुद्गविशेषस्य दर्भविशेषस्य चेयं संज्ञा ॥

पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्करेभ्यः कन् ॥ १२४ ॥

पूर्वाह्णादिभ्यस्तत्रजात इत्येतस्मिन्नर्थे संज्ञायां कन्प्रत्ययो भवति । ठञादीनामपवादः । पूर्वाह्णकः । अपराह्णकः । आर्द्रकः । मूलकः । प्रदोषकः । अवस्करकः । संज्ञायामिति किम् । पौर्वाह्णिकं पूर्वाह्णेतनम् । आपराह्णिकम् । अपराह्णेतनम् । आर्द्रम् । मौलम् । प्रादोषिकम् । आवस्करमिति ठञादय एव भवन्ति ॥

पथः पन्थ च ॥ १२५ ॥

---

1. 'तः डिद्वाणद्विः प्रा' ख. ग, पाठः.

पथिन्शब्दात् तत्र जात इत्येतस्मिन्नर्थे संज्ञायां गम्यमानायां कन्प्रत्ययः पथश्च पन्थादेशो भवति । पथि जातः पन्थकः ॥

सिन्ध्ववकराभ्यां वा ॥ १२६ ॥

सिन्धु अवकर इत्येताभ्यां तत्र जात इत्येतस्मिन्नर्थे संज्ञायां विषये कन्प्रत्ययो वा भवति । सिन्धुकः सैन्धवः । पक्षे कच्छादिपाठादण् । अवकरकः । आवकरः । पक्षे औत्सर्गिकोऽण् । संज्ञायामिति किम् । सैन्धवको मनुष्यः ॥

अमावास्यार्थादश्च ॥ १२७ ॥

अमावास्यार्थवाचिनस्तत्र जात इत्येतस्मिन्नर्थे संज्ञायामःप्रत्ययः कन् च वा भवति । सन्ध्याद्यणोऽपवादः । अमावास्यायां जातः अमावास्यकः । अमावास्यः । आमावास्यः । संज्ञायामिति किम् । आमावास्यः* ॥

स्थानान्तगोशालखरशालाल्लुक् ॥ १२८ ॥

स्थानान्तेभ्यः प्रातिपदिकेभ्यः गोशाला खरशाला इत्येताभ्यां च तत्र जात इत्येतस्मिन्नर्थे संज्ञायां समुत्पन्नस्य प्रत्ययस्य लुग् भवति । गोस्थाने जातः गोस्थानः । गोशाले जातः गोशालः । लिङ्गविशिष्टस्यापि ग्रहणात् गोशालायां जातः गोशालः । एवं खरशालः । 'लुक् तद्धितलुक्यगोणीसूच्योः' इति स्त्रीप्रत्ययस्यापि लुग् भवति ॥

अनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाबहुलाभ्यः ॥ १२९ ॥

अनुराधादिभ्यस्तत्र जात इत्येतस्मिन्नर्थे संज्ञायामुत्पन्नस्य नक्षत्राणो लुग् भवति । अनुराधः । स्वातिः । तिष्यः । पुष्यः । पुनर्वसुः । हस्तः । विशाखः । बहुलः । पूर्ववत् स्त्रीप्रत्ययस्यापि निवृत्तिः ॥

वत्सशालाभिजिदश्वयुङ्मृगशिरश्चित्रारेवतीरोहिणीभ्यो वा ॥ १३० ॥

वत्सशालादिभ्यस्तत्र जात इत्येतस्मिन्नर्थे संज्ञायामुत्पन्नस्याणप्रत्ययस्य लुग् वा भवति । वत्सशालः । वात्सशालः । अभिजित् । आभिजितः ।

* अर्थग्रहणस्य प्रयोजनकथनं लुप्तं स्यात् ।

अश्वयुक्। आश्वयुजः। मृगशिराः। मार्गशीर्षः। चित्रः। चैत्रः। रेवतः। रैवतः। रोहिणः। रौहिणः॥

## नित्यं स्त्रियां चित्रादिभ्यः॥ १३१॥

पूर्वसूत्रोपात्तेभ्यश्चित्रादिभ्यस्तत्र जात इत्येतस्मिन्नर्थे स्त्रियां संज्ञायां विषये समुत्पन्नस्य नक्षत्राणो (नित्यं) लुग् भवति। चित्रायां जाता चित्रा। रेवती। रोहिणी॥

## शतभिषजोऽण् च डिद्वा॥ १३२॥

शतभिषक्छब्दात् तत्र जात इत्यर्थे संज्ञायामुत्पन्नस्य नक्षत्राणो लुगण् स च डिद् वा भवति। शातभिषः शतभिषक्॥

## श्रविष्ठाषाढाभ्यां छण् च॥ १३३॥

श्रविष्ठाषाढाभ्यां तत्र जात इत्येतस्मिन्नर्थे संज्ञायां नक्षत्राणो लुक् छण् डिदण् च वेति त्रयः प्रत्यया भवन्ति। श्रवि(ष्ठा? ष्ठः)। श्राविष्ठः। श्राविष्ठीयः। आषाढः। आषाढीयः। अषाढः॥

## फल्गुन्याट च॥ १३४॥

फल्गुनीशब्दात् तत्र जात इत्येतस्मिन्नर्थे संज्ञायां टप्रत्ययो भवति चकाराल्लुगण् च भवति। टकारो ङीबर्थः। फल्गुनः फल्गुनी। फाल्गुनः। फल्गुनः॥

## अश्विन्यादिभ्यो बहुलम्॥ १३५॥

अश्विन्यादिभ्यो नक्षत्रवाचिभ्यस्तत्र जात इत्येतस्मिन्नर्थे बहुलं लुग् भवति। अश्विनीषु जातः अश्विनः अश्विनी। राधः राधा। श्रवणः श्रवणा। उत्तरः उत्तरा (: ?)। क्वचिन्न भवति। मघासु जातो माघः। अश्वत्थे भव आश्वत्थः। प्रोष्ठपदासु प्रोष्ठपादः। भद्रपादः। 'जाते प्रोष्ठभद्राभ्यां पदस्य' इत्युत्तरपदवृद्धिः॥

## कृतलब्धक्रीतकुशलप्रायभवसम्भूताः॥ १३६॥

तत्रेति सप्तमीसमर्थात् कृतादिष्वर्थेषु यथाविहितमणादयो भवन्ति।

स्रुघ्ने कृतो लब्धो वा क्रीतो वा कुशलो वा प्रायभवो वा सम्भूतो वा स्रौघ्नः । राष्ट्रियः ॥

कालात् साधुपुष्प्यत्पच्यमानेषु ॥ १३७ ॥

तत्रेति सप्तमीसमर्थेभ्यः कालविशेषवाचिभ्यः साधु पुष्प्यत् पच्यमानमित्येतेष्वर्थेषु यथाविहितं प्रत्यया भवन्ति । हेमन्ते साधु हैमनमनुलेपनं हैमन्तं हैमन्तिकम् । वसन्ते पुष्प्यन्ति वासन्ताः कुन्दलताः । ग्रैष्म्यः पाटलाः । शरदि पच्यन्ते शारदाः । शालयः शैशिरा मुद्गाः ॥

उप्ते च ॥ १३८ ॥

तत्रेति सप्तमीसमर्थात् कालविशेषवाचिन उप्तमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । हेमन्ते उप्यन्ते हैमना यवाः । ग्रैष्माः शालयः ॥

आश्वयुज्या वुञ् ॥ १३९ ॥

आश्वयुजीशब्दादुप्तमित्येतस्मिन्नर्थे वुञ्प्रत्ययो भवति । आश्वयुज्यामुप्ता आश्वयुजका माषाः ॥

ग्रीष्मवसन्ताभ्यां वा ॥ १४० ॥

ग्रीष्मवसन्तशब्दाभ्यां तत्रोप्तमित्येतस्मिन्नर्थे वुञ्प्रत्ययो वा भवति । ग्रैष्मकं सस्यं ग्रैष्मम् । वासन्तकं वासन्तम् ॥

देयमृणम् ॥ १४१ ॥

तत्रेति सप्तमीसमर्थात् कालवाचिनो देयमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । मासे देयमृणं मासिकम् । आर्धमासिकम् । सांवत्सरिकम् । ग्रैष्मम् । वार्षिकम् । ऋणमिति किम् । मासे देया भिक्षा ॥

कलाप्यश्वत्थयवबुसेभ्यो वुन् ॥ १४२ ॥

कलाप्यादिभ्यः कालवाचिभ्यः सप्तमीसमर्थेभ्यो देयमृणमित्येतस्मिन्नर्थे वुन्प्रत्ययो भवति । यस्मिन् काले मयूराः कलापिनो भवन्ति स तत्साहचर्यात् कालः कलापी । तस्मिन् देयमृणं कलापकम् । यस्मिन् कालेऽश्वत्थफलानि सोऽश्वत्थः । तस्मिन् देयमृणम् अश्वत्थकम् । यस्मिन् काले यवबुसानि भवन्ति (तद्) यवबुसम् । तस्मिन् देयमृणं यवबुसकम् ॥

ग्रीष्मावरसमाभ्यां वुञ् ॥ १४३ ॥

ग्रीष्मावरसमाशब्दाभ्यां तत्र देयमृणमित्येतस्मिन्नर्थे वुञ्प्रत्ययो भवति। अ(ण? णृठ)ञोरपवादः। ग्रैष्मकम्। आवरसमकम् ॥

संवत्सराग्रहायणीभ्यां ठञ्च ॥ १४४ ॥

संवत्सराग्रहायणीशब्दाभ्यां तत्र देयमृणमित्येतस्मिन्नर्थे ठञ्प्रत्ययश्चकाराद् वुञ् च भवति। सांवत्सरिकम्। सांवत्सरकम्। आग्रहायणिकम्। आग्रहायणकम्। अथवेत्येव सिद्धे ठञ्ग्रहणं किमर्थम्। यदा संवत्सरे देयमृणं फलं भवति तदा 'संवत्सरात् फलपर्वणोः' इत्यनेनाण् मा भूदिति ॥

व्याहरति मृगः ॥ १४५ ॥

तत्रेति वर्तते कालादिति च। सप्तमीसमर्थात् कालवाचिनो व्याहरतीत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। यो व्याहरति मृगश्चेत् स भवति। निशायां व्याहरति नैशिकः सृगालः नैशः। प्रादोषिकः। प्रादोषः। मृग इति किम्। वसन्ते व्याहरति कोकिलः ॥

तदस्य सोढम् ॥ १४६ ॥

तदिति प्रथमासमर्थात् कालवाचिनोऽस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति। यत् तत् प्रथमासमर्थं सोढं चेत् तद् भवति। सोढं जितमभ्यस्तमित्यर्थः। निशासहचरितमध्ययनं निशा सोढा अस्य छात्रस्य नैशः नैशिकः। प्रादोषिकः प्रादोषः ॥

तत्र भवः ॥ १४७ ॥

कालादिति निवृत्तम्। तत्रेति सप्तमीसमर्थात् भव इत्येतस्मिन्नर्थे यथाविहितमणादयो घादयश्च भवन्ति। सत्ता भवत्यर्थो गृह्यते, न जन्म। 'तत्र जात' इत्यनेन गतत्वात्। स्रुघ्ने भवः स्रौघ्नः। माथुरः। औत्सः। औदपानः। राष्ट्रियः। अवारपारीणः। ग्राम्यः। ग्रामीणः ॥

दिग्वर्गपूगगणोखामुखजघनवंशानुवंशदेशकाला-काशपक्षसाक्षिभ्यो यत् ॥ १४८ ॥

दिगादिभ्यस्तत्र भव इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति। दिक्षु भवो दिग्यः। वर्ग्यः। पूग्यः। गण्यः। उख्यः। मुख्यः। जघन्यः। वंश्यः। अनुवंश्यः। मुखजघनवंशानामदेहार्थः पाठः। देश्यः। काल्यः। आकाश्यः। पक्ष्यः। साक्ष्यः ॥

आद्यन्तान्तररहःपथ्यलीकयूथन्यायमित्रमेघमेधा-धार्य्याब्धयश्च ॥ १४९ ॥

आद्यादिभ्यश्च तत्र भव इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति। आद्यः अन्त्यः। अन्तर्यः। रह्यः। पथ्यः। अलीक्यः। यूथ्यः। न्याय्यः। मित्र्यः। मेघ्यः। मेध्यः। धार्यः। अप्सव्यः। 'अपो योनियन्मतुषु' इति सप्तम्या अलुक् ॥

उदकात् संज्ञायाम् ॥ १५० ॥

उदकशब्दात् संज्ञायां तत्र भव इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति। उदक्या रजस्वला स्त्री। संज्ञायामिति किम्। औदको मत्स्यः ॥

देहांशात्[2] ॥ १५१ ॥

शरीरावयववाचिनस्तत्र भव इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति। दन्त्यम्। कण्ठ्यम्। ओष्ठ्यम्। तालव्यम्। मुख्यम्। मूर्धन्यम् इति। 'अभावकर्मणोरनो य' इति नलोपाभावः ॥

दृतिकुक्षिकलशिवस्त्यस्त्यहिभ्यो ढञ् ॥ १५२ ॥

दृत्यादिभ्यस्तत्र भव इत्येतस्मिन्नर्थे ढञ्प्रत्ययो भवति। दार्तेयः। कौक्षेयः। कालशेयम्। वास्तेयम्। आस्तेयम्। आहेयम् ॥

ग्रीवातोऽण् च ॥ १५३ ॥

ग्रीवाशब्दात् तत्र भव इत्यर्थेऽणप्रत्ययश्चकारात् ढञ् च भवति। ग्रीवासु भवं ग्रैवं ग्रैवेयम्। ग्रीवाशब्दो धमनीवचनस्तासां बहुत्वात् बहुवचनान्तो भवति ॥

---

१. 'शकाराका' क. पाठः. २. 'हाङ्गात्' ख. पाठः.

गम्भीरपञ्चजनाभ्यां ञ्यः ॥ १५४ ॥

गम्भीर पञ्चजन इत्येताभ्यां तत्र भव इत्यर्थे ञ्यप्रत्ययो भवति । गाम्भीर्यः । पाञ्चजन्यः ॥

चतुर्मासाद् यज्ञे ॥ १५५ ॥

चतुर्मासशब्दाद् यज्ञेऽभिधेये तत्र भव इत्यर्थे ञ्यप्रत्ययो भवति । चतुर्षु मासेषु भवश्चातुर्मास्यो यज्ञः । यज्ञ इति किम् । चतुर्षु मासेषु भवश्चतुर्मासः । 'द्विगोरनपत्ये' इति ढञो लुग् भवति ॥

संज्ञायामण् लुक् च ॥ १५६ ॥

चतुर्मासशब्दात् संज्ञायां तत्र भव इत्यर्थे अण्प्रत्ययो लुक् चास्य भवति । चतुर्षु मासेषु भवति चातुर्मासी । आषाढी । कार्त्तिकी । फाल्गुनी वा पौर्णमास्युच्यते ॥

परेर्मुखौष्ठहनूलूखलेभ्योऽव्ययीभावे ॥ १५७ ॥

परेः परे ये मुखादयस्तेभ्योऽव्ययीभावसमासे वर्तमानेभ्यः प्रातिपदिकेभ्यस्तत्र भव इत्यर्थे ञ्यप्रत्ययो भवति । परिमुखे भवं पारिमुख्यम् । पार्यौष्ठ्यम् । पारिहनव्यम् । पार्युलूखल्यम् । अव्ययीभाव इति किम् । परिगतं मुखं परिमुखम् । तत्र भवः पारिमुखः ॥

उपात् स्थूलाकलापाभ्याम्[1] ॥ १५८ ॥

उपात् परौ यौ स्थूलाकलापशब्दौ ताभ्यामव्ययीभावसमासवृत्तिभ्यां तत्र भव इत्यर्थे ञ्यप्रत्ययो भवति । उपस्थूले भवमौपस्थूल्यम् । स्थूलाशब्देन हविरुच्यते । औपकलाप्यः ॥

अनोः पथिपदयूपवंशसीतातिलयवभङ्गामाषेभ्यः ॥

अनोः परे ये पथ्यादयस्तेभ्योऽव्ययीभाववृत्तिभ्यस्तत्र भव इत्यर्थे ञ्यप्रत्ययो भवति । अनुपथे भवमानुपथ्यम् । आनुपद्यम् । आनुयूप्यम् ।

1. 'पि' क. पाठः.

आनुवंश्यम् । आनुसीत्यम् । आनुतिल्यम् । आनुयव्यम् । आनुभङ्ग्यम् । आनुमाष्यम् ॥

पर्युपानुभ्यः सीरात् ॥ १६० ॥

पर्यादिभ्यः परो यः सीरशब्दस्तदन्तादव्ययीभाववृत्तेस्तत्र भव इत्यर्थे ञ्यप्रत्ययो भवति । पारिसीर्यम् । औपसीर्यम् । आनुसीर्यम् ॥

अन्तःपूर्वपदाट्ठञ् ॥ १६१ ॥

अन्तःपूर्वपदं यत् प्रातिपदिकमव्ययीभाववृत्ति ततस्तत्र भव इत्यर्थे ठञ्प्रत्ययो भवति । अन्तर्गेहे भवमान्तर्गेहिकम् । आन्तरगारिकम् । आन्तर्वेश्मिकम् । अव्ययीभावादिति किम् । अन्तःकरणे भव आन्तःकरणः ॥

पर्यनुभ्यां ग्रामात् ॥ १६२ ॥

परिपूर्वादनुपूर्वाच्च ग्रामशब्दात् तत्र भव इत्यस्मिन्नर्थे ठञ्प्रत्ययो भवति । पारिग्रामिकः । आनुग्रामिकः । अव्ययीभाव इत्येव । परिगतो ग्रामः परिग्रामः तत्र भवः पारिग्रामः ॥

समानात् ॥ १६३ ॥

समानशब्दात् तत्र भव इत्येतास्मिन्नर्थे ठञ्प्रत्ययो भवति । समानेषु भवः सामानिकः ॥

तदादेः ॥ १६४ ॥

समानशब्दादेस्तत्र भव इत्यस्मिन्नर्थे ठञ्प्रत्ययो भवति । सामानग्रामिकः । सामानदेशिकः ॥

लोकान्तात् ॥ १६५ ॥

लोकान्तात् प्रातिपदिकात् तत्र भव इत्यर्थे ठञ्प्रत्ययो भवति । ऐहलौकिकम् । पारलौकिकम् । 'इहपराभ्यां लोकस्य' इत्युत्तरपदवृद्धिः ॥

---

१. 'ने' ख. ग. पाठः.

**अध्यात्माधिदेवाधिभूतेहलोकपरलोकोर्ध्वदेहोर्ध्वन्दमादिभ्यश्च ॥ १६६ ॥**

अध्यात्मादिभ्यस्तत्र भव इत्यर्थे ठञ्प्रत्ययो भवति । अध्यात्मे भवमाध्यात्मिकम् । आधिदैविकम् । आधिभौतिकम् । ऐहलौकिकम् । पारलौकिकम् । और्ध्वदेहिकम् । और्ध्वन्दमिकम् । 'अधेर्देवभूतयोः' 'इहपराभ्यां लोकस्य' इत्युभयपदवृद्धिः । आदिग्रहणादौर्ध्वमौहूर्त्तिकादयो भवन्ति । 'ऊर्ध्वमुहूर्त्तस्य' इत्युभयपदवृद्धिः ॥

**जिह्वामूलाङ्गुलेश्छः ॥ १६७ ॥**

जिह्वामूलादङ्गुलेश्च छप्रत्ययो भवति तत्र भव इत्यर्थे । जिह्वामूले भवः जिह्वामूलीयः । अङ्गुलीयः ॥

**वर्गान्तात् ॥ १६८ ॥**

वर्गशब्दा(न्ता)त् प्रातिपदिकात् तत्र भव इत्यर्थे छप्रत्ययो भवति । कवर्गीयः । पवर्गीयः ॥

**अशब्दे यत्खौ च ॥ १६९ ॥**

शब्दादन्यत्र भवेऽर्थे वर्गशब्दान्तात् छप्रत्ययो यत्खौ च प्रत्यया भवन्ति । अर्जुनवर्गीयः । अर्जुनवर्ग्यः । अर्जुनवर्गीणः । अशब्द इति किम् । कवर्गीयः ॥

**मध्यान्मणमीयौ च ॥ १७० ॥**

मध्यशब्दात् तत्र भव इत्यर्थे मणमीयौ छ(श्च) प्रत्यया भवन्ति । मध्यमीयः । माध्यमः । मध्यीयः ॥

**दिनण्मध्यं चास्य ॥ १७१ ॥**

मध्यशब्दात् तत्र भव इत्यर्थे दिनणप्रत्ययो मध्यशब्दस्य च मध्यमित्यादेशो भवति । माध्यन्दिना उद्गायन्ति ॥

---

* इहलोकपरलोकशब्दयोर्लोकान्तत्वादेव ठञि सिद्धे इह पाठश्चिन्त्यः ।

## ललाटाद् भूषणे कन् ॥ १७२ ॥

ललाटशब्दाद् भूषणेऽभिधेये तत्रभवेऽर्थे कन्प्रत्ययो भवति। ललाटिका । भूषण इति किम् । ललाटे भवं ललाट्यम् ॥

## कर्णात् ॥ १७३ ॥

कर्णाद् भूषणेऽभिधेये तत्रभवेऽर्थे कन्प्रत्ययो भवति । कर्णिका ॥

## प्रायेणोपादेष्ठक् ॥ १७४ ॥

उपपूर्वात् कर्णशब्दात् प्रायभवेऽर्थे ठक्प्रत्ययो भवति । प्रायेणोपकर्णे भवति औपकर्णिकम् ॥

## जानुनीविभ्यां च ॥ १७५ ॥

जानुनीविभ्यां चोपपूर्वाभ्यां प्रायेण तत्रभवे(त्य ?)ऽर्थे ठक्प्रत्ययो भवति । प्रायेणोपजानु भवति औपजानुकम् । औपनीविकम् ॥

## स्थामाजिनान्तेभ्यो लुक् ॥ १७६ ॥

स्थामशब्दान्तेभ्योऽजिनशब्दान्तेभ्यश्च तत्रभवेऽर्थे समुत्पन्नस्य प्रत्ययस्याणादेर्लुग् भवति । अश्वत्थाम्नि भवः अश्वत्थामा । 'कपित्थाश्वत्थ इत्यादिना सस्य तकारः । कृष्णाजिने भवं कृष्णाजिनम् ॥

## मन्त्रेऽग्निष्टोमादिभ्यः ॥ १७७ ॥

अग्निष्टोम इत्येवमादिभ्यस्तत्र भव इत्यर्थे मन्त्रेऽभिधेये 'यज्ञेभ्य' इत्युत्पन्नस्य ठञो लुग् भवति । अग्निष्टोमे भवो मन्त्रः अग्निष्टोमः । राजसूयः ॥

## तस्य व्याख्यान इति कल्पे ॥ १७८ ॥

अग्निष्टोमादिभ्यस्तस्य व्याख्यान इत्युत्पन्नस्य प्रत्ययस्य कल्पेऽभिधेये लुग् भवति । अग्निष्टोमस्य व्याख्यानः कल्पः अग्निष्टोमः । वाजपेयः ॥

## भवव्याख्यानयोर्व्याख्येयनाम्नः ॥ १७९ ॥

तत्र भवस्तस्य व्याख्यानमित्यनयोः सप्तमीसमर्थेभ्यः षष्ठीसमर्थेभ्यश्च व्याख्यातव्यनामभ्यः प्रातिपदिकेभ्यः यथाविहितमणादयो भवन्ति।

सुप्सु भवं सौपम् । तैङम् । कार्त्तम् । प्रातिपदिकीयम् । सुपां व्याख्यानो ग्रन्थः सौपः । तैङः । कार्तः । प्रातिपदिकीयः । व्याख्येयनाम्न इति किम् । पाटलिपुत्रस्य व्याख्यानी सुकोसला । पाटलिपुत्रम् (एवं) सन्निवेशमिति सुकोसलया प्रतिच्छन्दभूतया व्याख्यायते, न तु पाटलिपुत्रशब्दो व्याख्यातव्यनाम भवति । अथ भवव्याख्यानयोर्युगपदधिकारः किमर्थम् । निर्दिष्टार्थौ हि तौ । तत्र भवस्तस्येदमिति अपवादविधानार्थं । वक्ष्यति — 'बह्वचोऽन्तोदात्ताट्ठञ्' इति । तत्राणादयो मा भूवन्निति ॥

बह्वचोऽन्तोदात्ताट्ठञ् ॥ १८० ॥

बह्वचो व्याख्यातव्यनाम्नोऽन्तोदात्ताद् भवव्याख्यानयोरर्थयोष्ठञ्प्रत्ययो भवति । षात्वणात्विकम् । नातानतिकम् । 'समासस्य' इत्यन्तोदात्तत्वम् । बह्वच इति किम् । सौपम् । तैङम् । द्व्यचष्ठकं वक्ष्यतीत्येकाच् प्रत्युदाह्रियते । अन्तोदात्तादिति किम् । संहितायां भवं तस्य व्याख्यानं सांहितम् । गतिस्वरेणाद्युदात्तम् ॥

यज्ञेभ्यः ॥ १८१ ॥

यज्ञवाचिभ्यो भवव्याख्यानयोष्ठञ्प्रत्ययो भवति । अग्निष्टोमे भवमग्निष्टोमस्य व्याख्यानं वा कल्पादन्यत् आग्निष्टोमिकम् । वाजपेयिकम् । पाञ्चौदनिकम् । अनन्तोदात्तार्थ आरम्भः । बहुवचनं सर्वयज्ञपरिग्रहार्थम् ॥

अध्यायेष्वेवर्षेः ॥ १८२ ॥

ऋषिशब्दा वसिष्ठादयः । ते यदा साहचर्यादिना ग्रन्थे (वर्त)न्ते तदा तेभ्यो व्याख्येयनामभ्यो भवव्याख्यानयोरर्थयोरध्यायेष्वेव प्रत्ययार्थविशेषणेषु ठञ्प्रत्ययो भवति । वसिष्ठग्रन्थे भवस्तस्य व्याख्यानः अध्यायो वा वासिष्ठिकः । वैश्वामित्रिकः । अध्यायेष्विति किम् । वासिष्ठे ग्रन्थे भवा ऋक् वासिष्ठी । वैश्वामित्री ॥

पौरोडाशपुरोडाशात् ष्ठन् ॥ १८३ ॥

---

१. 'शाङ्गन्' क. पाठः.

पौरोडाशपुरोडाशशब्दाभ्यां भवव्याख्यानयोरर्थयोः ष्ठन्प्रत्ययो भवति । पुरोडाशाः पिष्टपिण्डाः तेषां संस्कारको मन्त्रः पौरोडाशस्तत्र भवस्तस्य व्याख्यानो वा पौरोडाशिकः । अतो ङी(प् ? ष्) । पौरोडाशिकी । पुरोडाशसहचरितो (मन्त्रः ? ग्रन्थः)पुरोडाशस्तत्र भवस्तस्य व्याख्यानो वा पुरोडाशिकः । पुरोडाशिकी ॥

छन्दसो यदणौ ॥ १८४ ॥

छन्दश्शब्दाद् भवव्याख्यानयोरर्थयोर्यदण्प्रत्ययौ भवतः । 'द्व्यच' इति ठकि प्राप्ते वचनम् । छन्दसि भवश्छन्दसो व्याख्यानो वा छन्दस्यः । छान्दसः ॥

द्व्यजृद्गब्राह्मणप्रथमाध्वरपुरश्चरणनामाख्यातनामाख्यातेभ्यष्ठक् ॥ १८५ ॥

द्व्यचः ऋकारान्तेभ्यः ऋगादिभ्यश्च व्याख्यातव्यनामभ्यो भवव्याख्यानयोरर्थयोष्ठक्प्रत्ययो भवति । द्व्यचः— इष्टौ भवम् इष्टेर्व्याख्यानं वा ऐष्टिकम् । चतुर्षु होतृषु भवश्चतुर्णां होतॄणां व्याख्यानं वा चातुर्होतृकम् । ऋगादिभ्यः—आर्चिकम् । ब्राह्मणिकम् । प्राथमिकम् । आध्वरिकम् । पौरश्चरणिकम् । नामाख्यातिकम् । नामिकम् । आख्यातिकम् ॥

ऋगयनपदव्याख्यानोत्पातोत्पादपुनरुक्तनिरुक्तन्यायनिगमव्याकरणशिक्षोपनिषद्दृषिभ्योऽण् ॥ १८६ ॥

ऋगयनादिभ्यो व्याख्या(ताख्य ? तव्य)नामधेयेभ्यो भवव्याख्यानयोरर्थयोरण्प्रत्ययो भवति । ठञष्ठकश्छस्य चापवादः । आर्गयणः । पादव्याख्यानः । औत्पातः । औत्पादः । पौनरुक्तः । नैरुक्तः । नैयायः । नैगमः । वैयाकरणः । शैक्षः । औपनिषदः । आर्षः ॥

यज्ञचर्चाक्रमेतरश्लक्ष्णनिमित्तमुहूर्त्तसंवत्सरेभ्यश्च [॥ १८७ ॥

यज्ञादिभ्यश्च भवव्याख्यानयोरण्प्रत्ययो भवति । ठक्ठञोरपवादः । याज्ञः । चार्चः । क्रामेतरः । श्लाक्ष्णः । नैमित्तः । मौहूर्त्तः । सांवत्सरः ॥

क्षत्राङ्गत्रिवास्तुभ्यश्च विद्यायाः ॥ १८८ ॥

क्षत्रादिभ्यः परो यो विद्याशब्दस्तदन्ताद्विद्यायाश्च व्यख्यातव्य-नाम्नो भवव्याख्यानयोरर्थयोरण्प्रत्ययो भवति । क्षात्रविद्यः । आङ्गविद्यः । त्रैविद्यः । वास्तुविद्यः । वैद्यः । ठञ्ठको(र)पवादः ॥

छन्दसो मानभाषाविचितिविजितिभ्यः॥ १८९ ॥

छन्दसः परे ये मानादयस्तदन्तेभ्यो व्याख्येयनामभ्यो भवव्याख्या-नयोरणप्रत्ययो भवति । बह्वचोऽन्तोदात्तलक्षणस्य ठञोऽपवादः । छान्दो-मानः । छान्दोभाषः । छान्दोविचितिः । छान्दोविजितिः ॥

तत आगतः ॥ १९० ॥

तत इति पञ्चमीसमर्थात् आगत इत्यस्मिन्नर्थे यथाविहितमणादयो घादयश्च भवन्ति । स्रुघ्नादागतः स्रौघ्नः । माधुरः । औत्सः । गव्यः । क्रमूव्यः (?) । बाह्यः । आर्षेयः । कालेयः । स्त्रैणः । पौंस्नः । राष्ट्रियः । ग्रामीण इति । अथ स्रुघ्नादागच्छन् वृक्षमूलादागत इति वृक्षमूलात् कस्मान्न प्रत्ययो भवति । मुख्यमेवापादानं गृह्यते, न नान्तरीयकम् । यदाह— 'गौणमुख्य-योर्मुख्ये कार्यसम्प्रत्यय' इति ॥

आयस्थानेभ्यष्ठक् ॥ १९१ ॥

आय इति स्वामिग्राह्यो भाग उच्यते । स यस्मिन्नुत्पद्यते तदाय-स्थानम् । आयस्थानवाचिभ्यः शब्देभ्यस्तत आगत इत्यस्मिन्नर्थे ठक्प्रत्ययो भवत्यणोऽपवादः । छं तु परत्वाद् बाधते । शुल्कशालाया(मा ? आ)गतं शौल्कशालिकम् । आकारिकम् । आपणिकम् ॥

शुण्डिकाकृकणस्थण्डिलोदपानोलपतीर्थभूमितृण-पर्णेभ्योऽण् ॥ १९२ ॥

शुण्डिकादिभ्यस्तत आगत इत्यर्थेऽण्प्रत्ययो भवति । आयस्थान-ठकोऽपवादः । शुण्डिकाया आगतः शौण्डिकः । कार्कणः । स्थाण्डिलः । औदपा(द ? न)ः । औलपः । तैर्थः । भौमः । तार्णः । पार्णः ॥

विद्यायोनिसम्बन्धेभ्यो वुञ् ॥ १९३ ॥

विद्याकृतो योनिकृतश्च सम्बन्धो येषां तद्वाचिभ्यस्तत आगत इत्यस्मिन्नर्थे वुञ्प्रत्ययो भवति । अणोऽपवादः । छं तु परत्वाद् बाधते । विद्यासम्बन्धेभ्यः — उपाध्यायादागतमौपाध्यायकम् । शैष्यकम् । आन्तेवासकम् । योनिसम्बन्धेभ्यः— पैतामहकम् । मातामहकम् । पैतृव्यकम् । मातुलकम् ॥

ऋतष्ठञ् ॥ १९४ ॥

ऋकारान्तेभ्यो विद्यायोनिसम्बन्धवाचिभ्यस्तत आगत इत्येतस्मिन्नर्थे ठञ्प्रत्ययो भवत्यणोऽपवादः । विद्यासम्बन्धिभ्यः — होतुरागतं हौतृकम् । पौतृकम् । योनिसम्बन्धेभ्यः — मातृकम् । भ्रातृकम् ॥

पित्र्यं वा ॥ १९५ ॥

पितृशब्दात् तत आगत इत्यस्मिन्नर्थे वाण्प्रत्ययः । ऋकारस्य च रेफादेशो निपात्यते । पितुरागतं पित्र्यं पैतृकम् ॥

नृहेतुभ्यो रूप्यः ॥ १९६ ॥

मनुष्यवाचिभ्यो हेतुवाचिभ्यश्च तत आगत इत्येतस्मिन्नर्थे रूप्यप्रत्ययो वा भवति । नृग्रहणमहेत्वर्थम् । हेतुः कारणम् । मनुष्यवाचिभ्यस्तावत् — देवदत्तरूप्यं दैवदत्तम् । हेतुभ्यः— समादागतं स(म)रूप्यम् । विषमरूप्यम् । समयिम् । गर्हादित्वाच्छः ॥

मयट् च ॥ १९७ ॥

नृहेतुभ्यस्तत आगत इत्यर्थे मयट्प्रत्ययो भवति । देवदत्तमयम् । यज्ञदत्तमयम् । सममयम् । विषममयम् । टकारो ङीबर्थः । सममयी । योगविभागो यथासंख्यनिरासार्थः ॥

गोत्रादङ्कवत् ॥ १९८ ॥

गोत्रशब्देनापत्यप्रत्ययान्तमुच्यते । तस्मात् तत आगत इत्येतस्मिन्नर्थे अङ्क इव प्रत्ययविधिर्भवति । औपगवानामयमङ्कः औपगवकः ।

कापटवकः। औपगवेभ्य आगतमौपगवकम्। विदानामयमङ्कः वैदः। विदेभ्य आगतं वैदम्। एवं गार्गः गार्गम्। दाक्षीणामङ्कः दाक्षः। दाक्षिभ्य आगतं दाक्षम्। शाकल्येन प्रोक्तमधीयते शाकलाः। तेषामङ्कः शाकलः। शाकलेभ्य आगतं शाकलं शाकलकम्। अङ्कग्रहणेन तस्येदमित्यर्थसामान्यं लक्ष्यते, न वुञप्यतिदिश्यते। अन्यथा 'सङ्घाङ्कघोषलक्षणेष्वञ्यञिञः' इति अण एवातिदेशः स्यात्॥

प्रभवति॥ १९९॥

तत इत्येव। तत इति पञ्चमीसमर्थात् प्रभवतीत्यस्मिन्नर्थे यथाविहितमणादयो घादयश्च भवन्ति। हिमवतः प्रभवति हैमवती गङ्गा। (शा? दा)रदी सिन्धुः॥

वालवायाद् ञ्यो विदूरं चास्य॥ २००॥

वालवायशब्दात् ततः प्रभवतीत्यस्मिन्नर्थे ञ्यप्रत्ययः विदूरादेशो वालवायस्य च भवति। वालवायात् प्रभवति वैडूर्यः मणिः। स हि वालवायात् पर्वतात् प्रभवति। विडूराख्याते ग्रामे संस्क्रियते। केचित्तु सामीप्यात् विदूरशब्दं वालवाय उपचर्यास्मादेव ञ्यप्रत्ययमुत्पादयन्ति॥

तद्गच्छति पथिदूतयोः॥ २०१॥

तद् इति द्वितीयान्ताद् गच्छतीत्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। योऽसौ गच्छति पन्थाश्चेत् स भवति दूतो वा। स्रुघ्नं गच्छति स्रौघ्नः पन्थाः। स्रौघ्नो दूतः। माथुरः। राष्ट्रियः। तत्स्थेषु गच्छत्सु पन्था अपि गच्छतीत्युच्यते। स्रुघ्नादिप्राप्तिर्वा पथो गमनम्। पथिदूतयोरिति किम्। स्रुघ्नं गच्छति देवदत्तः॥

अभिनिष्क्रामति द्वारम्॥ २०२॥

तदिति द्वितीयासमर्थादभिनिष्क्रामतीत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। यत्तदभिनिष्क्रामति द्वारं चेत् तद् भवति। आभिमुख्येन निष्क्रामति अभिनिष्क्रामति। स्रुघ्नमभिनिष्क्रामति कान्यकुब्जद्वारं स्रौघ्नम्। माथुरम्। राष्ट्रियम्। द्वारमभिनिष्क्रमणक्रियायां करणत्वेन प्रसिद्धम्।

तस्योपचारेणेह स्वातन्त्र्यविवक्षा भवति । द्वारमिति किम् । स्रुघ्नमभिनिष्क्रामति पुरुषः ॥

अधिकृत्य कृते ग्रन्थे ॥ २०३ ॥

तादित्येव । अधिकृत्येति तदपेक्षा द्वितीया । तदिति द्वितीयासमर्थाद् अधिकृत्य कृत इत्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । यत् तत् कृतं ग्रन्थश्चेत् स भवति । सुभद्रामधिकृत्य कृतो ग्रन्थस्सौभद्रः । गौरीमित्रः । यायातः । ग्रन्थ इति किम् । सुभद्रामधिकृत्य कृतः प्रासादः ॥

शिशुक्रन्दयमसभेन्द्रजननप्रद्युम्नागमनसीतान्वेषणादिभ्यश्छः ॥ २०४ ॥

शिशुक्रन्दादिभ्यो द्वितीयान्तेभ्योऽधिकृत्य कृते ग्रन्थ इत्यस्मिन्नर्थे छप्रत्ययो भवति । शिशुक्रन्दमधिकृत्य कृतो ग्रन्थः शिशुक्रन्दीयः । यमसभीयः । इन्द्रजननीयः । प्रद्युम्नागमनीयः । सीतान्वेषणीयः । आदिग्रहणाद् यथादर्शनमन्येभ्योऽपि ॥

द्वन्द्वाददेवासुररक्षोसुरगौणमुख्यादेः ॥ २०५ ॥

.... .... .... .... .... ....

न भवति ॥

लुबाख्यायिकासु बहुलम् ॥ २०६ ॥

तदिति द्वितीयासमर्थादधिकृत्य कृतो ग्रन्थ इत्येतस्मिन्नर्थे आख्यायिकास्वभिधेयासूत्पन्नस्य प्रत्ययस्य बहुलं लुब् भवति । वासवदत्तामधिकृत्य कृताख्यायिका वासवदत्ता । सुमनोत्तरा । उर्वशी । न च भवति । भैमरथी । बहुलवचनादनाख्यायिकायामपि लुब् भवति । जानकीहरणम् । कुमारसम्भवं काव्यमिति ॥

सोऽस्य निवासः ॥ २०७ ॥

स इति प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्यया भवन्ति । यत् तत् प्रथमासमर्थं निवासश्चेत् तद् भवति । निवसन्त्यस्मिन्निति निवासो देश उच्यते । स्रुघ्नो निवासोऽस्य स्रौघ्नः । माथुरः । राष्ट्रियः ॥

अभिजनश्च ॥ २०८ ॥

स इति प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति । यत् तत् प्रथमासमर्थमभिजनश्चेत् तद् भवति । स्रुघ्नोऽभि(धा ? ज)नोऽस्य स्रौघ्नः । माथुरः । राष्ट्रियः । कः पुनर्निवासाभिजनयोर्विशेषः । यत्र पूर्वैरुषितः सोऽभिजनः । यत्र सम्प्रत्युष्यते स निवासः । योगविभाग उत्तरार्थः ॥

गिरिभ्यः शस्त्रजीविषु छः ॥ २०९ ॥

स इति प्रथमासमर्थेभ्यो गिरिवाचिभ्योऽस्येति षष्ठ्यर्थे आयुधजीविष्वभिधेयेषु छप्रत्ययो भवति । यत् तत् प्रथमासमर्थमभिजनश्चेत् स भवति । हृद्गोलः पर्वतोऽभिजनो येषां हृद्गोलीया आयुधजीविनः । भोजकटीयाः । रोहितगिरीयाः । गिरिभ्य इति किम् । साङ्काश्यकाः शस्त्रजीविनः । शस्त्रजीविष्विति किम् । ऋक्षोदः पर्वतोऽभिजनो येषां ब्राह्मणानाम् आर्क्षोदाः ॥

सलातुराच्छण् ॥ २१० ॥

सलातुरात् सोऽस्याभिजन इत्यर्थे छण्प्रत्ययो भवति । सलातुरः अभिजनोऽस्य सालातुरीयः पाणिनिः ॥

शण्डिकश[1]ङ्कसटशकसर्वकेशसर्वसेनर[2]हबोधकु[3]चवारेभ्यो ञ्यः ॥ २११ ॥

शैण्डिकादिभ्यः सोऽस्याभिजन इत्यस्मिन्नर्थे ञ्यप्रत्ययो भवति । शाण्डिक्यः । शाङ्क्यः । साट्यः । शाक्यः । सार्वकेश्यः । सार्वसेन्यः । राह्यः । बौध्यः । कौचवार्यः ॥

सिन्धुगान्धारिकश्मीरमधुमत्किष्किन्धोरसासा[5]ल्ववर्णु[6]गाँब्दिकदरत्कम्बोजेभ्योऽण् ॥ २१२ ॥

---

१. 'शकन्धसर्व' ख. ग. पाठः. २. 'हरबो' ग. पाठः. ३. 'क' क. ख. पाठः. ४. 'च' क. पाठः. ५. 'रसाल्व' ख. ग. पाठः. ६. 'र्ण' क. ख. पाठः. ७. 'श' ख. पाठः.

सिन्ध्वादिभ्यः सोऽस्याभिजन इत्यर्थेऽण्प्रत्ययो भवति । सैन्धवः । गान्धारः । काश्मीरः । माधुमतः । कैष्किन्धः । औरसः । साल्वः । वार्णवः । गाब्दिकः । दारतः । काम्बोजः । येऽत्र कच्छादिषु पठ्यन्ते तेषां तत एवाणि सिद्धे मनुष्यलक्षणस्यान्येषां जनपदलक्षणस्य वुञो बाधनार्थं वचनम् ॥

तक्षशिलाछगलग्रामणीवत्सोद्धरणकाण्डधारकैर्मेदुर-किन्नरबर्बरावसानकंससङ्कुचितेभ्योऽञ् ॥ २१३ ॥

तक्षशिलादिभ्यः सोऽस्याभिजन इत्यस्मिन्नर्थेऽञ्प्रत्ययो भवति । ताक्षशिलः । छागलः[1] । ग्रा(मि ? म)णः । (वात्सोद्धरणः)काण्डधारः । कैर्मेदुरः । कै(न्द ? न्न)रः । बार्बरः । आवसानः । कांसः । साङ्कुचितः । अवृद्धेभ्यः शेषेऽणि, वाहीकग्रामेभ्यस्तु ठञ्ञिठयोः प्राप्तयोर्वचनम् ॥

सिंहक्रोष्टुभ्यां[2] कर्णकात् ॥ २१४ ॥

सिंह क्रोष्टु इत्येताभ्यां परो यः कर्ण(क)शब्दस्तदन्तात् सोऽस्याभिजन इत्यस्मिन्नर्थे अञ्प्रत्ययो भवति । सैंहकर्णकः । क्रौष्टुकर्णकः ॥

तूदीवर्मतीभ्यां ढञ् ॥ २१५ ॥

तूदीवर्मतीभ्यां सोऽस्याभिजन इत्यस्मिन्नर्थे ढञ्प्रत्ययो भवति । तौदेयः । वार्मतेयः ॥

भक्तिः ॥ २१६ ॥

सोऽस्येति वर्तते इति प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति । यत् तत् प्रथमासमर्थं भक्तिश्चेत् स भवति । भज्यते सेव्यते इति भक्तिः । स्रुघ्नो भक्तिरस्य स्रौघ्नः । माथुरः । राष्ट्रियः । ग्रामीणः ॥

महाराजाट्ठक् ॥ २१७ ॥

महाराजशब्दात् सोऽस्य भक्तिरित्यर्थे ठक्प्रत्ययो भवति । महाराजो भक्तिरस्य माहाराजिकः ॥

अचित्तादेशकालात् ॥ २१८ ॥

1. 'क्षागुलः' २. 'ष्टुकाभ्यां' क. पाठः.

अदेशकालाद् देशकालवर्जितादचेतनात् सोऽस्य भक्तिरित्यस्मिन्नर्थे ठक्प्रत्ययो भवति । अणोऽपवादः । वृद्धाच्छं परत्वाद् बाधते । अपूपा भक्तिरस्य आपूपिकः । शाष्कुलिकः । अचित्तादिति किम् । दैवदत्तः । अदेशकालादिति किम् । स्रौघ्नः । हैमनः ॥

वासुदेवार्जुनाभ्यां वुन् ॥ २१९ ॥

आभ्यां सोऽस्य भक्तिरित्यस्मिन्नर्थे वुन्प्रत्ययो भवति । वासुदेवकः । अर्जुनकः ॥

गोत्राद् बहुलं वुञ् ॥ २२० ॥

गोत्रे यो विहितस्तदन्तात् सोऽस्य भक्तिरित्यर्थे बहुलं वुञ्प्रत्ययो भवति । अणोऽपवादः । वृद्धाच्छं परत्वाद् बाधते । औपगवकः । कापटवकः । दाक्षकः । बहुलमिति किम् । पाणिनीयः ॥

क्षत्रियात् ॥ २२१ ॥

क्षत्रियवाचिनः सोऽस्य भक्तिरित्यर्थे बहुलं वुञ्प्रत्ययो भवति । नाकुलकः । साहदेवकः । बहुलमिति किम् । पौरवीयः ॥

जनपदवत् सर्वं तत्सरूपाद् बहुत्वे ॥ २२२ ॥

बहुत्वे जनपदसमानरूपक्षत्रियवाचिनः सोऽस्य भक्तिरित्यस्मिन्नर्थे जनपदवत् सर्वं भवति । अङ्गा जनपदो भक्तिरस्य आङ्गकः । वाङ्गकः । तद्वदङ्गाः क्षत्रिया भक्तिरस्य आङ्गकः । वाङ्गकः । सर्वमिति किम् । प्रकृतिरपि जनपदवद् यथा स्यात् । माद्रो वा अन्यो वा भक्तिरस्य मद्रकः । वृजिकः । तत्सरूपादिति किम् । अनुषण्डो जनपदः, पौरवो राजा, स भक्तिरस्य पौरवीयः । बहुत्व इति किम् । एकत्वद्वित्वयोरसारूप्यादपि यथा स्यात् । आङ्गकः आङ्गो वा भक्तिरस्याङ्गकः । क्षत्रियादित्येव । पाञ्चाला ब्राह्मणा भक्तिरस्य पाञ्चालः ॥

तेन प्रोक्तम् ॥ २२३ ॥

प्रकर्षेण व्याख्यातमध्यापितं वा प्रोक्तं नतु कृतमेव । 'कृते ग्रन्थ' इति गतत्वात् । तेनेति तृतीयासमर्थात् प्रोक्तमित्येतस्मिन्नर्थे यथाविहितमणादयो भवन्ति । उशनसा प्रोक्तमौशनसम् । बार्हस्पतम् । पाणिनीयम् । आपिशलम् । श्लोकशास्त्राद्यभिधीयते । वेदे तूत्तरसूत्रेणाध्येतृवेदित्रोरेव प्रत्ययो भवति ॥

छण्णिथित्सु (?) शौनकादिभ्यः ॥ २२४ ॥

मधुरादिभ्योऽण् ॥ २२५ ॥

प्राक्कल्पान्तेभ्यः ॥ २२६ ॥

वेदं वेत्त्यधीते ॥ २२७ ॥

तेन प्रोक्तमिति वर्तते । तृतीयासमर्थात् प्रोक्तं वेदं वेत्त्यधीते इत्येतयोर्यथाविहितमणादयो भवन्ति । पिप्पलादेन प्रोक्तं वेदं विदन्त्यधीयते वा पैप्पलादाः । मौदाः । मैत्रायणादीयाः । पारायणीयाः । वेदमिति किम् । पिप्पलादेन प्रोक्तं श्लोकं विदन्त्यधीयते वेति वाक्यमेव भवति ॥

तित्तिरिवरतन्तुखण्डिकोखाच्छण् ॥ २२८ ॥

तित्तिरिप्रभृतिभ्यस्तेन प्रोक्तं वेदं विदन्त्यधीयते इत्येतयोरर्थयोश्छण्प्रत्ययो भवति । तित्तिरिणा प्रोक्तं वेदं विदन्त्यधीयते वा तैत्तिरीयाः । वारतन्तवीयाः । खाण्डिकीयाः । औखीयाः । वेदमित्येव । तित्तिरिणा प्रोक्तं श्लोकं विदन्त्यधीयते वेति वाक्यमेव ॥

काश्यपकौशिकाभ्यामृषिभ्यां कल्पं च णिनिः ॥ २२९ ॥

तेन प्रोक्तं वेदं कल्पं वा विदन्त्यधीयते इत्यर्थयोर्णिनिप्रत्ययो भवति । काश्यपेन प्रोक्तं कल्पमधीयते काश्यपिनः । कौशिकिनः । ऋषिभ्यामिति किम् । इदानीन्तनेन गोत्रकाश्यपेन प्रोक्तः कल्पः काश्यपीयः । कल्पं चेति किम् । काश्यपीया पुराणसंहिता ॥

शौनकसाङ्गरवसापेयशाष्पेयवाजसनेयखाडायनककषायतलस्तम्भस्कन्धदेवदर्शरज्जुकण्ठकठशठेभ्यः ॥ २३० ॥

शौनकादिभ्यस्तेन प्रोक्तं वेदं विदन्त्यधीयते इत्यर्थयोर्णिनिप्रत्ययो भवति । शौनकिनः । साङ्गरविणः । सापेयिनः । शाष्पेयिनः । वाजसनेयिनः । खाडायनिनः । एतेभ्यश्छे प्राप्ते । काषायिणः । तालिनः । स्ताम्भिनः । स्कान्धिनः । दैवदर्शिनः । राज्जुकण्ठिनः । (काण्ठिनः ?) काठशठिनः । एभ्योऽणि प्राप्ते वचनम् ॥

---

१. 'भ्यां तेन' क. पाठः.

हरिद्रु[1]तुम्बुरूलपालम्बिपलिङ्गकमलश्यामायनर्चाभता[2]ण्ड्यरुणिभ्यः ॥ २३१ ॥

हरिद्रुप्रभृतिभ्यस्तेन प्रोक्तं वेदं विदन्त्यधीयत इत्यनयोरर्थयोर्णिनिप्रत्ययो भवति । छाणोरपवादः । हारिद्रविणः । तौम्पुरविणः । औलपिनः । आलम्बिनः । पालिङ्गिनः । कामलिनः । श्यामायनिनः । आर्चाभिनः । ताण्डिनः । आरु(ण्यानि ? णि)नः ॥

कठचरकाल्लुक् ॥ २३२ ॥

कठ चरक इत्येताभ्यां तेन प्रोक्तं वेदं विदन्त्यधीयत इत्यनयोरर्थयोरुत्पन्नस्य णिनेरणो वा लुग् भवति । कठेन प्रोक्तं वेदं विदन्त्यधीयते वा कठाः । चरकाः ॥

कलापिनोऽण् ॥ २३३ ॥

कलापिन्शब्दात् तेन प्रोक्तं वेदं विदन्त्यधीयत इत्यनयोरर्थयोरण्प्रत्ययो भवति । कलापिना प्रोक्तं वेदं विदन्त्यधीयते वा कालापाः । सामान्येनाणि सिद्धे पुनर्वचनं 'पुरा(णार्थे ? णे) ब्राह्मणमि'त्यनेन णिनिर्मा भूदिति । मन्त्रब्राह्मणयोर्हि वेदं समामनन्ति ॥

छगलिनो ढिनुक् ॥ २३४ ॥

छगलिन्शब्दात् तेन प्रोक्तं वेदं विदन्त्यधीयते इत्येतयोरर्थयोर्ढिनुक्प्रत्ययो भवति । छगलिना प्रोक्तं वेदं विदन्त्यधीयते वा छागलेयिनः ॥

कर्मन्दकृशाश्वाभ्यां भिक्षुनटसूत्रमिनिः ॥ २३५ ॥

कर्मन्द कृशाश्व इत्येताभ्यां तेन प्रोक्तं भिक्षुसूत्रं नटसूत्रं च विदन्त्यधीयते वा इत्यर्थयो(र्णि ? रि)निप्रत्ययो भवति । कर्मन्देन प्रोक्तं भिक्षुसूत्रं विदन्त्यधीयते वा कर्मन्दिनः भिक्षवः । कृशाश्विनो नटाः । वेदाध्ययनयोः प्रत्येकं सम्बन्धप्रसिद्धेर्यथासङ्ख्यं न भवति ॥

पाराशर्यशिलालिभ्यां णिनिः ॥ २३६ ॥

---

१. 'द्र' क. ख. पाठः २. 'हरणता' ख., 'हणता' ग. पाठः.

पाराशर्य शिलालि इत्येताभ्यां तेन प्रोक्तं भिक्षुसूत्रं (नटसूत्रं च) विदन्त्यधीयते वेत्त्यनयोरर्थयोर्णिनिप्रत्ययो भवति । पाराशर्येण प्रोक्तं भिक्षुसूत्रं विदन्त्यधीयते वा पाराशरिणो भिक्षवः । शिलालिना प्रोक्तं नटसूत्रं विदन्त्यधीयते वा शैलालिनो नटाः ॥

पुराणर्षेर्ब्राह्मणम् ॥ २३७ ॥

पुराण(र्षि)वाचिनस्तेन प्रोक्तं ब्राह्मणं वेत्त्यधीते वेत्येतयोरर्थयोर्णिनिप्रत्ययो भवति । शाट्यायनेन प्रोक्तं ब्राह्मणं विदन्त्यधीयते वा शाट्यायनिनः । ऐतरेयिणः । भाल्लविनः । पुराणग्रहणं किम् । याज्ञवल्क्येन प्रोक्तानि ब्राह्मणानि याज्ञवल्क्यानि । शकलादिपाठात् अण् ॥

कल्पे ॥ २३८ ॥

योगविभागाद् वेत्त्यधीते इति निवृत्तम् । तेन प्रोक्तमिति वर्तते । पुराणर्षिवाचिभ्यस्तेन प्रोक्तमित्येतस्मिन्नर्थे कल्पेऽभिधेये णिनिप्रत्ययो भवति । पिङ्गेन प्रोक्तः पैङ्गी कल्पः । आरुणपराजी । येऽपि पैङ्गिनं कल्पं विदन्त्यधीयते वा तेऽपि पैङ्गिनः । आरुणपराजिनः । प्रोक्ताल्लुगुक्त एव । पुराणर्षेरिति किम् । आश्मरथः कल्पः ॥

अथर्वणोऽण् वेदे ॥ २३९ ॥

अथर्वणस्तेन प्रोक्तमित्येतस्मिन्नर्थे वेदेऽभिधेयेऽण्प्रत्ययो भवति । अथर्वणा प्रोक्तम् आथर्वणो वेदः ॥

लुक् च वा ॥ २४० ॥

अथर्व(ण्?ञ्)शब्दात् तेन प्रोक्तमित्यर्थे वेदेऽभिधेयेऽण्प्रत्ययस्य लुक् च वा भवति । अथर्वणा प्रोक्तो वेदः अथर्वा । वाग्रहणमुत्तरार्थम् ॥

वसिष्ठादिभ्योऽनुवाकादिषु ॥ २४१ ॥

वसिष्ठादिभ्यस्तेन प्रोक्तमित्यस्मिन्नर्थे अनुवाकादिष्वभिधेयेषूत्पन्नस्याणादेर्लुग् (वा) भवति । वसिष्ठेन प्रोक्तोऽनुवाकोऽध्यायो वा वसिष्ठः वासिष्ठः । विश्वामित्रः वैश्वामित्रः ॥

तेनैकदिक् ॥ २४२ ॥

तेनेति सहार्थतृतीयान्तेन तुल्यदिगित्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। सूर्येणैकदिक् सौरी बलाका। सुदाम्ना तुल्यदिक् सौदामनी विद्युत्। हिमवता समानदिक् हैमवती गङ्गा त्रिककुदा एकदिक् त्रैककुदी लङ्का ॥

तसिश्च ॥ २४३ ॥

तेनेति सहार्थतृतीयान्तेन तुल्यदिगित्यस्मिन्नर्थे तासिश्च प्रत्ययो भवति। सुदाम्ना तुल्यदिक् सुदामतः। हिमवत्तः। त्रिककुत्तः। मुखतः। पार्श्वतः। पृष्ठतः ॥

उरसो यच्च ॥ २४४ ॥

उरश्शब्दात् तेनैकदिगित्येतस्मिन्नर्थे यत्प्रत्ययो भवति, चकारात् तासिश्च। उरसा एकदिक् उरस्यः उरस्तः ॥

उपज्ञाते ॥ २४५ ॥

तेनेति तृतीयार्थे समर्थादुपज्ञातेऽर्थे यथाविहितं प्रत्ययो भवति। विनोपदेशेन ज्ञातमुपज्ञातं, स्वयमभिसम्बुद्धमित्यर्थः। पाणिनिना उपज्ञातं पाणिनीयमकालकं व्याकरणम्। चान्द्र(मस?)संज्ञकं व्याकरणम्। काशकृत्स्नम्। गुरुलाघवम्। आपिशलम्। आन्तःकरणम् ॥

कृते ग्रन्थे ॥ २४६ ॥

तेनेति तृतीयासमर्थात् कृतमित्येतस्मिन्नर्थे यथाविहितमणादयो भवन्ति। शिवेन प्रोक्तो ग्रन्थः शैवः। इष्टकाभिः कृतः प्रासादः ऐष्टकः। (पासादः ?) नारदेन कृतं गीतं नारदीयम्। मनसा कृता मानसी कथा इति। तक्ष्णा कृतः प्रासाद इत्यादावनभिधानान्न भवति ॥

संज्ञायां मक्षिकासरघागेमुत्[1]पुत्तिकादिभ्यः ॥ २४७ ॥

मक्षिकादिभ्यस्तेन कृतमित्यर्थे संज्ञायां यथाविहितं .... ....

.... ... .... .... .... .... ....

... .... ... .... .... ... ....

.... .... ... .... .... .... ....

1 'हम्मुत्' क. ख पाठः.

क्षुद्राभ्रमरवटरपा(त्र ? द)पादञ् ॥ २४८ ॥

... ... ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ...
... ... ... ... ... ... ...त्रातपीयः (?) ॥

पुरुषाड्ढञ् ॥ २४९ ॥

पुरुषशब्दात् तेन कृतमित्यर्थे ढञ्प्रत्ययो भवति । पुरुषेण कृतं पौरुषेयम् ॥

कुलालकुम्भकारकर्मारवरुडनिषादचण्डालश्वपाकानडुद्ब्राह्मणपरिषद्देवराजकुरुसेनासैरन्ध्रीबन्धुभ्यो वुञ् ॥ २५० ॥

कुलालादिभ्यस्तेन कृतमित्यस्मिन्नर्थे संज्ञायां वुञ्प्रत्ययो भवति । कुलालेन कृतं कौलालकम् । कौम्भकारकम् । कार्मारकम् । वारुडकम् । नैषादकम् । चाण्डालकम् । शौपाककम् । आनडुहकम् । ब्राह्मणकम् । पारिषदकम् । दैवराजकम् । कौरवकम् । सैन कम् । सैरन्ध्रिकम्[1] । बान्धवकम् । संज्ञाग्रहणानुवृत्तेर्घटशरावोदञ्चनाद्येव । कौलालकं घटादि । वारुडकं शूर्पादि । एवमन्यत्राप्यभिधेयनियमो भवति ॥

तस्येदम् ॥ २५१ ॥

तस्येति षष्ठीसमर्थादिदमित्येतस्मिन्नर्थे यथाविहितमणादयो घादयश्च भवन्ति । उपगोरिदमौपगवम् । बार्हस्पत्यम् । प्राजापत्यम् । औत्सम् । औद(प ? पा)नम् । दैवम् । गव्यम् । आग्नेयम् । कालेयम् । त्रैणम् । पौंस्नम् । राष्ट्रियम् । ग्राम्यमिति । (प्रकृतिप्रत्ययार्थयोः) षष्ठ्यर्थमात्रं तत्सम्बन्धमात्रं च विवक्षितम् । यदन्यत् लिङ्गसङ्ख्याप्रत्यक्षपरोक्षादिकं तत् सर्वमविवक्षितम् । देवदत्तस्यानन्तरमित्यादावनभिधानात् प्रत्ययो (न) भवति ॥

रथाद् वोढरि यत् ॥ २५२ ॥

रथशब्दात् षष्ठ्यन्तात् तस्येदमित्यर्थे यत्प्रत्ययो भवति । यत् तदिदमा व्यपदेश्यं वोढा चेत् स भवति । रथस्य वोढा रथ्योऽश्वः ॥

---

१. 'न्ध्रीव' ख. ग. पाठः.

सपूर्वाच्च ॥ २५३ ॥

सपूर्वाद् रथशब्दात् तस्य वोढेत्येतास्मिन्नर्थे यत्प्रत्ययो भवति। द्वयो रथयोर्वोढा द्विरथ्यः। त्रिरथ्यः। द्विगोरप्यनजादित्वान्न लुक्। 'प्रातिपदिकेने'ति तदन्तविधिप्रतिषेधात् सपूर्वान्न प्राप्नोतीति वचनम् ॥

अङ्गे च ॥ २५४ ॥

रथशब्दात् षष्ठयन्तात् केवलात् सपूर्वाच्च तस्येदमित्यर्थे यत्प्रत्ययो भवति। रथस्येदं रथ्यं चक्रं युगम्। परमरथ्यम् ॥

पत्रादेरञ् ॥ २५५ ॥

पत्रपूर्वाद् रथशब्दात् तस्येदमित्यर्थेऽञ्प्रत्ययो भवति। पत्रं वाहनम्। अश्वयुक्तो रथः। तस्येदमाश्वरथम्। परत्वाच्छमपि बाधते। रासभरथम् ॥

पत्राद् वाह्ये ॥ २५६ ॥

पत्रवाचिनस्तस्येदमित्यर्थे वाह्येऽभिधेयेऽञ्प्रत्ययो भवति। अश्वानामयं वहनयिः आश्वो रथः। रासभः। वाह्य इति किम्। अश्वानामिदं शृङ्खलमाश्वं रासभमित्यणेव भवति ॥

अध्वर्युपरिषद्भ्यां च ॥ २५७ ॥

आभ्यां च तस्येदमित्यर्थेऽञ्प्रत्ययो भवति। अणोऽपवादः। अध्वर्योरिदमाध्वर्यवम्। पारिषदम् ॥

हलसीराट्ठक् ॥ २५८ ॥

हलसीराभ्यां तस्येदमित्यर्थे ठक्प्रत्ययो भवति। अणोऽपवादः। हलस्येदं हालिकम्। सैरिकम् ॥

द्वन्द्वाद् वैरे वुञ्देवासुरादिभ्यः ॥ २५९ ॥

द्वन्द्व(शब्दा? संज्ञका)त् प्रातिपदिकात् देवासुरादिवर्जितात् तस्येदमित्यर्थे वैरेऽभिधेये वुन्प्रत्ययो भवति। बाभ्रवसालङ्कायनानामिदं वैरं बाभ्रवसालङ्कायनिका। काकोलूकस्येदं वैरं काकोलूकिका। एवमाहिनकुलिका श्वसृगालिका। स्वभावतः स्त्रीलिङ्गाः। अणोऽयमपवादः। छं तु परत्वाद् बाधते। अदेवासुरादिभ्य इति किम्। दैवासुरं राक्षोसुरम् ॥

विवाहे ॥ २६० ॥

द्वन्द्वसंज्ञकात् प्रातिपदिकात् तस्येदमित्यर्थे वु(ञ्? न्)प्रत्ययो भवति विवाहेऽभिधेये । अत्रिभरद्वाजानां विवाहः अत्रिभरद्वाजिका । वसिष्ठकाश्यपिका । भृग्वाङ्गिरसिका । वत्सकुशिकिका । गर्गभार्गविका ॥

नटाञ्ञ्यो नृत्ते[1] ॥ १७६ ॥

नटशब्दाद् नृत्तेऽभिधेये ञ्यप्रत्ययो भवति । नटानां नृत्तं नाट्यम् । नृत्त इति किम् । नटानामिदं गृहम् ॥

छन्दोगौक्थिकयाज्ञिकबह्वृचेभ्यो धर्माम्नायसङ्घेषु ॥ २६२ ॥

छन्दोगादिभ्यस्तस्येदमित्यर्थे धर्मादिष्वभिधेयेषु ञ्यप्रत्ययो भवति। छन्दोगानां धर्म आम्नायः सङ्घो वा छान्दोग्यम् । औक्थिक्यम् । याज्ञिक्यम् । बाह्वृच्यम् । धर्मादिष्विति किम् । छन्दोगानां गृहं छान्दोगम् ॥

आथर्वणिकादणिकलोपश्च ॥ २६३ ॥

आथर्वणिकशब्दात् तस्येदमित्यर्थे धर्मादिष्वभिधेयेषु अण् इकलोपश्चास्य (वा ?) भवति । अथर्वणा प्रोक्तो वेद आथर्वणस्तमधीते वेद वा आथर्वणिकः । वसन्तादित्वात् ठक् । अत एव निपातनाद् गणपाठसामर्थ्याद्वा प्रोक्ताल्लुग् (न) भवति । आथर्वणिकानां धर्म आम्नायस्सङ्घो वा आथर्वणः । चरणाद् वुञि प्राप्ते वचनम् ॥

चरणाद् वुञ्[2] ॥ २६४ ॥

चरणवाचिनस्तस्येदमित्यर्थे धर्मादिष्वभिधेयेषु वुञ्प्रत्ययो भवति। ग्लुचुकायनेरिदं ग्लौचुकायन(क)म् । औपगवकम् । नाडायनकम् । अणोऽयमपवादः । छं तु परत्वाद् बाधते । कठानामयं धर्म आम्नायस्सङ्घो वा काठकः । कालापकः । पैप्पलादकः । मौदकः ॥

गोत्राददण्डमाणवान्तेवासिषु ॥ २६५ ॥

---

१. 'त्ते ॥ धर्माम्नाययोरेवैके ॥ छ', २. 'ञ् ॥ धर्माम्नायसमूहेषु ॥ गो' ख. पाठः.

गोत्रे यो विहितस्तदन्तात् तस्येदमित्यर्थे दण्डमाणवान्तेवासिवर्जिते वुञ्प्रत्ययो भवति। ग्लुचुकायनेरिदं ग्लौचुकायन(क)म्। औपगवकम्। नाडायनकम्। अणोऽयमपवादः। छं तु परत्वाद् बाधते। अदण्डमाणवान्तेवासिष्विति किम्। दाक्षः दण्डः माणवः अन्तेवासी वा। इञो… लक्षणोऽणेव भवति॥

रैवतिक[1]श्वापिसिक्षैमवृद्धिगौरग्रीव्यौदमेध्यौदवापिबै[2]जवापिभ्यश्छः। २६६॥

रैवतिकादिभ्यस्तस्येदमित्यर्थे छप्रत्ययो भवति। गोत्रलक्षणस्य वुञोऽपवादः। रैवतिकस्यायं रैवतिकीयः। श्वापिसीयः। क्षैमवृद्धीयः। गौरग्रीवीयः। औदमेधीयः। औदवापीयः। बैजवापीयः॥

कौपिञ्जलहास्तिपदाभ्यामण्॥ २६७॥

आभ्यामण्प्रत्ययो भवति। कुपिञ्जलस्यापत्यं कौपिञ्जलः। हस्तिपादस्यापत्यं हास्ति(पा? प)दः। 'हस्तिनोऽपत्यानी'ति पादस्य पद्भावः। आभ्यां शिवाद्यणन्ताभ्यां गोत्रवाचिभ्यां तस्येदमित्यर्थे अण्प्रत्ययो भवति। वुञोऽपवादः। कौपिञ्जलः। हास्तिपदः॥

सङ्घाङ्कघोषलक्षणेष्वञ्यञिञः॥ २६८॥

अञन्ताद् यञन्तादिञन्ताच्च प्रातिपदिकात् तस्येदमित्यर्थे सङ्घाङ्कघोषलक्षणेषु प्रत्ययार्थेषु अण्प्रत्ययो भवति। बिदानामयं बैदस्सङ्घः अङ्कः घोषः। बैदं लक्षणम्। गर्गाणामयं गार्गस्सङ्घः अङ्कः घोषः। गार्गं लक्षणम्। दा(क्षि? क्षी)णामयं दाक्षः सङ्घः अङ्कः घोषः। दाक्षं लक्षणम्। सङ्घादिष्विति किम्। बिदानां गृहम्। गोत्रादित्येव। वातपीयः। अथाङ्कलक्षणयोः को विशेषः। लक्षणं लक्ष्यस्यैव चिह्नभूतं स्वं यथा विद्या बिदानाम्। अङ्कस्तु स्वामिविशेषज्ञापकः स्वस्तिकादिर्गवादिस्थः न गवादीनां स्वं भवति। अणो णित्करणं ङीबर्थं पुंवद्भावप्रतिषेधार्थं च। बैदी विद्या अस्य बैदीविद्यः॥

---

१. 'विश्ववसिक्षेम', २. 'पिणबै' ख. ग. पाठः.

शाकलाद्वा ॥ २६९ ॥

शाकलशब्दात् तस्येदमित्यर्थे सङ्घादिष्वभिधेयेष्वण्प्रत्ययो वा भवति । शाकलेन प्रोक्तं वेदमधीयते विदन्ति (वा) शाकलाः तेषां सङ्घः शाकलः । शाकलकः । एवमङ्कः घोषः । शाकलं लक्षणं शाकलकम् । पक्षे चरणलक्षणो वुञ् भवति ॥

वहेस्तुरिट् च ॥ २७० ॥

वहेः परो यस्तृच् तृन्वा तदन्तात् प्रातिपदिकात् तस्येदमित्यर्थे अण्प्रत्ययस्तस्य च वा इडागमो भवति । संवोढुरिदं सांवहित्रं सांवोढ्रम् ॥

शरणेऽग्नीधो रञ् धश्च ॥ २७१ ॥

अग्नीध ऋत्विग्विशेषात् तस्येदमित्यर्थे शरणेऽभिधेये (अ ? र)ञ्प्रत्ययो भवति धश्चान्तादेशः । अग्नीध इदं शरणमाग्नीध्रम् । जश्त्वं मा भूदिति तस्यैव धकारः क्रियते ॥

समिध आधाने षेण्यण् ॥ २७२ ॥

समिच्छब्दात् तस्येदमित्यर्थे आधानेऽभिधेये षेण्यण्प्रत्ययो भवति । समिध आधीयन्ते अनेन सामिधेन्यो मन्त्रः । सामिधेनी ऋक् । षकारो ङीषर्थः ॥

इति श्रीदण्डनाथनारायणभट्टसमुद्धृतायां सरस्वतीकण्ठाभरणस्य
व्याकरणस्य लघुवृत्तौ हृदयहारिण्यां
चतुर्थस्याध्यायस्य तृतीयः पादः ॥

---

## अथ चतुर्थः पादः ।

तस्य विकारः ॥ १ ॥

तस्येति षष्ठीसमर्थाद् विकार इत्येतस्मिन्नर्थे यथाविहितमणादयो भवन्ति । प्रकृतेरवस्थान्तरं विकारः । किमिहोदाहरणम् । अप्राण्याद्युदात्तमवृद्धं यस्य च नान्यत् प्रतिपदविधानमस्ति । (अश्मनो विकारः आ-

श्मनः, आश्मः)। 'अश्मनो विकार' इति पाक्षिकष्टिलोपः। भास्मनः। मार्त्तिकः। एते नित्स्वरेणाद्युदात्ताः। तस्येत्यनुवर्त्तमाने पुनस्तस्यग्रहणं शैषिकनिवृत्त्यर्थम्। हलस्य विकारः हालः। सीरस्य सैरः। हलसीराट्ठक्' इति ठञ् न भवति। वृजिनामवयवः वार्जः। मद्राणां माद्रः। 'वृजिमद्रात् कन्' इति कन् न भवति। एवं त्रैगर्त्तः राङ्कवः इत्यादौ (मञ्जुटा ?)दयो न भवन्ति ॥

अवयवश्च प्राण्योषधिवृक्षेभ्यः ॥ २ ॥

प्राण्यादिवाचिभ्यः प्रातिपदिकेभ्यस्तस्यावयवश्चशब्दात् तस्य विकार इति चैतयोरर्थयोर्यथाविहितमणादयो भवन्ति। तत्र प्राणिभ्योऽञं वक्ष्यति। ओषधीभ्यः — मौर्वं काण्डं मौर्वं भस्म। वृक्षेभ्यः — कारीरं काण्डं कारीरं भस्म। शैरीषं काण्डं शैरीषं भस्म। इत उत्तरे प्रत्ययाः प्राण्योषधिवृक्षेभ्यो विकारावयवयोः, अन्येभ्यस्तु विकारमात्रे भवन्ति ॥

बिल्वव्रीहिमुद्गमसूरगोधूमेक्षुवेणुकार्पासीपाटलिकुटीरकर्कन्धूभ्योऽण् ॥ ३ ॥

बिल्वादिभ्यः षष्ठ्यन्तेभ्यस्तस्य विकारस्तस्यावयव इत्यर्थयोरण्प्रत्ययो भवति। अनुदात्तलक्षणस्य चाञो वृद्धलक्षणस्य च मयटोऽपवादः। बिल्वस्य विकारः अवयवो वा बैल्वः। व्रैहः। मौद्गः। मासुरः। गौधूमः। ऐक्षवः। वैणवः। कार्पासः। पाटलः। कौटीरः। कार्कन्धवः ॥

पलाशखदिरविकङ्कतशिंशपास्यन्दनकरीरयवासपूलाशशिरीषेभ्योऽञ्च ॥ ४ ॥

पलाशादिभ्यः षष्ठ्यन्तेभ्यो विकारावयवार्थयोरञ्प्रत्ययश्चकारादण् च भवति। पलाशस्य विकारः अवयवो वा पालाशः। खादिरः। वैकङ्कतः। शैंशपः। स्यान्दनः। कारीरः। यावासः। (पा ? पौ)लाशः। शैरीषः। अञणोः स्वरे विशेषः ॥

कोपधादण् ॥ ५ ॥

ककारोपधात् तस्य विकारः अवयव इत्येतयोरर्थयोरण्प्रत्ययो भवति । अञोऽनन्तरस्यापवादः । माधूकः । तैत्तिडीकः । दार्दुरूकः । कार्कवम् । न्यङ्कु, नैयङ्कवम् ॥

उवर्णान्तानुदात्तादिप्राणिभ्योऽञ् ॥ ६ ॥

उवर्णान्तादनुदात्तादेः प्राणिवाचिनश्च षष्ठ्यन्तात् तस्य विकारोऽवयव इत्यर्थयोरञ्प्रत्ययो भवति । दैवदारवं काण्डम् । दैवदारवं भस्म । एवं भाद्रदारवम् । आरटवम् । कापित्थं काण्डम् । कापित्थं भस्म । एवं दाधित्थम् । माहित्थम् । कापोतं मांसम् । कापोतं सक्थि । एवं तैत्तिरम् । मायूरम् ॥

रजतसीसकंसलोहोदुम्बरवीभ्रदारुपीतदारुविभीतकरोहितकत्रिकण्टककण्टकारिभ्यश्च ॥ ७ ॥

रजतादिभ्यश्च षष्ठ्यन्तेभ्यस्तस्य विकारोऽवयव इत्यर्थयोरञ्प्रत्ययो भवति । रजतस्य विकारः अवयवो वा राजतः । सैसः । कांसः । लौहः । औदुम्बरः । वैभ्रदारवः । पैतदारवः । वैभीतकः । रौहितकः । त्रैकण्टकः । काण्टकार(क?)ः । ननु च विभीतकलोहितकत्रिकण्टकेभ्यः कोपधत्वात्, सीसलोहाभ्यामाद्युदात्तत्वादणि प्राप्ते अञ् विधीयताम् । रजतादिभ्यस्त्वनुदात्तादित्वात् उवर्णान्तत्वाच्च प्राप्त एव किमर्थं विधीयते । 'मयड् वेतयोर्भाषायामभक्षाच्छादनयोः' इति मयड्विकल्पं वक्ष्यति । स एतेभ्यो मा भूदिति ॥

तालादण् धनुषि ॥ ८ ॥

तालशब्दाद् धनुष्यभिधेयेऽण्प्रत्ययो भवति । वृद्धलक्षणस्य मयटोऽपवादः । तालस्य विकारस्तालं धनुः । धनुषीति किम् । तालमयं काण्डम् ॥

इन्द्रादालिसादिसायुधेभ्यः[1] ॥ ९ ॥

१. 'टि' ख. ग. पाठः.

इन्द्रशब्दात् परे ये आलिसादिसायुधशब्दास्तेभ्यस्तस्य विकारोऽवयव इत्यर्थयोरण्प्रत्ययो भवति .... .... .... .... ॥

बर्हिणचपचमरपीयुक्षागवेधुकाश्यामाकेभ्यः ॥ १० ॥

बर्हिणस्य विकारोऽवयवो वा बार्हिणः। प्राणिलक्षणेऽञि प्राप्ते। चपो नाम वंशविशेषस्तस्य विकारः चापः। अनुदात्तादित्वादञ्। चमरस्य विकारोऽवयवो वा चामरम्। प्राणित्वादञेव। पैयुक्षः। अनुदात्तादित्वादञेव। गवेधुका(श्यामाक)योः कोपधत्वादणि सिद्धे पुनर्वचनं मयड्विकल्पो मा भूदिति। गावेधुकश्चरुर्भवति। श्यामाकशब्दात् वृद्धलक्षणो मयट् मा भूदिति। श्यामाकानां विकारः अवयवो वा श्यामाक इति ॥

हेमार्थात् परिमाणे ॥ ११ ॥

हेमार्थवाचिनः प्रातिपदिकात् तस्य विकार इत्यर्थे परिमाणेऽभिधेयेऽण्प्रत्ययो भवति। हेम्नो विकारः हैमनो निष्कः। हाटकं जातरूपम्। कार्षापणं तापनीयम्। परिमाण इति किम्। हाटकमयी यष्टिः ॥

त्रपुजतुनोः षुक् च ॥ १२ ॥

त्रपु जतु इत्येताभ्यां तस्य विकार इत्यर्थे अण्प्रत्ययः षुक् चागमो भवति। ओरञोऽपवादः। त्रपुणो विकारस्त्रापुषम्। जातुषम् ॥

मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ॥ १३ ॥

प्रकृतिमात्राद् विकारेऽवयवे च भक्ष्याच्छादनवर्जिते भाषायां मयट्प्रत्ययो वा भवति। अश्ममयम्। आश्मनम्। भस्ममयं भास्मनम्। करीरमयं कारीरम्। शिरीषमयं शैरीषम्। दूर्वामयं दौर्वम्। मूर्वामयं मौर्वम्। भाषायामिति किम्। बैल्वः खादिरो वा यूपः स्यात्। अभक्ष्याच्छादनयोरिति किम्। मौद्गः सूपः। कार्पासमाच्छादनम्। अथैतयोरिति किमर्थम्। यावता विकारावयवौ प्रकृतावेव। ये विशेषप्रत्ययाः अञादयस्तद्विषयेऽपि यथा स्यात्। अरडुमयम्। देवदारुमयम्। दधित्थमयम्। कपित्थमयम्। कपोतमयम्। मयूरमयम्। राङ्कवमयम्। सीसमयम्। विभीतकमयम्। रोहितकमयम्। तर्कमयम्। न्यङ्कुमयम्। त्रपुमयम्। जतुमयम्। अथ रजतोदुम्बरकण्टकारिकगवेधुकश्यामाकेभ्यः कस्मान्न भवति। त्रिभ्यो-

ऽनुदात्तादित्वेनाञि गवेधुकाशब्दात् कोपधत्वेनाणि प्राप्तेऽपि पुनस्तयो-र्विधानात् । श्यामाकशब्दात् वृद्धात् पूर्वविप्रतिषेधेन । तदुक्तं पुरस्तादे-तेभ्यो मयण्मा भूदिति ॥

नित्यमेकाचः ॥ १४ ॥

एकाचः प्रातिपदिकात् यथासम्भवं विकारेऽवयवे चार्थे नित्यं मयट्प्रत्ययो भवति । वाङ्मयम् । त्वङ्मयम् । स्रुङ्मयम् । मृन्मयम् ॥

गोः पुरीषे ॥ १५ ॥

गोशब्दात् पुरीषेऽर्थे मयट्प्रत्ययो भवति । गोः पुरीषं गोमयम् । पुरीष इति किम् । गव्यं पयः । गव्यं सक्थि । 'गोरपि यद्' इति यदेव भवति । ननु च विकारावयवाविह प्रकृतौ । पुरीषं गोर्न वि-कारो नावयवः । एवमेतत् । किन्तु दोषधातुमलमूलं शरीरमिति विवक्षायां तात्स्थ्यात् तद्वदुपचार इति गोः पुरीषं पयश्च विकारो भवति ॥

छे ॥ १६ ॥

छविषये प्रातिपदिकात् विकारावयवयोर्नित्यं मयट्प्रत्ययो भवति । सालमयम् । आम्रमयम् ॥

शरदर्भतृणकुटीसोमबल्बजेभ्यः ॥ १७ ॥

शरदर्भादिभ्यो विकारेऽवयवे चार्थे नित्यं मयट्प्रत्ययो भवति । शरमयम् । दर्भमयम् । तृणमयम् । कुटीमयम् । सोममयम् । बल्बज-मयम् ॥

व्रीहेः पुरोडाशे ॥ १८ ॥

व्रीहिशब्दात् पुरोडाशे विकारे नित्यं मयट्प्रत्ययो भवति । बिल्वा-द्यणोऽपवादः । व्रीहिमयः पुरोडाशः । पुरोडाश इति किम् । व्रैह ओदनः व्रैही यवागूः ॥

तिलयवाभ्यामसंज्ञायाम् ॥ १९ ॥

तिल यव इत्येताभ्यामसंज्ञायां विकारावयवयोर्नित्यं मयट्प्रत्ययो भवति । तिलमयम् । यवमयम् । असंज्ञायामिति किम् । तैलम् । यावकः ॥

पिष्टात् ॥ २० ॥

पिष्टशब्दात् (अ)संज्ञायां विकारे नित्यं मयट्प्रत्ययो भवति । अणोऽपवादः । पिष्टमयम् ॥

संज्ञायां कन् ॥ २१ ॥

पिष्टशब्दात् संज्ञायां विकारे कन्प्रत्ययो भवति । पिष्टस्य सुवर्णादेर्विकारः पिष्टकः । ननु संज्ञायां कन् वक्ष्यत्येव । नैतदस्ति । स ह्यल्पादिष्वर्थेषु । अयं तु विकारे । ततश्च संज्ञायां तैलं यावकमित्यादिवदण् मा भूदिति पिष्टात् कन्विधानमर्थवद् भवति ॥

क्रीतवत् परिमाणात् ॥ २२ ॥

परिमाणवाचिनो विकारेऽर्थे क्रीत इव प्रत्ययविधिर्भवति । अणादीनामपवादः । तत्र 'प्राग्वतेष्ठञ्' इत्यत आरभ्य क्रीतार्थे ये ठञ्प्रत्ययान्ताः ते परिमाणाद् भवन्ति । तत्र यथा शतेन क्रीतः शत्यः शतिकः, तथा शतस्य विकारः शत्यः शतिकः, सहस्रस्य साहस्रः । यथा द्वाभ्यां निष्काभ्यां क्रीतः द्विनिष्कः द्वैनि(?)ष्किकः इति 'द्वित्रिबहुवादेर्निष्कविस्ताद्' इति विकल्पो न लुक्, तथा द्वयोर्निष्कयोर्विकारः द्विनिष्कः (द्वैनि ? द्विनै)ष्किकः इत्यत्रापि भवति ॥

शम्याष्ट्लञ् ॥ २३ ॥

शमीशब्दात् विकारावयवयो(ष्फ ? ष्ट्ल)ञ्प्रत्ययो भवति । शम्या विकारः अवयवो वा शामीली (शमीली ?) । (ष ? ट)कारो ङीबर्थः ॥

उष्ट्राद् वुञ् ॥ २४ ॥

उष्ट्रशब्दात् विकारावयवयोर्वुञ्प्रत्ययो भवति । उष्ट्रस्य विकारोऽवयवो वा औष्ट्रकम् ॥

उमोर्णाभ्यां वा ॥ २५ ॥

उमा ऊर्णा इत्येताभ्यां विकारावयवयोर्वुञ्प्रत्ययो वा भवति । औमकम् औमम् । और्णकम् और्णम् ॥

एणीकोशाड्ढञ् ॥ २६ ॥

एणीकोशाभ्यां विकारावयवयोर्ढञ्प्रत्ययो भवति । ऐणेयं मांसम् । ऐणेयं सक्थि । पुंसस्तावत् प्राणिलक्षणोऽञेव भवति । ऐणं मांसम् ऐणं सक्थि । कोशस्य विकारः कौशेयं वस्त्रं सूत्रं वा । अनभिधानाद् भस्मादे- ........... भवति । अप्राण्योषधिवृक्षत्वादवयवे न भवति ॥

पुरुषाद् वधे च ॥ २७ ॥

पुरुषशब्दाद् विकारावयवयोर्वधे चार्थे ढञ्प्रत्ययो भवति । पुरुषस्य विकारोऽवयवो वधो वा पौरुषेयः ॥

ह्योगोदोहात् खञ् हियङ्गुश्चास्य संज्ञायाम् ॥ २८ ॥

ह्योगोदोहशब्दात् विकारेऽभिधेये संज्ञायां खञ्प्रत्ययो हियङ्गुश्चास्यादेशो भवति । ह्योगोदोहस्य विकारो हैयङ्गवीनं नवनीतं घृतं वा । संज्ञायामिति । ह्योगोदोहस्य विकार उदश्वित् ह्यौगोदोहमित्यणेव भवति ॥

अपो यञ् वा ॥ २९ ॥

अप् शब्दाद् विकारे यञ्प्रत्ययो वा भवति । एकाज्लक्षणस्य मयटोऽपवादः । अपां विकारः आप्यम् अम्मयम् ॥

पयसो यत् ॥ ३० ॥

पयसो विकारे यत्प्रत्ययो भवति । पयस्यः ॥

द्रोश्च ॥ ३१ ॥

द्रुशब्दाद् विकारावयवयोर्यत्प्रत्ययो भवति । द्रव्यम् ॥

माने वयः ॥ ३२ ॥

द्रुशब्दान्माने विकारे वयप्रत्ययो भवति । द्रुवयं मानम् ॥

फले लुक् ॥ ३३ ॥

विकारावयवयोरुत्पन्नस्य प्रत्ययस्य फले तद्विशेषे विवक्षिते लुक् भवति । आमलक्याः फलमामलकम् । वृद्धलक्षणस्य मयटो लुक् ।

कुवल्याः फलं कुवलम् । बदर्याः बदरम् । अनुदात्तादिलक्षणस्याञो लुक् । भल्लातक्याः भल्लातकम् । कोपधलक्षणस्याणो लुक् ॥

प्लक्षन्यग्रोधाश्वत्थेङ्गुदीवेणुबृहतीशिग्रुकर्कन्धुभ्योऽण् [1] ॥

प्लक्षादिभ्यः फले विकारेऽवयवे वा अणप्रत्ययो भवति । अ(न्त ? ञ्)-लुकोऽपवादः । प्लक्षस्य फलं प्लाक्षम् । नैयग्रोधम् । आश्वत्थम् । ऐङ्गुदम् । वैणवम् । बार्हतम् । शैग्रवम् । कार्कन्धवम् ॥

जम्ब्वा वा ॥ ३५ ॥

जम्बूशब्दात् फले विकारेऽणप्रत्ययो वा भवति । अ(न्त ? ञ्)लुकोऽपवादः । जम्ब्वाः फलं जाम्बवम् ॥

लुप् च ॥ ३६ ॥

जम्ब्वाः फलेऽणो लुप् च भवति । जम्बूः ॥

हरीतकीपथ्याम्लिकाचिञ्चाद्राक्षामृद्वीकापिप्पलीकणाकोशातकीश्वेतपाक्यादिभ्यः ॥ ३७ ॥

हरीतक्यादिभ्यः फले विकारे समुत्पन्नस्याञादेर्लुप् भवति । हरीतकी । पथ्या । अम्लिका । चिञ्चा । द्राक्षा । मृद्वीका । पिप्पली । कणा । कोशातकी । श्वेतपाकी । आदिग्रहणाद्धौतैलाकर्कारुकर्कटीप्रभृतयो भवन्ति ॥

फलपाकशोषिभ्यश्च गोधूमादिभ्यः ॥ ३८ ॥

फलपाकेन शुष्यन्ति ये गोधूमादयस्तेभ्यः फले विकारे चावयवे चोत्पन्नस्य प्रत्ययस्य लुप् भवति । गोधूमाः । मसूराः । मुद्गाः । माषाः । यवाः । तिलाः । कुलुत्था इति ॥

पुष्पमूलेषु मालतीशेफालिकामल्लिकानवमालिकांशुमतीबृहतीविदारीहरिद्राभ्यः ॥ ३९ ॥

पुष्पेषु मूलेषु च विकारावयवेषु मालत्यादिभ्यो विहितस्य प्रत्ययस्य लुप् भवति । मालत्याः पुष्पं मालती । शेफाली । मल्लिका । अंशुमत्या

---

[1] 'तन्नुभ्यो' क पाठः.

मूलमंशुमती । बृहती । विदारी । हरिद्रा । आदिग्रहणान्माधवीमुस्तादयो भवन्ति । फलितस्य पुष्पितस्य वा वृक्षादेः फलं पुष्पं वा विकारोऽवयवश्च भवति । पल्लवितस्यैव पल्लवः, मूलं चारम्भकत्वादवयव एव भवति ॥

न वरणपाटलैरण्डाल्वादिभ्यः ॥ ४० ॥

वरणादिभ्यः पुष्पमूलयोर्विकारयोरुत्पन्नस्य प्रत्ययस्य लुप् (वा ?)न भवति । वरणस्य पुष्पाणि वारणानि । पाटलायाः पाटलानि । एरण्डस्य मूलानि ऐरण्डानि । आल्वाया मूलानि (आल्वानि ।) आदिग्रहणाद् यथादर्शनमन्येऽपि भवन्ति ॥

करवीराशोकचम्पककदम्बादिभ्यो लुक् ॥ ४१ ॥

करवीरादिभ्यः पुष्पे विकारेऽवयवे वा समुत्पन्नस्य प्रत्ययस्य लुग् भवति । करवीरस्य पुष्पं करवीरम् । अशोकम् । चम्पकम् । कदम्बम् । आदिग्रहणात् कर्णिकारकोविदारादीनि भवन्ति ।

शिरीषह्रीबेरादिभ्यो वा ॥ ४२ ॥

शिरीषह्रीबेरादिभ्यः पुष्पमूलयोर्विकारावयवयोरुत्पन्नस्य लुग्वा भवति । शिरीषस्य पुष्पाणि शिरीषाणि । शैरीषाणि । ह्रीबेरस्य मूलानि ह्रीबेराणि । ह्रैबेराणि । आदिग्रहणाद् यथादर्शनमन्येऽपि भवन्ति ॥

कंसीयपरशव्ययोर्यञञौ लुक् च ॥ ४३ ॥

कंसाय इदं कंसीयम् । परशवे इदं परशव्यम् । 'तदर्थं विकृतेः प्रकृतावि'ति कृतयोश्छयतोः कंसीयपरशव्यशब्दाभ्यां तस्य विकार इत्यस्मिन्नर्थे यञञौ प्रत्ययौ भवतः । तत्सन्नियोगेन च छयतोर्लुग् भवति । कंसीयस्य विकारः कांस्यम् । परशव्यस्यायसो विकारः पारशवः ॥

न द्विरद्रुवयगोमयफलेभ्यः ॥ ४४ ॥

द्रुवयगोमयफलवर्जितेभ्यः प्रातिपदिकेभ्यो विकारावयवयोर्द्विः प्रत्ययो (न) भवति । कपोतस्य विकारः अवयवो वा कापोतः । 'तस्य विकारः अवयवो वा' इति वृद्धान्मयणन भवति । एवं बैल्वः । बाद्कार्कवः । ऐणेयः । शामीलः । औष्ट्रकः । कांस्यः । पारशव इति । बाद्

वयगोमयफलेभ्य इति किम् । द्रौवयं खण्डम् । गोमयं भस्म । कापित्थो रसः । कथं कपोतस्य मांसं कापोतम् । तस्य विकारः कापोतो रसः । पलाशस्यावयवः पालाशी शाखा तस्या अवयवः पालाशी समिदिति । विकारेऽपि प्रकृतिशब्दो वर्तते । यथा मुद्गैः शालीन् भुङ्क्ते । मुद्गविकारैः शालिविकारानिति गम्यते । गोभिस्सन्नद्धो वहति । गोविकारैश्चर्मभिरिति गम्यते । अवयवेऽप्यवयविशब्दो वर्तते । पूर्वे पञ्चालाः । ग्रामो दग्धः पटो दग्ध इति । तत्र विकारवृत्तेः प्रकृतिशब्दात् अवयववृत्तेरवयविशब्दाच्च प्रत्ययो भवति । विकारविकारोऽपि विकार एव । अवयवावयवोऽप्य-वयव एवेति ॥

प्राग्वहतेष्ठक् ॥ ४५ ॥

'तद्वहति युगप्रासङ्गाभ्यामि'ति वक्ष्यति । प्रागेतस्माद्वहतिसंशब्द-नाद् येऽर्थास्तेषु ठक्प्रत्ययो वेदितव्यः । अक्षैर्जितमाक्षिकम् । दध्ना संस्कृतं दाधिकमित्यणादीनां समानामुत्सर्गाणां पूर्णो विधिः ॥

तेन जितं करणात् ॥ ४६ ॥

तेनेति करणतृतीयान्तात् जितमित्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । अक्षैर्जितमाक्षिकम् । शलाकाभिः शालाकिकम् । करणादिति किम् । देव-दत्तेन जितम् । करणमिह प्रसिद्धं गृह्यते । तेन सेनया जितमित्यादौ प्रत्ययो न भवति ॥

जयति दीव्यति खनति ॥ ४७ ॥

तेनेति करणतृतीयासमर्थात् जयति दीव्यति खनतीत्येतेष्वर्थेषु ठक्प्रत्ययो भवति । अक्षैर्जयति दीव्यति आक्षिकः । शालाकिकः । खनि-त्रेण खनति खानित्रिकः । कौद्दालिकः । क्रियाप्रधानत्वेऽप्याख्यातानां तद्धितः स्वभावात् साधनप्रधानः । प्रसिद्धकरणग्रहणादङ्गुल्यादौ न भवति ॥

संस्कृतम् ॥ ४८ ॥

तेनेति करणतृतीयासमर्थात् संस्कृतमित्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । सत उत्कर्षाधानं संस्कारः । दध्ना संस्कृतं दाधिकम् । मारिच-कम् ॥

कुलुत्थकोपधादण् ॥ ४९ ॥

कुलुत्थात् ककारोपधेभ्यश्च करणतृतीयान्तेभ्यः संस्कृतमित्येतस्मिन्नर्थेऽण्प्रत्ययो भवति । ठकोऽपवादः । कौलुत्थम् । तैत्तिडीकम् । दार्द्दुरुकम् ॥

तरति ॥ ५० ॥

करणतृतीयान्तात् तरतीत्यस्मिन्नर्थे ठक्प्रत्ययो भवति । उडुपेन तरत्यौडुपिकः । काण्डप्लवेन काण्डप्लविकः ॥

गोपुच्छाट्ठञ् ॥ ५१ ॥

गोपुच्छशब्दात् तरतीत्येतस्मिन्नर्थे ठञ्प्रत्ययो भवति । गौपुच्छिकः । स्वरे विशेषः ॥

द्व्यज्नौभ्यां ठन् ॥ ५२ ॥

द्व्यचः प्रातिपदिकान्नौशब्दाच्च तेन तरतीत्येतस्मिन्नर्थे ठन्प्रत्ययो भवति । घटेन तरति घटिकः । बाहुकः । बाहुका । नाविकः नाविका ॥

चरति ॥ ५३ ॥

तेनेति तृतीयान्ताच्चरतीत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । चरतिर्गतौ भक्षणे च वर्तते । औष्ट्रिकः । शाकटिकः । (पू ? पौ)टिकः । शार्ङ्गबेरिकः ॥

आकर्षात् ष्ठल् ॥ ५४ ॥

आकर्षशब्दात् तेन चरतीत्यर्थे ष्ठल्प्रत्ययो भवति । आकर्षेण चरति आकर्षिकः । षकारो ङीषर्थः । आकर्षिकी । लकारः स्वरार्थः । आकर्ष इति हेमपरीक्षार्थ उपल उच्यते ॥

पर्पाश्वाश्वत्थरथजाल[1]व्याल[1]व्यासपादेभ्यः ष्ठन् ॥ [॥ ५५ ॥

पर्पादिभ्यस्तेन चरतीत्येतस्मिन्नर्थे ष्ठन्प्रत्ययो भवति । षकारो ङीषर्थः । पर्पिकः पर्पिकी । अश्विकः अश्विकी । अश्वत्थिकः । रथिकः ।

---

१. 'व्याणसुख' ख. ग. पाठः.

जालिकः। व्यालिकः। व्यासिकः। पादिकः। 'हिमहतिष्वत्काषिवु(?) पद्' इति पादस्य पद्भावः॥

श्वगणाट्ठञ् च॥ ५६॥

श्वगणशब्दात् तेन चरतीत्येतस्मिन्नर्थे ठञ्प्रत्ययो भवति। चकारात् ष्ठन् च। श्वगणेन चरति श्वागणिकः। श्वागणिकी। 'श्वादेरि(ञ् ? ञि)' इति द्वारादिकार्यप्रतिषेधात् आदिवृद्धिर्भवति। श्वगणिकः। श्वगणिकी॥

वेतनवाहार्धवाहपादप्रेषणसुखशय्यारिफग्वेशशक्तिभ्यो जीवति॥ ५७॥

वेतनादिभ्यः तेन जीवतीत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति। वेतनेन जीवति वैतनिकः। वाहिकः। आर्धवाहिकः। पादिकः। प्रैषणिकः। सौखिकः। शाय्यिकः। स्फैजिकः। वैशिकः। शाक्तिकः॥

उपाद् देशवेशहस्तस्थानेभ्यः॥ ५८॥

उप(पूर्वेभ्यः) देशादिभ्यः प्रातिपदिकेभ्यस्तेन जीवतीत्यस्मिन्नर्थे ठक्प्रत्ययो भवति। उपदेशेन जीवति औपदेशिकः। औपवेशिकः। औपहस्तिकः। औपस्थानिकः॥

व्यस्ताच्च धनुर्दण्डात्॥ ५९॥

धनुर्दण्डशब्दात् व्यस्तात् समस्ताच्च तेन जीवतीत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति। धनुषा जीवति धानुष्कः। दाण्डिकः। धानुर्दण्डिकः॥

क्रयविक्रयाट्ठन्॥ ६०॥

क्रयविक्रयशब्दाद् व्यस्तात् समस्ताच्च तेन जीवतीत्येतस्मिन्नर्थे ठ(क् ? न्)प्रत्ययो भवति। क्रयेण जीवति क्रयिकः। विक्रयिकः। क्रयविक्रयिकः॥

वस्नात्॥ ६१॥

वस्नशब्दात् तेन जीवतीत्येतस्मिन्नर्थे ठन्प्रत्ययो भवति । वस्नेन जीवति वस्निकः ॥

आयुधाच्छ च ॥ ६२ ॥

आयुधशब्दात् तेन जीवतीत्येतस्मिन्नर्थे छप्रत्ययो भवति । चकाराट्ठंश्च । आयुधेन जीवति आयुधीयः आयुधिकः ॥

व्रातात् खञ् ॥ ६३ ॥

व्रातशब्दात् तेन जीवतीत्येतस्मिन्नर्थे खञ्प्रत्ययो भवति । नानाजातीया अनियतवृत्तय उत्सेधजीविनः सङ्घा व्रातास्तत्साहचर्यात् तत्कर्मापि व्रातं, तेन जीवति व्रातीनः । ञकारः स्वरार्थः वृद्ध्यर्थश्च । तेन(ती?) व्रातीनाभा(र्या ? र्य) इति 'तद्धितोऽवृद्धिहेतुररक्तविकार' इति पुंवद्भावप्रतिषेधो भवति ॥

उत्सङ्गोडुपो[1]ट्टुपोत्पुटपिटकपिटाकेभ्यो हरति ॥ ६४ ॥

उत्सङ्गादिभ्यस्तेन हरतीत्यस्मिन्नर्थे ठक्प्रत्ययो भवति । उत्सङ्गेन हरति औत्सङ्गिकः । औडुपिकः । औट्टुपिकः । औत्पुटिकः । पैटकिकः । पैटाकिकः ॥

भस्त्राभरटभरणशीर्षभारांसभारेभ्यः ष्ठन् ॥ ६५ ॥

भस्त्रादिभ्यस्तेन हरतीत्यस्मिन्नर्थे ष्ठन्प्रत्ययो भवति । भस्त्रया हरति भस्त्रिकः । भरटिकः । भरणिकः । शीर्षभारिकः । अंसभारिकः । केचिच्छीर्षेभारांसेभारेति पठन्ति । शीर्षेभारिकः । 'सप्तम्या बहुलम्' इत्यलुक् । षकारो ङीषर्थः । भस्त्रिकी भरटिकी ॥

विवधवीवधाद्वा ॥ ६६ ॥

विवध वीवध इत्येताभ्यां तेन हरतीत्येतस्मिन्नर्थे ष्ठन्प्रत्ययो (वा) भवति । विवधिकः विवधिकी । वैवधिकः वैवधिकी । वीवधिकः वीवधिकी । वैवधिकः वैवधिकी ॥

---

1. 'पोत्पु' क. पाठः.

अण् कुटिलिकायाः[1] ॥ ६७ ॥

कुटि(लि)काशब्दात् तेन हरतीत्येतस्मिन्नर्थेऽण्प्रत्ययो भवति । कुटिलिकाशब्देन कुटिला गतिरग्रे वक्रा च लोहादिमयी सन्दंशाख्या यष्टिरुच्यते । कुटिलिकया हरति कौटिलिको मृगः । कुटिलिकया हरत्यङ्गारान् कर्मारः ॥

अक्षद्यूतगतानुगतगतागतयातोपयातपादस्वेदनकण्टकमर्दनेभ्यो निर्वृत्ते ॥ ६८ ॥

अक्षद्यूतादिभ्यस्तेन निर्वृत्तमित्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । अक्षद्यूतेन निर्वृत्तमाक्षद्यूतिकम् । एवं गातानुगतिकम् । गातागातिकम् । यातोपयातिकम् । पादस्वेदनिकम् । काण्टकमर्दनिकम् ॥

जङ्घायाः प्रहृतप्रहाराभ्याम् ॥ ६९ ॥

जङ्घायाः परौ यौ प्रहृतप्रहारशब्दौ तदन्ताभ्यां प्रातिपदिकाभ्यां तेन निर्वृत्तमित्यस्मिन्नर्थे ठक्प्रत्ययो भवति । जङ्घाप्रहृतेन निर्वृत्तं जाङ्घाप्रहृतिकम् । जाङ्घाप्रहारिकम् ॥

भावादिमप् ॥ ७० ॥

भाववाचिनस्तेन निर्वृत्तमित्येतस्मिन्नर्थे इमप्प्रत्ययो भवति । पाकेन निर्वृत्तं पाकिमम् । (मे ? से)किमम् । कुट्टिमम् । राटिमम् ॥

क्त्रेः ॥ ७१ ॥

'ड्वितः क्त्रिः' इत्युक्तं, तदन्तात् तेन निर्वृत्तमित्यर्थे इमप्प्रत्ययो भवति । करणेन निर्वृत्तं कृत्रिमम् । भृत्रिमम् । पक्त्रिमम् । उप्त्रिमम् । पूर्वेण सिद्धे पुनर्विधानं तस्य केवलस्य प्रयोगो मा भूदिति ॥

अपमित्यात् कक् ॥ ७२ ॥

अपमित्येति ल्यबन्तात् निर्वृत्तमित्यस्मिन्नर्थे कक्प्रत्ययो भवति । अपमित्य निर्वृत्तम् आपमित्यकम् । अपमयेन निर्वर्त्तितमित्यर्थः ॥

---

1. 'टिका' ग. पाठः.

याचितात् कन् ॥ ७३ ॥

याचितशब्दात् तेन निर्वृत्तमित्यस्मिन्नर्थे कन्प्रत्ययो भवति। याचितेन निर्वृत्तं याचितकम् ॥

संसृष्टम् ॥ ७४ ॥

तेनेति तृतीयासमर्थात् संसृष्टमित्येतस्मिन्नर्थे ठक्प्रत्ययो भवति। संसृष्टं संपृक्तं संभिन्नमित्यर्थः। दध्ना संसृष्टं दाधिकम् ॥

चूर्णादिनिः ॥ ७५ ॥

चूर्णशब्दात् तेन संसृष्टमित्येतस्मिन्नर्थे इनिप्रत्ययो भवति। चूर्णेन संसृष्टाः चूर्णिनः अपूपाः। चूर्णिन्यो धानाः ॥

लवणाल्लुक् ॥ ७६ ॥

लवणशब्दात् तेन संसृष्टमित्यर्थे ठको लुग् भवति। लवणेन संसृष्टः लवणः सूपः। लवणा यवागूः ॥

मुद्गादण् ॥ ७७ ॥

मुद्गशब्दात् तेन संसृष्टमित्यर्थे अण्प्रत्ययो भवति। ठकोऽपवादः। मुद्गैः संसृष्टः मौद्गः। मौद्गी यवागूः ॥

उपसिक्तं व्यञ्जनेभ्यः ॥ ७८ ॥

व्यञ्जनवाचिभ्यस्तेनोपसिक्तमित्येतस्मिन्नर्थे ठक्प्रत्ययो भवति। दध्ना उपसिक्त ओदनः दाधिकः। सौपिकः। गौड्विकः। पायसिकः ॥

ओजस्सहोम्भसा वर्तते ॥ ७९ ॥

ओजःप्रभृतिभ्यस्तृतीयान्तेभ्यो वर्तत इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति। ओजसा वर्तते औजसिकः। सहसा साहसिकः। अम्भसा आम्भसिकः ॥

तं प्रत्यनुभ्यामीपलोमकूलेभ्यः ॥ ८० ॥

प्रत्यनुभ्यां परे ये ईपलोमकूलशब्दास्तदन्तेभ्यः प्रातिपदिकेभ्यस्तमिति द्वितीयासमर्थेभ्यो वर्तत इत्यस्मिन्नर्थे ठक्प्रत्ययो भवति। प्रतीपं वर्तते प्रातीपिकः। आन्वीपिकः। (आ १) प्रातिलोमिकः। आनुलोमिकः। प्राति-

कूलिकः आनुकूलिकः । नन्वकर्मको वृतिः तत् कथमस्य कर्माभिसम्बन्धः । क्रियाविशेषणमकर्मकाणां कर्म भवति । तमिति पुल्लिङ्गस्तत्रसन्देहार्थः । सूत्रे(भि?) सङ्ख्यालिङ्गकालाः स्वातन्त्र्येण भवन्ति ॥

परेर्मुखपार्श्वाभ्याम् ॥ ८१ ॥

परेः परौ यौ मुखपार्श्वशब्दौ तदन्तात् प्रातिपदिकाद् द्वितीयासमर्थात् वर्तत इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । परिमुखं वर्तते पारिमुखिकः । परिपार्श्वं वर्तते पारिपार्श्विकः ॥

उञ्छति ॥ ८२ ॥

तमिति द्वितीयासमर्थात् उञ्छतीत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । बदराण्युञ्छति बादरिकः । श्यामाकिकः ॥

रक्षति ॥ ८३ ॥

तमिति द्वितीयासमर्थाद् रक्षतीत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । समाजं रक्षति सामाजिकः । सान्निवेशिकः ॥

शब्ददर्दुरं करोति ॥ ८४ ॥

शब्ददर्दुराभ्यां द्वितीयान्ताभ्यां करोतीत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । शब्दं करोति शाब्दिकः । दार्दुरिकः ॥

पक्षिमत्स्य[1]मृगाख्याद्धन्ति ॥ ८५ ॥

पक्षिणो मत्स्या मृगा इति य आख्यायन्ते तद्वाचिभ्यः शब्देभ्यो द्वितीयान्तेभ्यो हन्तीत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । पाक्षिकः । मात्स्यिकः । मार्गिकः । आ(दि?ख्या)ग्रहणात् पर्यायेभ्यो विशेषेभ्यश्च भवति । शाकुनिकः । मायूरिकः । मैनिकः । शाफरिकः । हारिणिकः । सौकरिकः । अथाजिह्मान् हन्ति अनिमिषान् हन्ति इति कस्मान्न भवति । नैतन्मत्स्येत्यस्य स्वरूपं न विशेषो न पर्यायः । अपि (तु) साधारणं विशेषणं यथा जिह्मगा भुजगाः अनिमिषा देवा इति ॥

परिपन्थं तिष्ठति च ॥ ८६ ॥

---

१. 'त्स्यमीनम्' ख. ग पाठः.

परिपन्थशब्दाद् द्वितीयान्तात् तिष्ठति हन्ति चेत्यनयोरर्थयोष्ठक् प्रत्ययो भवति। परिपन्थं तिष्ठति हन्ति वा पारिपन्थिकः। चौरः। अस्मादेव निपातनात् परिपन्थिशब्दोऽव्ययीभावे तत्पुरुषे वा (सा १) परिपन्थार्थे साधुः॥

## माथान्तपदव्यनुपदाक्रन्दान् धावति॥ ८७॥

माथान्तेभ्यः पदव्यादिभ्यश्च द्वितीयान्तेभ्यो धावतीत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति। दण्डमाथं धावति दाण्डमाथिकः। शौल्कमाथिकः। माथशब्दः पथिपर्यायः। दण्ड इव माथो दण्डमाथः ऋजुमार्ग उच्यते। पदवीं धावति पादविकः। अनुपदमानुपदिकः। आक्रन्दमाक्रन्दिकः॥

## पदान्तप्रतिकण्ठार्थललामं गृह्णाति॥ ८८॥

पदोत्तरपदात् प्रतिकण्ठादिभ्यश्च द्वितीयान्तेभ्यो गृह्णातीत्यस्मिन्नर्थे ठक्प्रत्ययो भवति। पूर्वपदं गृह्णाति पौर्वपदिकः। औत्तरपदिकः। प्रातिकण्ठिकः। आर्थिकः। लालामिकः॥

## गर्ह्यम्॥ ८९॥

द्वितीयान्ताद् गृह्णातीत्यस्मिन्नर्थे ठक्प्रत्ययो भवति। यत् तत् गृह्णाति गर्ह्यं चेत् तद् भवति। द्विगुणं गृह्णाति द्वैगुणिकः। त्रैगुणिकः॥

## वृद्धेर्वृधुष्॥ ९०॥

वृद्धिशब्दाद् द्वितीयान्ताद् गृह्णातीत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति। वृद्धिशब्दस्य वृधुष् इत्ययमादेशो भवति। वृद्धिं गर्ह्यां गृह्णाति वार्धुषिकः॥

## दशैकादशकुसीदाभ्यां ष्ठन्॥ ९१॥

दशैकादशशब्दात् कुसीदाच्च गर्ह्यं गृह्णातीत्येतस्मिन्नर्थे ष्ठन्प्रत्ययो भवति। दशभिरेकादश दशैकादश तान् गृह्णाति दशैकादशिकः। दशैकादशिकी। षकारो ङीषर्थः॥

## धर्माधर्मं चरति॥ ९२॥

धर्माधर्मशब्दाभ्यां द्वितीयान्ताभ्यां चरतीत्यस्मिन्नर्थे ठक्प्रत्ययो भवति। धार्मिकः। अधार्मिकः॥

